गोमिन्। दिग्वस्त्रो देवनन्दी। भर्तृहरिर्वाक्यपदीयप्रकीर्णकयोः कर्त्ता महाभाष्यत्रिपाद्या व्याख्याता च। वामनोऽविश्रान्तविद्याधरव्याकरणकर्त्ता। भोजः सरस्वतीकण्ठाभरणकर्त्ता। मुख्यशब्दस्यादिवचनत्वाच्छिवस्वामिपतञ्जलिकात्यायनप्रभृतयो लभ्यन्ते। दीपककर्त्ता श्रीभद्रेश्वरसूरिः। प्रवरश्चासौ दीपककर्त्ता च प्रवरदीपककर्त्ता। प्राधान्यं चास्याधुनिकवैयाकरणापेक्षया॥ निषेवितं पदद्वितयं चरणाम्बुजद्वयं सुप्तिङ्लक्षणं च येषां ते तथोक्ताः॥ इदानीं समस्तशास्त्रोपलम्भपूर्वकं स्वग्रन्थसारतां दर्शयति।

विदित्वा शब्दशास्त्राणि (१) प्रयोगानुपलक्ष्य च।
स्वशिष्यप्रार्थिताः कुर्मो गणरत्नमहोदधिम्॥३॥

शब्दशास्त्राणीति (२) पाणिन्यादिविरचितानि सोपनिबन्धानि। प्रयोगान् महाकाव्योपनिबद्धानि लक्ष्याणि। लक्ष्यं लक्षणं च सम्यग् ज्ञात्वा गणरत्नमहोदधिनामानं ग्रन्थं स्वविनेयैरभ्यर्थिताः कुर्मः पद्यबन्धेन रचयामः (३)॥

## अथ गणानाह (४)।

च वा हाहैवैवं नह नहि नवा नो चन हि है
स्वधा स्वाहा रै वै यदि यदुत नूनं नहि कमः।
उताहो हा ही हे किमुत यदि नामेव तु तथा
भगो भो हंहो हो इति ह नु सहामा ननु नञः॥४॥

च। इत्यन्वाचयसमाहारेतरेतरसमुच्चयविनियोगतुल्ययोगितावधारणहेतुषु (५)॥ भिक्षामट गां चानय॥ पाणी च पादौ च। पाणिपादम्॥ प्लक्षश्च न्यग्रोधश्च। प्लक्षन्यग्रोधौ॥ पचति च पठति च चैत्रः॥ अहं च त्वं च पुत्र! गच्छावः॥ कृत च गर्वाभिमुखं मनस्त्वया। किमन्यदेवं निहताश्च नो द्विषः॥

अतीतः पन्थानं तव च महिमा वाङ्मनसयो—
रतद्व्यावृत्त्यायं चकितमभिधत्ते श्रुतिरपि।

---

(१) सर्वशास्त्राणि—इति पा०। (२) सर्वशास्त्राणि—इति—पा० (३) ग्रन्थस्वशिष्यार्थं विदधमहइत्यर्थः। स्वशिष्यैः कुमारपालहरिपालमुनिचन्द्रप्रभृतिभिः प्रार्थिताः॥ (४) अधुनाव्ययमासान् गणानाह। (५) सर्वत्राभिधेयक्रमेणोदाहरणानि।

स कस्य स्तोतव्यः कतिविधगुणः कस्य विषयः—

पदे त्वर्वाचीने पतति न मनः कस्य न वचः ॥

हे देव यस्तव महिमा स वाङ्मनसयोः पन्थानं मार्गमतीत एव। उल्लङ्घितवानेवेत्यर्थः। ग्रामश्च गन्तव्यः शीतञ्च। शीतात् कथं गम्यतइत्यर्थः॥ पादपूरणेऽपि। भीमः पार्थस्तथैव च॥ वा विकल्पानवक्लृप्त्युपमानद्वन्द्वसमुच्चयेषु॥ यवैर्वा व्रीहिभिर्वा यजेत॥ शस्त्रवेदमधिगम्य तत्त्वतः कस्य वेह भुजवीर्य्यशालिनः॥ जातां मन्ये तुहिनमथितां पद्मिनीं वान्यरूपाम्॥ सा वा शम्भोस्तदीया वा मूर्त्तिर्जलमयी मम। न तृतीयेत्यर्थः॥ वायुर्वा दहनो वा॥ ह। अह। इति विनियोगे। त्वं ह ग्रामं गच्छ। अयमहारण्यं गच्छतु॥ आचारातिक्रमेऽपि। स्वयं ह ओदनं भुङ्क्ते। उपाध्यायं सक्तून् पाययति॥ स्वयमह रथेन याति। उपाध्यायं पदातिं गमयति॥ हः पादपूरणेऽपि। इति ह स्माहुराचार्य्याः। अह शब्दः पूजायामपि भवति। यथा। अह माणवको भुङ्क्ते॥ क्षेमार्थेऽपि शाश्वतः॥ एव। इति नियमानियमौपम्योत्प्रेक्षासु। अहमेव स्वयमिदं वदामि॥ अद्येव॥ इहेव॥ औस्तवैव मेऽस्तु॥ तमेव मेनादुहितुः कथञ्चिद्विवाहदीक्षातिलकं चकार। तमेवेति मनोरथमिवेत्यर्थः॥ क्वेव भोक्ष्यसे। इत्यनवक्लृप्ताविरयेके॥ एवमिति प्रकृतपरामर्शप्रकारे वार्थोपदेशनिर्देशनिश्चयाङ्गीकारेवार्थेषु॥ एववादिनि देवर्षौ॥ एवं कुरु॥ मैवं संस्थाः॥ अग्निरेवं विप्रः॥ एवं पठ॥ एवं तावत्॥ एवमेतत् कः सन्देहः॥ एवं कुर्मः॥ आहार्यमेवं मृगनाभिपत्त्रमियानशेषेण तयोर्विशेषः॥ नह। इति प्रत्यारम्भे। नह भोक्ष्यस इति॥ नहि। नवा। नो। इति निषेधे॥ नहि नहि महिमानं प्राप्य तृप्यन्ति भूपाः॥ यद्वा। अभ्यासो हि कर्मणां कौशलमावहति। नहि सकृन्निपातमात्रेणोदबिन्दुरपि ग्रावणि निम्नतामादधाति। असकृदित्यर्थः॥ नवा कुर्य्यात्॥ व्यञ्जनमस्वरं परं वर्णं नयेत्। यद्वा। अविप्र इव भाषसे। विप्रवन्न ब्रूष इत्यर्थः॥ दददपि गिरमन्तर्बुध्यते नो मनुष्यः॥ चनेति चिदर्थे। किमो विभक्तिप्रत्ययान्तात् परएव चास्य प्रयोगो भवति। तद्यथा। कश्चन। काचन। किंचन। केचन। क्वचन। कदाचन। कथंचनेति॥ हि। इति स्फुटार्थनिश्चयहेतुषु। कोह्यबालिशो हस्तगतं पादगतं कुर्य्यात्॥ दाक्ष्यं हि सद्यः फलदं यदग्रतश्चखाद दासेरयुवा वनावलीम्॥

किंस्विदिति वितर्के । स्थाणुरयं किंस्वित् पुरुषः ॥ प्रत्युत । इत्युक्तवैपरीत्ये । न दोषः पुनरुक्तोऽपि प्रत्युतेयमलङ्क्रिया ॥ यच्च । इत्येतदनवक्लृप्त्यमर्षगर्हाश्चर्येषु । नावकल्पयामि । न मर्षयामि । गर्हामहे । आश्चर्यं यच्च तत्रभवान् वृषल याजयेदिति ॥ कच्चन । इति कामप्रवेदने । कच्चन जीवति ते माता ॥ न । इति निषेधोपमानयोः । आसवः प्रतिपद प्रमदानां नैकरूपरसतामिव भेजे ॥ मृगो न भीम इति । अयमुपमानवाची छन्दस्येव । स चोपमानपदात्पर एव ॥ कमित्यनर्थकः पादपूरणे(१) । शिशिरं जीवनाय कम् ॥ सत्रा । समम् । साकम् । सार्धमिति सहवत् (२) ॥ जातु । इति कदाचिदर्थे । न जातु कामः कामानामुपभोगेन शाम्यति ॥ कृतमिति निवारणनिषेधयोः । वत्स कृत साहसेन ॥ कृतं पुरुषशब्देन जातिमात्रावलम्बिना ॥ यदा । इति हेतौ । यदा जनैः सर्वगतस्त्वमुच्यस इति ॥ वदि । इति कृष्णपक्षे ॥ वदिति वियोगपादपूरणयोः ॥ वडिति टान्तं प्रशंसायां श्रीभोजः ॥ ऊमिति स्त्रीणां विकारवचने । ऊं नाहमेवं वेद्मि ॥ आहो । इति वितर्के यद्यर्थे च । स्थाणुरयमाहो पुरुषइति ॥

अब्धेरम्भः स्थगितभुवनाभोगपातालकुक्षेः,
पोतोपायादिह हि बहवो लङ्घनेऽपि क्रमन्ते ।
आहो रिक्तः कथमपि भवेदेष दैवात्तदानी,
को नाम स्यादवटकुहरालोकनेऽप्यस्य कल्प ॥

नवै । इति निषेधावधारणे विशेषनिषेधे च । नवै स्त्रैणानि सख्यानि सन्ति । नैव स्त्रीणां सौहार्दानीत्यर्थः ॥ नवा उ एतन्म्रियसे न रिष्यसीति ॥ यावदिति साकल्यावधिमानावधारण(३)कालावधिषु । यावत्कार्यं तावत्कुरु । सकलं कुर्वित्यर्थ ॥ यावद्गन्ता तावत्तिष्ठ । यावदमत्रं ब्राह्मणानामन्त्रयस्व । यावद्दत्तं तावद्भुक्तम् (४) । यावद्गिरः खे मरुतां चरन्ति ॥ अन्यत्रापि दृश्यते ।

यावद्भवत्याहितसायकस्य मत्कार्मुकस्यास्य निदेशवर्त्ती ॥

---

(१) पादपूरणेऽपि (२) एकद्रव्यगुणकर्मयोगइति यावत् ( ३ ) मानावधारणानवधारणका० इति पा० (४) कियद्दत्तं कियद्भुक्तमिति नावधारयति ।

यावज्जीवमधीते ॥ आहोस्विदित्याहोवत् ॥ किल । इत्यागमारुचिन्यक्करणसम्भाव्यहेत्वलीकेषु । जघान कंसं किल वासुदेवः । एवं किल केचिद्वदन्ति । त्वं किल योत्स्यते । पार्थः किल विजेष्यते कुरून् । स किल कविरेवमुक्तवान् । गोत्रस्खलितं किलाश्रुतं कृत्वा ॥ किंकिल । इति क्रोधाश्रद्धयोः । न मर्षयामि । न श्रद्दधे । किंकिल तत्रभवान् वृषलं याजयिष्यति ॥ अलमिति भूषणपर्याप्तिशक्तिवारणनिषेधेषु । अलङ्कारः ॥ अलमस्त्यस्य धनम् । बह्वित्यर्थः ॥ अलं मल्लो मल्लाय ॥ अलमतिप्रसङ्गेन ॥ आलप्यालमिदं बभ्रोर्यत्स दारानपाहरत् । न युक्तमेतदित्यर्थः ॥ अररे । इत्यवक्षेपसम्बोधने । अररे महाराजं प्रति कुतः क्षत्रियाः ॥ दिष्ट्या । इत्यानन्दे । दिष्ट्या वर्धामहे ॥ सभाजनदर्शनप्रातिलोम्येष्वित्येके ॥ निष्पत्तौ वाच्येति केचित्पठन्ति ॥ उमिति कोपनोक्तौ । उं सैवास्मि तव प्रिया ॥ चिरस्य । इति कालभूयस्त्वे । चिरस्य याथार्थ्यमलम्भि दिग्गजैरिति ॥ प्रगे । इति प्रातरर्थे । प्रगे प्रबुध्यते ॥ ते । मे । इति त्वया । मया । इत्यर्थे ॥ श्रुतं ते राजशार्दूल ॥ श्रुत मे भरतर्षभेति ॥ येन । तेन । इति हेतौ ॥ वितर गिरमुदारां येन मूकाः पिकाः स्युः ॥ क्षणमवहितश्च तां दिशं येन चक्षुः प्राहिणवम् ॥ नदीं तेन जगाम । गमने नदीहेतुर्द्वितीयालक्ष्यात् ॥ तथाहि जाम्बवती हरणे ।

बार्हद्रथं येन विवृत्तचक्षुर्विहस्य सावज्ञमिदं (१) बभाषे । कादम्बर्यामप्रश्रयं मदलेखां तेन वलितप्रमुखो भूत्वा ॥ अपि च ।

हा कः पीडयते पयोधरतटे मातः किमीयः करो
नाभीं तेन क एष कर्षति मुहुर्नीवीमपश्यन्निव ॥

येन दाता तेन श्लाघ्यः ॥ चिराय । इति चिरस्यार्थे । चिराय निर्धनो भूत्वा भवत्यह्ना महाधन इति ॥ न ह वै । इति निश्चितनिषेधावधारणे । न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्तीति ॥ शश्वदिति सार्वकाल्ये । शश्वच्चकारेत्यादि ॥ सातत्येऽपि । शश्वद्भुक्ति कुशिक्षितः ॥ नित्यसहार्थयोरपि । शाश्वतं वैरम् । शश्वद्भुञ्जाते इति ॥ शुभमिति कल्याणे । शुभंयुः ॥ कूपदिति प्रश्नवितर्कप्रशंसासु । कूपदयं गायति ॥५॥

---

(१) साकाङ्क्षमिदमिति पा०

वाव त्वाव तुवै नुवै खलु चिराद् हेतावृतं तावतो,
मात्रायां मम हुं चिरेण पशवः प्राह्णे शुकं माकिरः ।
अन्योन्यस्य यथाकथाच वषटो मर्या स्म माङ्गाथर्किं,
चेदहनाय हयेऽव्ययये नकिररे रात्रौ पुरा सीमदः ॥६॥

वाव । इत्येवार्थे । अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशत इति ॥ त्वाव । इति विशेपयुक्ते वावार्थे । अयं त्वाव प्रशंस्यत इति ॥ तान्ताविभावनुमानप्रतिज्ञाप्रैषसमाप्तिष्विति केचित् । त्वावदित्यपि ॥ तुवै । इति विशेषे ।अयं तुव प्रकृष्यत इति ॥ नुवै । इति वितर्के । को नु वै गच्छतीति ॥ खलु । इति निषेधवाक्यालङ्कारजिज्ञासानुनयनियमनिश्चयहेतुविषादेषु । खलु कृत्वा । अथो खल्वाहुः ॥ स खल्वधीते वेदम् ॥ न खलु न खलु मुग्धे साहसं कार्य्यमेतत् ॥ प्रवृत्तिसाराः खलु मादृशां धियः । प्रवृत्तिसारा एवेत्यर्थः ॥ खलु दानम् । त्वदधीनं खलु देहिनां सुखम् । न विदीर्ये कठिनाः खलु स्त्रियः ॥ चिरादिति चिरायार्थे । चिराद्दृष्टोऽसीति ॥ हेतौ । इति निमित्तार्थे । हेतौ हृष्यति ॥ ऋतमिति सत्यार्थे । ऋतं ब्रवीति ॥ तावदिति तुल्ययोगिताकाकल्यमानक्रमावधिषु । यावत्कार्य्यं तावत्कुरु । यावद्दत्तं तावद्भुक्तम् । त्वमेव तावत्परिचिन्तय स्वयम् । तावदधीष्व यावद्बुध्यसे ॥ यावत्तावच्छब्दौ परस्परसापेक्षावेव शब्दशक्तिस्वाभाव्यान्निजमर्थं गमयतः । क्वचित्तु केवलौ (१) ॥ मात्रायामित्यल्पपरिमाणे । मात्रायां भोजकः ॥ मम । इति प्रत्यगात्मसम्बन्धे । ममेत्यस्य भावो ममत्वं ममता । निर्गतो ममेत्यस्मादिति निर्ममः ॥ हुमित्यनिच्छाभयस्मरणभर्त्सनकोपेषु । हुं हुं मुञ्च हुं राक्षसोऽयम् । हुं स त्वमसि । हुं निर्लज्जापसरेति ॥

आः कष्टं बत ही चित्रं हुं मातर्दैवतानि धिक् ।
हा पितः ! क्वासि हे सुभ्रु ! बह्वेवं विललाप सः ॥

धिङ्मातः केकयि ! (२) । किं त्वयानुष्ठितमित्यर्थः ॥ चिरेण । इति चिरार्थे । चिरेण मित्रव्यसनी सुदमो दमघोषजः ॥ पशु । इति सम्यगर्थे । लोभं न यन्ति पशु मन्यमानाः । दर्शनीयं ज्ञानं सम्यक् प्रतिपद्यमाना लोभं परि-

---

(१) केवलावपीति पा० (२) कैकेयि—इति पा०

त्यगन्तीत्यर्थः ॥ प्राह्णे । इत्यह्नः प्रारम्भे । प्राह्णे गच्छति ॥ शुकमिति शैघ्र्ये । शुकं गच्छति ॥ माकिरिति निषेधवर्जनयोः । रक्षां मे माकिः कुर्विति ॥ सान्तं तु शाकटायनः । तथा नकिःशब्दमपि ॥ अन्योन्यस्य । इति परस्परार्थे । अन्योन्यस्य स्मरन्ति ॥ यथाकथाच । इत्यनादरे । यथाकथाच दीयते । यथाकथाच दक्षिणेति ॥ वषडिति देवहविर्दाने । वषडिन्द्रायेति ॥ मर्या । इति सीमबन्धने । मर्य्या आदीयते । इति मर्यादा । सीमबन्धनेन गृह्यत इत्यर्थः ॥ स्म । इत्यतीते वाक्यपूरणे च । इति ह स्मोपाध्यायः कथयति । अङ्ग स्म विद्वन्माणवकमध्यापयेति ॥ माङ् । मा । इति निषेधाशङ्कयोः । मा कार्षीत् । मा भवतु तस्य पापम् । मा भविष्यति शीतातो जानकी हृदयस्थिता ॥ ङकारो लुङ्माङीति (१) विशेषणार्थः ॥ अथ किमित्यभ्युपगमे । देवदत्त ! गच्छसि । अथ किम् ॥ चेदिति यद्यर्थे । शान्तिश्चेदमृतेन किम् ॥ अह्नाय । इति शीघ्रार्थे । अह्नाय सा नियमजं क्लमुत्ससर्जेति ॥ हये । अयि । इति सम्बोधने । हये जाये मनसा तिष्ठ घोरे । अयि विजहीहि दृढोपगूहनम् ॥ अनुनयेऽप्ययि । अय्ययि साहसकारिणि ॥ अये । इति स्मरणे । अये रामो दाशरथिः ॥ नकिरित्यौपम्ये । मेघो नकिर्वर्षति ॥ प्रतिषेधवर्जनयोरपि ॥ अरे । इति हीनसम्बोधने । अरे चौर ! ॥ रात्रौ । इति निशायामित्यस्यार्थे । रात्रौ वृत्तं तु द्रक्ष्यसि । रात्रौचरः ॥ पुरा । इति प्रबन्धभविष्यदासत्तिचिरातीतेषु । उपाध्यायेन पुराधीयते स्म । अविरतमपाठीत्यर्थः ॥ गच्छ पुरादेवो वर्षति । समनन्तरं वर्षिष्यतीत्यर्थः ॥ पुरापि न नवम् । पुराणमिति ॥ कश्चिद्भविष्यत्यासत्तौ चिरेऽतीते चेति पृथगाह ॥ सीमिति सर्वतोभावे । सीमादित्यो असृजत् । सर्वत इत्यर्थः ॥ अदित्याश्चर्ये । कस्तद्वेद यदद्भुतम् ॥६॥

श्रौषड् वौषट् प्याडहो नोहि वाद्‌ः—
स्रुपत् कश्चिद् यत्र नेदङ्ग हन्ताः ।
त्वै न्वै छम्बट् पाडवेरे बताथो—
कुं हं हिं कद् वेदधाघो नुकं चाः ॥ ७ ॥

श्रौषट् । वौषडिति वषट्शब्दार्थे ॥ प्याडिति प्रशंसामन्त्रणयोः । प्याट् शीघ्रं पठति । प्याट्पाठकाः ॥ हिंसासातत्ययोरपि शाकटायनः ॥ कश्चि-

(१) माङि लुङिति पा० ।

श्चिरत्नेऽतीते काले । समीपेऽनागते चेति पृथगाह ॥ अहो । इति सम्बोधनाश्चर्ययोः । अहो बत महत्कष्टं चक्षुष्मानपि याचते । अहो रूपम् अहो रूपमिति ॥ नोहि । इति प्रतिषेधे । नोहि पठसि त्वम् ॥ वादिति वदर्थे । वाडिति तु टान्तं वषडर्थे श्रीभोजः ॥ कूपदिति कूपदर्थे ॥ कच्चिदिति कच्चनवत् ॥ यत्र । इति यच्चवत् ॥ नेदिति शङ्कायाम् । नेज्जिह्मायन्त्यो नरकं पताम ॥ प्रतिषेधविचारसमुच्चयेष्विति श्रीशाकटायनः ॥ अङ्ग । इति पूजासम्बोधनयोः । (१) अङ्ग विद्वन्माणवकमध्यापय । तन्मन्ये क्वचिदङ्ग भृङ्गतरुणेनास्वादिता मालती ॥ समृद्ध्युपयोगप्रातिलोम्येष्विति श्रीशाकटायनः ॥ हन्त । इति हर्षानुकम्पावाक्यारम्भविषादेषु । हन्त जीविताः स्मः । पुत्रक हन्त ते धानाकाः । हन्त ते कथयिष्यामि । हन्त हताः पथिकगेहिन्यः ॥ दाननिश्चययोरपि । भूरियं हन्तकारः । हन्त गच्छामः । निश्चयेनेत्यर्थः ॥ त्वै । इति विशेषवितर्कयोः । अयं त्वै प्रकृष्यते । कस्त्वा एषोऽभिगच्छति ॥ न्वै । इति वितर्कपादपूरणयोः । को न्वा एषोऽभिगच्छति ॥ छम्बडित्यन्तःकरणाभिमुख्ययोः । छम्बट्संशुद्ध्या सर्वं जयति । छम्बणमुखो धावति ॥ पाडिति प्याडर्थे ॥ केचित् पट् । इत्यपि सादृश्यासम्पत्तिसाकल्यग्रन्थाधिक्यवचनेषु ॥ अवेरे । इत्यरे इत्यस्यार्थे । बत । इति हेतुखेदानुकम्पासन्तोषविस्मयामन्त्रणेषु । बतजेनेति बलं बतास्ति सत्त्वे । यस्मादित्यर्थः ॥ अहो बत महत्कष्टम् । हता बत वराकी सा । बत प्राप्ता सीता । अहो बतासि स्पृहणीयवीर्य्यः । बत वितरत तोयं तोयवाहा नितान्तम् ॥ अथो । इत्यन्वादेशे । इमं वेदमध्यापय । अथो एनं छन्दोपि ॥ अन्येऽप्यथा वक्ष्यमाणा अथशब्दवद्द्रष्टव्याः ॥ कुमिति प्रश्ने कुं त्वं करोषि ॥ हमित्यसम्मतौ । ह क एवमाह ॥ हिमिति क्षोभवचनः । हि साम गीयते ॥ कदिति हर्षे । कद्रुद्राय प्रचेतसे ॥ वेदिति वदर्थे ॥ वेडिति वषडर्थे टान्तं तु श्रीभोजः ॥ अध । इत्यथार्थे । अधा स वीरैर्दशभिर्वियूयाः ॥ अघो इति भोअर्थे ॥ नु कमिति वितर्के । अहिर्नु कं रज्जुर्नु कम् । च । इति चेदर्थे । त्वं च गमिष्यसि फलिष्यति नः कामः ॥ आद्यपदात्परएव प्रयोक्तव्यः । यदुक्तमन्यत्र । चो यद्यर्थे प्रथमात्पदात्परः ॥७॥

---

(१) संज्ञासंबोधनयोरिति पा०

ओमादकस्मादुत यत्तदन्यत्,
पर्याप्तमग्रे कुविदाम नाम ।
अन्यत्र धाथेद् विपु चित् सुकं किं,
स्विदन्तरेणैकपदेऽहहोञः ॥८॥

ओमित्यभ्यादानाभ्युपगमसमाप्त्यर्थे । मङ्गलप्रयोजनश्च भवति । ओं अग्निमीडे पुरोहितम् ॥

ओमित्युक्तवतोऽथ शार्ङ्गिण इति व्याहृत्य वाचं नभस्-
तस्मिन्नुत्पतिते पुरः सुरमुनाविन्दोः श्रियं बिभ्रति ।

ब्रह्म भूर्भुवः स्वरोम् ॥ आदित्यपार्थे । विश्वकर्मा विमना आद्विहाया इति ॥ अकस्मादित्यतर्कितोपनते । कस्मादकस्मादमी ॥ उत । इति वितर्कवाढार्थप्रश्नसमुच्चयपक्षान्तरपादपूरणेषु । स्थाणुरयमुत पुरुषः। उत शिरसा पर्वतं भिन्द्यात्। उत दण्डः पतिष्यति । स्वाभासो भरवानुत । एकमेव वरं पुंसामुत राज्यमुताश्रमः। स सर्वलोकस्य शुभो भवत्युत ॥ यत्तदिति हेत्वर्थे। यदयमधीते तज्जानाति ॥ अन्यदित्यन्यार्थे । देवदत्त आयातोऽन्यच्च यज्ञदत्त इति ॥ इतरार्थेऽपि ॥ पर्य्याप्तमिति सामर्थ्यवारणयोः । त्वयैव पर्याप्तम् । पर्याप्तमिहान्येन ॥ अग्रे । इति पुरस्तादर्थे । अग्रेसरः । अग्रेवणम् । कुविदिति भूर्यर्थे । कुविदङ्ग यवमन्तः॥ योगप्रशंसास्तिभावेष्वपि ॥ आम । इति प्रतिवचनावधारणयोः । कटं कुरु । आम करोमि ॥ तथा—

घण्टानादो निस्वनो डिण्डिमानां—
ग्रैवेयाणामारवो बृंहितानि ।
आमेतीव प्रत्यवोचन् गजाना—
मुत्साहार्थं वाचमाधोरणस्य ॥

गच्छास्याम ॥ अभ्युपगमेऽपि । आम मैथिलि ! ॥ नाम इति प्राकाश्यसंभावनाक्रोधाङ्गीकारकुत्सनालीककथंचिद्विस्मयेषु । हिमालयो नाम नगाधिराजः ॥ कथं नाम समेष्यसि ॥ स्मृतिः सम्भावनैव । स नामायं बन्धुः ॥ ममापि नाम दशाननस्य परैः परिभवः ॥ एवमस्तु नाम । को नामायं सवितुरुदयो यत्र न स्वे स्फुरन्ति ॥ दृष्टेव सा रोदिति नाम तन्वी॥ यदि लेपनमेवेष्टं

लिप्स्यति नाम कोऽपरः॥ अन्धो नाम पर्वतमारोहति॥ आमन्त्रणेऽपि॥ अन्यत्र। इति वर्जने। पतितान्न बिभृयादन्यत्र मातुः॥ घ। इति हिंसाप्रातिलोम्यपादपूरणेषु। घ हन्ति मृगं व्याधः॥ अथ। इति मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्याधिकारप्रतिज्ञासमुच्चयेषु। अथ परस्मैपदानि। स्नातोऽथ भुङ्क्ते। अथ शब्दानुशासनम्। अथ शक्तोऽसि भोक्तुम्। अथातो धर्मं व्याख्यास्यामः। अथ समासः। गौडो भवानथेति ब्रूमः। भीमोऽथार्जुनः। नित्यः शब्दोऽथानित्यः॥ इदित्यनर्थकः। वहन्तीवेदागमनीगन्ति कर्णम्॥ विषु। इति सर्वतोभावे। विष्वञ्चतीति विष्वक्॥ चिदिति साकल्याप्यर्थोपमानासंमतिषु। आचार्यश्चिदिदं ब्रूयात्॥ किञ्चित् प्रयच्छति। न किञ्चिद् ब्रवीति॥ अग्निश्चिद् भायात्॥ कुल्माषांश्चिदाहरेति॥ सुकमित्यतिशये। सुकं शोभते॥ किमिति क्षेपप्रश्नेषदर्थातिशयेषु। किमयमपि ब्राह्मणः। किं गतोऽसि?। न किमप्यस्यास्ति। किमप्येष प्रगल्भते॥ स्विदिति प्रश्नवितर्कयोः। कः स्विदेकाकी चरति। अधः स्विदासीदुपरि स्विदासीत्॥ अन्तरेण। इति मध्यविनार्थयोः। यथाः—

मृणालसूत्रामलमन्तरेण,
स्थितश्चलच्चामरयोर्द्वयं सः।
भेजेऽभितः पातुकसिद्धसिन्धो-
रभूतपूर्वां रुचमम्बुराशेः॥

चलच्चामरयोर्मध्य इत्यर्थः॥ अन्तरे। इत्यप्यमरसिंहः। यथा—आवयोरन्तरे जाताः पर्वताः सरितो द्रुमाः॥ अन्तरेण पुरुषकारं न किञ्चिल्लभ्यते॥ अन्तरेण मातापित्रोरित्यत्र तु प्रयोगे विनार्थेऽन्तरशब्दोऽनव्ययस्तेन द्वितीयात्यय (१)॥ एकपदे। इत्यकस्मादर्थे। अयमेकपदे तया वियोगः॥ अहह। इत्यद्भुतखेदयोः। अहह महतां निःसीमानश्चरित्रविभूतयः। अहह कष्टमपण्डितता विधेः॥ दीर्घान्तोऽपि। भिक्षित्वापि बुभुक्षिता यदहहा॥ उञिति वितर्कसम्बोधनपादपूरणेषु। कउएति। उउत्तिष्ठ। तद्वायुमुन्तदु चन्द्रमा॥ उ। इत्यप्रतिरूपकोऽप्यस्ति। अस्य त्वयं विशेषः। उञो वेति। ऊँ इति पदं भवति॥ ८॥

---

(१) द्वितीयाभाव इति पा०

सत् फट् क्विच्चिररात्राय विभाषेति नचेत् पुतः ।
आः शप्समुपजोषं खोरठावाडां स्वरादयः ॥ ९ ॥

सदित्यादरे । सत्कृत्य । सत्कृतम् ॥ फडिति विघ्नप्रतिहतोच्चारणे । हुं फट् प्रतिहतोऽसि ॥ क्विदिति भर्त्सनपादपूरणयोः । क्वित् कितव! कदर्योऽसि । क्वित् कं तदुपयुज्यते ॥ चिररात्राय । इति चिरस्यार्थे । चिररात्राय जनेन चिन्तितम् ॥ विभाषा । इति विकल्पार्थे । विभाषाग्रेप्रथमपूर्वेषु ॥ इति । इति हेतुप्रकारप्रकर्षैवमर्थव्यवस्थास्वरूपविवक्षानियमसमाप्तिप्रकृतिवक्ष्यमाणपरामर्शमतेषु । हन्तीति पलायते ॥ गौरश्वो हस्तीति जातिः ॥ इतिपाणिनि । पाणिनिशब्दः प्रकर्षात् प्रसिद्ध इत्यर्थः ॥ क्रमादमुं नारद इत्यबोधि सः ॥ ज्वलितिकसन्तेभ्यो णः ॥ वृद्धिरित्येवं या वृद्धिः । गुण इत्येवं यो गुण इति ॥ तदस्यास्त्यस्मिन्निति मतुप् ॥ पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि ॥ इत्युक्तवन्तं परिरभ्य दोर्भ्याम् ॥ विनिश्चितार्थामिति वाचमाददे ॥ इत्यापिशलिः ॥ प्रत्यक्षसंनिध्यवधारणपदार्थविपर्यासादिष्वपि द्रष्टव्यः ॥ नचेदिति निषेधे । नचेत् कर्त्तव्यम् ॥ निषेधार्थे नोचेदित्यपि पठनीयम् ॥ पुदिति कुत्सायाम् । पुत् कुत्सितं कसति गच्छति । पुत्कसः ॥ कान्तमिति तु शाकटायनः ॥ आः । इति कोपपीडयोः—

विद्यां मातरमाः प्रदश्र्य नृपशून् भिक्षामहे निस्त्रपाः ॥

शपिति प्रग्रहे । गां शप्करोति ॥ समुपजोषमित्यानन्दे । समुपजोषं वर्त्तते ॥ उपजोषमिति निर्वाणनारायणः ॥ खोः कुत्सायाम् । खोः कटं करोति ॥ अठ । अव । अड । इत्येते भर्त्सने । अठ करोतीत्यादि ॥ आमिति प्रतिवचनावधारणयोः । आं किं मां ब्रवीषि । आं चिरस्य प्रतिबुद्धोऽस्मि ॥ स्वरादिरिति सम्बोधनभर्त्सनानुकम्पापूरण(१)प्रतिषेधेषु यथासम्भवं भवति । अ अपेहि । आ एवं नु मन्यसे । इ इन्द्रं पश्य । ई ईदृशः संसारः । उ उत्तिष्ठ । ऊ ऊषरे बीजं वपसि । ए इतो भव । ऐ वाचं देहि । ओ आवय ॥ ऋ ॠ ऌ ॡ औ । इत्येते मन्त्रस्तोभवचनाः ॥ आदिग्रहणात् कुं खुं गुं घुमित्यादयोऽपि भवन्ति ॥

---

(१) पादपूरण—इति पा० ।

अहम् । शुभम् । कृतम् । पर्याप्तम् । येन । तेन । चिरेण । अन्तरेण । ते । मे । चिराय । अह्नाय । चिररात्राय । चिरात् । अकस्मात् । चिरस्य । अन्योऽन्यस्य । मम । एकपदे । अग्रे । प्रगे । प्राह्णे । हेतौ । रात्रौ । वेलायाम् । मात्रायाम् । इत्येतेऽहंप्रभृतयो यथाक्रमं प्रथमादिसुब्विभक्त्यन्तप्रतिरूपकाश्छन्दोवशाद् यथायथं न्यस्ताः ॥ ९ ॥

उत्तरपूर्वान्यतरा अपरान्यौ चेतराधरावुभयः ।
एद्युस्येते ज्ञेया उभयद्युश्चापि विद्वद्भिः ॥१०॥

एद्युसन्ता(१)एते चादयो भवन्ति । शेषं स्पष्टम् ॥ १० ॥

इत्थं तदानीं कथमः पुरस्तात्–
सद्योऽधुनाद्येह परेद्यविक्वाः ।
पश्चादिदानीं परुतः परार्यै–
कध्यं सदा द्युः पुरतः सदं च ॥११॥

सद्य इति तत्क्षणे । असूत सद्यः कुसुमान्यशोकः ॥ पश्चादिति प्रतीचीचरमयोः । पश्चादस्ताद्रिः । पश्चाद्याति ॥ द्युरिति वासरे ॥ तथा च श्रीभोजः द्युर्दिनमिति ॥ यथा । द्युश्चन्द्रो द्योतते कथम् ॥ गगनेऽप्ययम् । अदान्तमिति वररुचिः । नपुंसकमित्यन्ये ॥ सदमिति सदा । इत्यस्यार्थे । यथा भुजङ्गमस्येव मणिः सदम्भाः । सततप्रभइत्यर्थः ॥ शेषं स्पष्टम् ॥ पुरस्तादित्युपलक्षणम् । सूत्रनिपातिता अधोऽधस्तादित्यादयो ज्ञेयाः ॥११॥

सुच् कृत्वस् त्रा तस् त्र दा काम् र्हि थैधाः–
स्ताद्दाह्येनात् साच्च्विडाः स्युर्थमुञ् थाः ।
शस् वत् तुम् णम् क्त्वादयश्च प्रसाद्यद्–
आद्यूर्ध्याद्श्चाव्ययीभावयुक्तः ॥१२॥

तद्धितादिप्रत्यया सुजादयश्चादिगणे भवन्ति ॥ सुच् । द्विः करोति । त्रिःपचति ॥ कृत्वस् । पञ्चकृत्वोऽधीते ॥ त्रा । देवत्रा कृतम् । देवत्राकृत्य गतः ॥

---

(१) उत्तरेद्युः । पूर्वेद्युः । अन्यतरेद्युः । अपरेद्युः । अन्येद्युः । इतरेद्युः । अधरेद्युः । उभयेद्युः ।

तस् । अतः । ततः । अन्ततः । कुतः । एते पञ्चम्यर्थाः । पञ्चम्यर्थश्चोपलक्षणम् ॥ अतःकारणोपदेशनिर्देशयोः । अतो गुणात् सर्वजनः पूजयति । अतो गतः ॥ तत आदिकथान्तरप्रश्नानन्तर्येऽपि । ततः प्रयातो भानुदत्तः । आदौ गत इत्यर्थः । ततः कथयति । ओदनं भुक्त्वा ततो मोदकान् भक्षयन्ति ॥ अन्ततः शासनावयवे सम्भावनायाञ्च ॥ किञ्चिदप्यधीष्व । अन्ततः पूजां प्राप्स्यसि ॥ गुणवान् । अन्ततश्च मे दास्यसि ॥ कुतः प्रश्ननिह्नवयोः । कुत आगच्छसि । कुतो मे हिरण्यम् ॥ अर्जुनतोऽभवन्देवाः ॥ उरस्तः । उरसैकदिक् ॥ त्र । यत्र । तत्र ॥ दा । सर्वदा ॥ काम् । किन्तराम् ॥ र्हि । एतर्हि ॥ तर्हीति विशेषेऽपि । बलवानर्जुनः कृष्णस्तर्हि बलवत्तरः ॥ धा । पञ्चधा ॥ एधा । द्वेधा ॥ स्तात् । प्राग्ग्रामात् (१) ॥ आहि । उत्तराहि ग्रामात् ॥ एन । पूर्वेण ग्रामम् ॥ आत् । उत्तराद्ग्रामस्य ॥ सात् । भस्मसात् स्यात् । भस्मसात्कृत्य ॥ च्वि । शुक्ली भवति ॥ डा । पटपटा करोति ॥ धमुञ् । द्वैधं वर्त्तते ॥ था । इत्याकारप्रश्लेषो द्रष्टव्यः ॥ था । यथा ॥ आ । दक्षिणा ग्रामात् ॥ शस् । अल्पशः । द्विशो देहि ॥ वत् । राजवत् (२) ॥ तुम् । कर्त्तुम् ॥ णम् । भोजं भोजं व्रजति । चूर्णपेषं पिनष्टि ॥ क्त्वा । कृत्वा ॥ तदादेशोऽपि ल्यो ग्राह्यः । प्रकृत्य ॥ आदिग्रहणात् केकेन्यतवैत्वेत्यादयोऽन्येऽपि द्रष्टव्याः ॥ प्रसाक्षादादीति । आदिशब्दः प्रत्येकमभिसम्बध्यते । तत्र प्रादिर्वक्ष्यमाणो विंशतिशब्दको गणश्चादिसञ्ज्ञो भवति । तत्रास्य प्रादिसञ्ज्ञा धातुसम्पृक्तस्यैव नान्यत्र । चादिसञ्ज्ञा तु सर्वत्र स्वरूपनिबन्धना स्यात् । यथा । साधुर्देवदत्तो मातरं प्रति । मातरमभीत्यादावेवं प्रयुक्तिः । एष कर्मप्रवचनीयइति पाणिनीये प्रसिद्धः ॥ प्राचार्य्यैः । निष्कौशाम्बिरित्यादौ नामसमासे गतिसञ्ज्ञः । कुगतिप्रादयएव पाणिनीयवचनात् ॥ साक्षादादिरपि वक्ष्यमाणो गणः । तस्य केवलस्यापि चादित्वम् । करोति साक्षाच्चैत्र इत्येवं प्रयोगः ॥ ऊर्यादिरपि तथा ॥ अव्ययीभावश्च चादित्वे तस्य प्रयोजनम् । उपपयस्कारः (३) । उपकुम्भमन्यः । अभ्यग्निमन्यइत्यादौ स्यादेशमुमागमप्रतिषेधइति सामनः ॥

---

(१) स्तादित्यनेनास्तातिप्रत्ययो ग्राह्यः । प्रागित्यत्राञ्चेर्लुगित्यस्तातेर्लुक् । पुरस्तात् । प्राग्ग्रामादिति पा० (२) पुत्रवत् । भानुवत्—इति पा० । (३) उपपयःकार इति महाभाष्यानुकूलः प्रयोगः ।

शाकटायनः पुनराह। अव्ययीभावस्याव्ययत्वे स्वल्पमेव प्रयोजनम्। दोषास्तु बहवः। तथाहि। उपकुम्भमन्यम्। उपमणिकंमन्यमित्यत्र खित्यरुर्द्विषत-स्राजनव्ययस्येति सुम्प्रतिषेधः प्राप्नोति। यथा। दोषामन्यमहः। दिवाम-न्या रात्रिरिति। उपकुम्भीभूतमित्यत्र च्वौ चानव्ययस्येति। ईत्वप्रतिषेधश्च। यथा। दोषाभूतमहः। दिवाभूता रात्रिरिति॥ उपाग्निकमित्यत्र कादिश्चा-व्ययस्येति॥ अकच। यथा। उच्चकैः॥ पाणिनिरपि स्वरादिगणात् पृथग-व्ययीभावश्चेत्यव्ययसंज्ञानिमित्तं सूत्रं कुर्वन् लुग्विधिर्मुखस्वरोपचारनिषेधा-विति त्रितयमेवाव्ययसंज्ञानिबन्धनं नान्यदिति प्रतिपादयति॥ दुर्गस्तु। अव्ययाच्चेति लुकि सिद्धेऽन्यस्माल्लुगिति यद्वचनं तज्ज्ञापयति। अव्ययीभाव-स्याव्ययत्वं नास्तीति॥१२॥

आस ब्रूहि नयाति पश्यतयुतौ यात्यादहौ वर्त्तते-
स्यादातङ्कनवर्त्ततेभवतयो मन्येऽस्तुनास्त्यस्मयः।
आदङ्कैद्यसि पूर्यतेऽस्तिभवतु शङ्के तथा विद्यते-
पश्याहाविह कीर्त्तितौ मतिमता सङ्ख्ये निपाताह्वये॥१३॥

तिङन्तप्रतिरूपका एते चादिसंज्ञा भवन्ति। निपाताव्ययसंज्ञास्तु म-तान्तरे॥ आस। इति बभूवार्थे। लावण्य उत्पाद्य(१) इवास यत्नः॥ वा-मनस्तु। अस दीप्त्यादनयोश्चेत्यस्य साधयति॥ वल्लभस्य तु तिङन्तप्रति-रूपको निपातइति न संमतम्। तादृशस्यैव तिङन्तस्याभावात्॥ ब्रूहि। इति प्रैषानुज्ञावसरेषु। ब्रूहि ब्राह्मणाः॥ नयाति। इति न शक्यत इत्यर्थे। इदं तु कर्त्तुं नयाति॥ पश्यत। इति पूजाश्चर्य्ययोः। पश्यत माणवको भुङ्क्ते। पश्यत शिशुरपि विद्वान्। याति। इति शक्यतइत्यर्थे। इदमेव कर्त्तुं याति॥ आदह। इति हिंसोपक्रमकुत्सनेषु। आदहारीन् पुरन्दर। आदह भक्तस्य भोजनाय। कुर्वादह यदि करिष्यसि॥ वर्त्तते। इति सोल्लु-ण्ठनाक्रुसंवरणे। वृद्धास्तेन विचारणीयचरितास्तिष्ठन्तु हुं वर्त्तते॥ स्यादि-त्यनेकान्ते। स्याद्वादिनो जैनाः। स्यान्न तत्स्यादपि स्यादिति पक्षान्तरसम्भा-वनादावपि॥ आतङ्क। इति कुत्साविनाशयोः। आतङ्कक्षीरं दधिभवनाय॥

(१) लावण्यमुत्पाद्य—इति पा०।

प्रतिग्रहेऽपि शाकटायनः ॥ न वर्त्तते । इत्यमङ्गलप्रतिषेधे । समराभिमुखे पत्यावश्रुनिपातो न वर्त्तते तस्याः ॥ भवति । इति सत्तायाम् । भवति नाम तत्रभवान् वृषलं याजयिष्यति ॥ मन्ये । इति वितर्के । मन्ये मार्त्तण्डगृह्याखि पद्मान्युद्धर्त्तुमुत्सुकः ॥ अस्तु । इति निषेधासूयाङ्गीकारयोः । अस्तु साम्ना ॥ असूयापूर्वेऽङ्गीकारे । अस्तुंकारः । एवमस्तु को नाम दोषः ॥ नास्ति । इति सत्तानिषेधे । नास्ति वादशूरो नास्तिकः ॥ अस्मि । इत्यस्मदर्थानुवादे । अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः ॥ अहमित्यर्थेऽपि । उडुपेनास्मि सागरम् ॥ आदङ्क । इत्यातङ्कवत् ॥ एहि । इति प्रहासादौ । एहि मन्ये रथेन यास्यसि । एहि न त्वया सह जल्पिष्यामि ॥ असि । इति त्वमित्यर्थेवाक्यालङ्कारयोः । वेत्स्यसि पार्थिव त्वमसि(१) सत्यमस्यधाः ॥ भोजस्तु युष्मदर्थानुवादे । यदपूपुजस्त्वमसि पार्थमुरद्विषमिति प्राह ॥ पूर्यते । इति निषेधे । पूर्यते प्राणायामेन ॥ अस्ति । इत्यस्तुघनसत्तासु । आस्तेयं चर्मभाजनम् । अस्ति परलोके मतिरस्येत्यास्तिकः ॥ भवतु । इत्यस्तुवत् ॥ शङ्के । इति वितर्के । शङ्के शशाङ्कोऽयम् ॥ विद्यते । इति भवत्यर्थे ॥ पश्य । इति पश्यतवत् ॥ आह । इत्युवाचार्थे । अथाह वर्णी विदितो महेश्वरः ॥ एते चोच्चावचेष्वर्थेषु निपतन्तीति निपाताः । तत्र—

केऽप्येषां द्योतकाः केऽपि वाचकाः केऽप्यनर्थकाः ।
आगमाइव केऽपि स्युः संभूयार्थस्य साधकाः ॥

तत्र द्योतकाश्चवाहाहैवादयः । वाचकाः शश्वत् कुवित् माह्ले प्रगइत्यादयः । अनर्थकाः कमीमिदित्यादयः । संभूयार्थस्य साधका न ह वै न खलु मास्मेत्यादयः ॥ १३ ॥

स्वः स्मायं समया दिवा पुनररं कामं प्रकामं बहिर्-
दोषा ह्यो निकषान्तरासनुतरो नक्तं नमो भूयसः ।
अन्तः प्रातरसांप्रतं परमृते साद्यात् सनत् सायः—
सत्यं मङ्क्षु विहायसाशु सहसा प्रायः स्वयं संवतः ॥१४॥

स्वरिति स्वर्गपरलोकयोः । स्वः सुखयति । एहि जाये स्वरारोहाव । स्वः संजानीते । स्वः स्पृहयति । स्वरागच्छति । छायेव या स्वर्जलधेर्जलेषु ।

(१) पार्थिवस्त्वमसि—इति पा०

स्वर्वसतीति। स्वर्यातस्य ह्यपुत्रस्य॥ आदित्यशर्मणोरित्येके॥ सायं दिनाव-सान। सायं संयमिनस्तस्य महर्षेर्महिषीसखः॥ समया। इति समीपमध्य-योः। त्वां समयास्ते। ग्रामं समयास्ते। ग्राममध्य इत्यर्थः॥ आदित्सापरो-क्षयोरित्येके(१)॥ दिवा। इति दिनार्थे। दिवाकरः॥ पुनरिति भूयोऽर्थ-विशेषयोः। पुनरुक्तं वचः। किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा॥ अरमिति शैघ्र्ये। अरं पचति॥ काममिति स्वाच्छन्द्येऽनिच्छाङ्गीकारे च। कामं भुङ्क्ते। कामं क्षाम्यतु यः क्षमी॥ प्रकाममित्यतिशये। प्रकाममप्री-यत यज्वनां प्रियः॥ बहिरित्यन्तःप्रत्यनीके। बहिर्विकारं प्रकृतेः पृथग् विदुः॥ दोषा। इति रात्रौ। दोषामन्यमहः॥ ह्यः। इत्यतीतेऽह्नि। ह्य-स्तनः॥ निकषा। इति समीपे। विलङ्घ्य लङ्कां निकषा हनिष्यति॥ अन्तरा। इति मध्यविनार्थयोः। अन्तरा त्वां च मां च कमण्डलुः। त्वामन्तरा तामरसायताक्षि!॥ सनुतरित्यन्तर्धाने। सनुतश्चौरो गच्छति॥ हिंसानुबन्ध-पूर्वाह्णेषु शाकटायनः॥ नक्तमिति रात्रौ। नक्तंचरः॥ नमः। इति पूजायाम्। नमोऽस्तु वर्धमानाय॥ भूयः। इति पुनरर्थे। भूयः पचति॥ अन्तरिति मध्ये। अन्तर्वाष्पश्चिरमनुचरो राजराजस्य दध्यौ॥ प्रातरिति प्रत्यूषे। प्रातरेव समु-त्थाय॥ ग्रवन्तनेऽपि॥ असांप्रतमित्यन्याय्ये। संप्रत्यसांप्रतं वक्तुमुक्ते मुसल-पाणिना। विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्॥ युक्ते सांप्रतमित्यमर-सिंहः॥ परमिति किन्त्वर्थे। गुणवानसि परमहङ्कारी॥ ऋते इति वर्जने। ऋते कृशानोर्नहि मन्त्रपूतम्॥ साक्षादिति प्रत्यक्षतुल्ययोः। साक्षाद्द्रष्टा साक्षी। इयं साक्षाल्लक्ष्मीः॥ सनदिति नित्ये। सनत्कुमारः॥ सान्तं तु नुतिपरित्राणचिरन्तनहिंसाकल्पननिर्भर्त्सनेषु शाकटायनः॥ साचि। इति तिर्यगर्थे। साचि लोचनयुगं नमयन्ती॥ सत्यमिति प्रश्नप्रतिषेधसत्येषु। सत्यं करोषि॥ ननु किमर्थमिदम्। सत्यम्॥ सत्यं हारिनितम्बिनीकुचयुगं सत्यं मनोज्ञाः श्रियः॥ मङ्क्षु। इति शैघ्र्ये। मङ्क्षूदपाति परितः पटलैरलीनाम्॥ विहायसा। इति वियदर्थे। विहायसा रम्यतमं विभाति। आशु। इति शैघ्र्ये। आश्वपेहि मम सीधुभाजनात्॥ सहसा। इत्याकस्मिकाविमर्शयोः। दिव. प्रभुत सहसा पपात। सहसा विदधीत न क्रियामविवेकः परमापदां

(१) आदित्सापरोक्ष इति पाठः

पदम् ॥ प्रायः । इति बाहुल्ये । प्रायः स इह नेष्यति ॥ स्वयमित्यात्मनेत्यर्थे । स्वयं प्रदुग्धेऽस्य वसूनि मेदिनी ॥ चन्द्रस्त्वात्मानमित्यर्थे ॥ संवदिति वर्षे । संवत्सरः । संवत्तृतीये ॥ १४ ॥

उच्चैर्नीचैरवश्यं सपदि बलवतः प्रादुराविः पुरस्तात्—
तूष्णीं जोषं निकामं युगपदनिशमः साम्यभीक्ष्णं
सनोषाः । रोदस्यौ भूर्भुवस् कं झटिति पुरतसोऽतीव
सुष्ठु प्रसह्य, द्राक् स्राग् मिथ्या वृथा शं कु मिथुन-
मृथकोऽह्नाऽञ्जसाऽवो मनाकः ॥१५॥

उच्चैः । नीचैरिति महदल्पयोः । उत्कृष्टनिकृष्टयोरिति शाकटायनः । किं पुनर्यस्तयोच्चैः । नीचैर्गच्छत्युपरि च दशाचक्रनेमिक्रमेण ॥ अवश्यमिति निश्चये । अवश्यं यातारश्चिरतरमुषित्वाऽपि विषयाः ॥ सपदि । इति वर्त्तमानतत्क्षणशीघ्रार्थेषु । सपदि विपदो विद्धद्धेशमस्वनर्गलवृत्तयः । सपदि मुकुलिताक्षीं रुद्रसंरम्भभीत्या । सपदि प्रदहत्युपेक्षितोऽग्निः ॥ बलवदित्यतिशये । बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥ प्रादुरिति नामप्राकाश्ययोः । विष्णोर्दश प्रादुर्भावाः । मत्स्यकूर्मादीनि दश नामानीत्यर्थः ॥ प्रादुरासीत् ॥ आविरिति प्राकाश्ये । आविर्भूतप्रथममुकुलाः कन्दलीश्चानुकच्छम् ॥ पुरस्तादित्यग्रतइत्यर्थे । रत्नच्छायाव्यतिकरइव प्रेक्ष्यमेतत् पुरस्तात् ॥ तूष्णीमिति मौने । राजन्राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः ॥ जोषमिति सुखमौनयोः । जोषमास्ते जितेन्द्रियः । जोषमास्स्व ॥ ज्योषमिति शाकटायनः ॥ निकाममित्यतिशये । निकामं क्षामाङ्गी ॥ युगपदित्येककालार्थे । तद्वल्गुना युगपदुन्मिषितेन तावत् ॥ क्रियासमभिहारेऽपि ॥ अनिशमिति सातत्ये । यत्रानिशं कीर्त्यते ॥ सामि । इत्यर्धकुत्सयोः । सामि सम्मीलिताक्षी । सामि कृतमकृतं स्यात् ॥ अभीक्ष्णमिति पौनःपुन्यसातत्ययोः । अभीक्ष्णमास्फालयतीव कुम्भम् । अभीक्ष्णं वक्ति॥ नित्यमिति । सदा सदिति । अजस्रं सन्ततमिति सातत्ये कश्चिदाह ॥ सना । इति नित्ये । एष धर्मः सनातनः ॥ तान्तमपि ॥ उषा । इति रात्रौ । उषातनो वायुः ॥ रोदसी । इति द्यावापृथिव्यर्थे । द्यावापृथिव्यौ रोदसौ रोदसी रोदसीति च ॥

ओमिति ब्रह्मवाचि। ओमित्येकाक्षरं ब्रह्म ॥ भूर्भुवः। इति पृथिव्यन्तरिक्षयोः। भूर्लोको भुवर्लोकः ॥ भुवसश्च महाव्याहृतेरिति रेफो भवति॥ कमिति वारिमूर्द्धसुखनिन्दाव्योमसु। कजं पद्मम्। कञ्जाः केशाः। कयुः। कन्दर्पः। कङ्गामिनः खगाः ॥ झटिति। इति शैघ्र्ये। आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥ झगितीत्यपि केचित् ॥ तरसोदितासजलेष्विति लह्यात् तरसापि ॥ तूर्णं द्रुतं क्षिप्रं शीघ्रं लघ्विति क्रियाविशेषणम् ॥ पुरतः। इत्यग्रत इत्यर्थे। नीरसतरुरिह विलसति(१) पुरतः॥ अतीव। इत्यतिशये। अतीव शोभते ॥ सुष्ठु। इति प्रशंसानिर्भरयोः। सुष्ठूक्तम्। सुष्ठु विभाति॥ प्रसह्य। इति शीघ्रार्थे हठार्थे च। प्रसह्य सिंहः किल तां चकर्ष। प्रसह्य वित्तानि हरन्ति चौराः॥ द्राक्। स्रागिति शैघ्र्ये। द्रागिद्रुतं कातरैः। स्राक् सरन्त्यभिसारिकाः ॥ मिथ्या। इत्यसत्ये। मिथ्यावादिनि दूति!॥ अनव्ययोऽपि। यथा। निर्मिथ्य ॥ वृथा। इति विफलाविध्योः। प्रयुक्तमप्यस्त्रमितो वृथा स्यात्। प्रातिभाव्यं वृथादानमाक्षिकं सौरिकं च यत्॥ शमिति दुःखोपशमे। शङ्करः। शम्भुः॥ कु। इति कुत्सेषदर्थयोः। शास्त्रकापथघट्टनम्। पयः पूर्वं सनिःश्वासं कवोष्णमुपभुञ्जते॥ पापार्थेऽपि॥ मिथुनमिति द्वौ द्वावित्यर्थे। मिथुन रमन्ते ॥ ऋधगिति सत्ये। ऋधग् वदन्ति विद्वांसः॥ वियोगशीघ्रसामीप्यलाघवेष्वित्यन्ये॥ अद्धा। इति स्फुटार्थावधारणयोः॥ आराधितोऽद्धा मनुरप्सरोभिः॥ सत्यतिशययोरित्येके॥ अञ्जसा। इति तत्त्वशीघ्रार्थयोः। वक्त्यञ्जसा मुनीश्वरः। सुतनु कथय कस्य व्यञ्जयन्त्यञ्जसैव॥ अवः। इति बहिरित्यर्थे। अवो गच्छति॥ मनागिति स्तोके। यस्मिन्मनागपि नवाम्बुजपत्रगौरी॥१५॥

मिथुर्मिथो विष्वगुपांशु ताजग्-
मनश्चनः प्रेत्य मिथः शनैसः।
मुधाऽन्वगीषच्चिरमो मृषास्तं-
धिगानुषक् स्वस्ति पुरोऽस्र इद्धाः॥१६॥

मिथुरिति द्वौ द्वावित्यर्थे। मिथुर्मन्त्रयेते॥ उकारान्तमप्यनृतार्थे केचित्॥ मिथो। इति रहःसहार्थयोः। मन्त्रयन्ते मिथो॥ विरहान्योऽन्यार्थयोरपि॥

(१) निवसतीति पाठान्तरम् ॥

षिष्वगिति समन्ततोभावे । कचाचितौ विष्वगिवागजौ गजौ ॥ उपांशु । इत्यप्रकाशोच्चारणरहस्ययोः । जपतः सदा जपमुपांशु वदनमभितो विसारिभिः । परिचेतुमुपांशु धारणां कुशपूतं प्रवयास्तु विष्टरम् ॥ कथमुपांशुवचः । उपचाराद्भविष्यति ॥ ताजगिति(१) शैघ्र्ये । ताजग् जरामृत्युरुजा जयन्ति ॥ मनः । इति नियमे । मनो वर्त्तते । नियमो वर्त्तत इत्यर्थः ॥ घनः । इत्यन्ननाम । घनो दधिष्व पचतोत सोमम् ॥ श्रद्धायामिति श्रीवत्सुकः ॥ प्रेत्य । इति भवान्तरे । अन्यो धनं प्रेत्यगतस्य भुङ्क्ते ॥ अमुत्र शब्दस्याप्यत्र पाठो द्रष्टव्यः ॥ मिथः । इति रहोऽन्योन्यार्थयोः । तथापि वाचालतया युनक्ति मां मिथस्त्वदाभाषणलोलुपं मनः ॥ शनैरिति क्रियामान्द्ये । शनैःशनैर्ददात्येष पादौ भूतानुकम्पया ॥ मुधा । इति निष्फले । प्रीतिकरण इत्यन्ये । किं पौलोमि मुधा क्रुधा मयि नतु स्वप्नेऽपि ते विप्रियम् ॥ अन्वगित्यानुकूल्ये । अन्वग्ययौ मध्यमलोकपालः ॥ ईषदित्यल्पे । ईषत्पचति (२) ॥ अप्राप्ते च ॥ चिरमिति कालविप्रकर्षे । किञ्चिन्नम्रमुखी(३) प्रियेण हसता बाला चिरं चुम्बिता ॥ मृषा । इत्यसत्ये । मृषा वदति दुर्जनः ॥ वृथा प्रबलार्थं इति केचित् ॥ अस्तमिति शैलविशेषादर्शनयोः । अस्तं भास्वान् प्रयातः । धृतिरस्तमिता रतिश्च्युता ॥ धिगिति निन्दाभर्त्सनयोः । धिगिमां देहभृतामसारताम् । धिक्तार्किकान् ॥ आनुषगित्यानुपूर्व्ये । आनुषक् प्रविशतीह बन्धुता ॥ अनुमानेऽनुषगिति शाकटायनः ॥ आनुषदित्याकारं दकारं च केचित् ॥ स्वस्ति । इति पुण्याशीःक्षेममङ्गलप्रत्यभिवादनेषु । स्वस्त्यस्तु ते धार्मिक मत्प्रसादात् । स्वस्ति तेऽस्तु लतया सह वृक्ष । स्वस्त्यस्तु ते सौम्य चिराय जीव । स्वति श्रीकुसुमपुरात् । राज्ञा नमस्कृता विप्राः स्वस्तीत्येते प्रयुञ्जते ॥ पुरा । इत्यग्रत इत्यर्थे । पुरःसरा धामवतां यशोधनाः ॥ अम्नः । इति शीघ्रसांप्रतिकयोः । अम्न एव गच्छति । अम्नरेवागच्छति । अन्नस्ऊधस्अवसां रो वेति रेफो विकल्पेन ॥ इद्धेति प्राकाश्ये । समिद्धमिद्धेश मह्यो दधासि ॥ सामीप्यस्मरणयोरपि ॥१६॥

(१) तोजगिति पा० । तोजक् पचति । तोजकमृत्युरुजा जयन्तीति च ।
(२) ईषदित्यल्पाकृच्छ्रयोः । ईषत्पचति । ईषत्करः कटो भवतेति पाठान्तरम् । (३) लज्जानम्रमुखी—इति पा० ।

स्थाने वरं दुष्ठु हिरुग् बलातः—
प्रबाहुकं ज्योक्तिरसो मुहुः शु।
युक्तं प्रशानार्य्यहलं क्षमाऽर्वाग्-
विनाश्च नाना पृथकौ सुदिश्च ॥१७॥

स्थाने। इति युक्ते(१)। स्थाने वृता भूपतिभिः परोक्षैः॥ वरमिति हीनोत्कर्षे। वरं विरोधोऽपि समं महात्मभिः॥ दुष्ठु। इति कृच्छ्रार्थे। दुष्ठु वादी खलः॥ हिरुगिति वियोगहिंसावर्जनेषु। हिरुक्करोति॥ हिरुक्कर्मणा मोक्षः। कर्मवर्जनात्(२) मोक्षइत्यर्थः॥ बलादिति हठार्थे। त्वद्भक्तिरेव मुखरी कुरुते बलान्माम्। शापयन्त्रितपौलस्त्यबलात्कारकचग्रहैः॥ प्रबाहुकमिति समकाले। प्रबाहुकं गृह्णीयात्॥ ऊर्ध्वार्थे प्रबाहुः प्रबाहुक् चेति केश्चित्पठ्यते (३)॥ ज्योगिति कालभूयस्त्वे(४)। ज्योग् जीवामः। ज्योक्कृत्य नृपतिं गतः शीघ्रार्थे संप्रत्यर्थेऽपि॥ तिरः। इत्यन्तर्धानतिर्यगर्थयोः। विश्वयोनिस्तिरोदधे। तिरः काष्ठं करोति। अवज्ञायामपि॥ यथा—

तिरश्चकार भ्रमराभिलीनयोः,
सुजातयोः पङ्कजकोशयोः श्रियम्॥

मुहुः। इति पौनःपुन्ये। इह मुहुर्नुदिते कलभैरवः॥ मुहुर्मुहुर्नुत्यति सा मृगाक्षी। इत्यादिलक्ष्यदर्शनान्मुहुर्मुहुरित्यपि॥ शु। इति पूजायाम्। शुनासीरमस्येति शुनासीरः॥ शु अश्नुते। श्वशुरः॥ क्षिप्रार्थेऽपि। शु क्षिप्रं नयत्यन्तरिक्ष इति वा। शुनो वायुः॥ युक्तमिति न्याय्ये। यथा वीराचार्य्याणाम्।

युक्तं सिताम्बराणां तुम्बग्रहणं कुटुम्बपरिहरणम्।
कथमन्यथा तरीतुं शक्यः संसारतोयनिधिः॥

प्रशानिति समानार्थे। प्रशान्देवदत्तो यज्ञदत्तेन॥ आर्य्यहलमिति बलात्कारे। आर्य्यहलं गृह्णाति॥ आर्य्येति प्रीतिबन्धने। हलमिति च प्रतिषेधविषादयोरिति शाकटायनः॥ क्षमा। इति क्षान्तौ। भवान् क्षमा॥ अर्वागित्यधरे। वर्षात्षोडशादर्वाक्। अर्वाक्कालीनः॥ विना। इति वर्जने।

(१) इति—अवसरे—इति पा०। (२) कर्मक्षये—इति पा०। (३) ऊर्ध्वार्थे प्रबाहुकेति केश्चित्० इति पा०। (४) कालभूयस्त्वाप्रश्नयोः—इति पा०।

तात ! नो दधिविलोडनं प्रति त्वविनाद्य वयमुत्सहामहे ॥

नाना । इत्यनेकविनार्थयोः । नानाविधं कृतकदेहभृतां समाजम् ॥ उभयार्थत्वमनेकार्थत्वान्न व्यतिरिच्यते । तेन नानापक्षावमर्शः संशय इत्यभिहितम् ॥ नाना नारीं निष्फलां लोकयात्रा ॥ पृथगिति विनार्थे । बहिर्विकारं प्रकृतेः पृथग्विदुः ॥ सुदि । इति शुक्लपक्षे ॥१७॥

स्वरादीनां कारकशक्त्याश्रयसत्त्वाभिधायिनां स्वर्गन्ता स्वः स्पृहयतीत्यादौ यथायोगमुत्पन्नाया द्वितीयादिविभक्तेर्लुक् । पञ्चकृत्वःप्रभृतयस्तु विभक्त्यर्थप्रधानाः । स च विभक्त्यर्थः प्रातिपदिकार्थः सम्पन्नइति प्रातिपदिकार्थे प्रथमैव भवति । सापि सङ्ख्याविशेषाभावान्न सर्वा किं तर्ह्येकवचनमेव तस्योत्सर्गत्वात् । तथा चोक्तम् (१) । एकवचनमुत्सर्गः करिष्यत इति । एतन्नः सम्मतम् ॥ सुधाकरस्त्वाह । अव्ययेभ्यस्तु निःसंख्येभ्योऽव्ययादाप्सुपइति ज्ञापकाद्विभक्त्युत्पत्तिः ॥ अत्राहुः । का पुनरसौ । अत्रैके तसिलादीनामदूरविप्रकर्षादानुगुण्याच्च पञ्चम्यादय एवेत्याहुः । तन्न । अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थीभूत इति प्रथमैव निःसंख्येभ्योऽपि न्याय्या ॥ अपि च । ज्ञापकात्प्रयोजनस्य पदत्वादेः सिद्धये क्रमव्यतिक्रमे प्रयोजनाभावात् कपिञ्जलाधिकरणन्यायेन प्रथमैव युक्ता । नहि कपिञ्जलानालभेतेति पञ्चषा आलभ्यन्ते किन्तु त्रय एव । न हिंस्याद्भूतानीति वचनात् । अत्रैवमिति न वाच्यं क्रमव्यतिक्रमे प्रयोजनाभावात् । न ह्योदकान्तात्प्रियं प्रोथमनुव्रजेदिति द्वितीयाद्युदकान्तानुव्रज्या ज्यायसी । तदुक्तम् । प्रथमएव वा नियम्येत कारणादतिक्रमः स्यादिति । प्रथमत्रित्वे बहुवचनं नियम्यत इत्यत्र सूत्रार्थः ॥ अतश्चोच्चैः शब्दादीनामधिकरणशक्तिप्राधान्येऽपि प्रथमा न्याय्येति मत्वा वृत्तिकारैः सपूर्वायाः प्रथमाया विभाषेत्यत्र ग्राम उच्चैस्ते स्वम् । ग्राम उच्चैस्तव स्वमित्याद्युदाहृतम् । यस्तु तत्रेत्यत्र तत्रेति सप्तम्यन्तं समस्यत इति जयादित्यग्रन्थः स सप्तम्यर्थाभिधानसाधर्म्यादेवमुक्तः । एवमन्तःशब्दात् स्वयंशब्दाच्च प्रथमैव न्याय्या ॥ एकवचनमुत्सर्गः करिष्यत इत्यप्युक्तम् । अर्थकथनं चैषां चादीनामुपलक्षणमात्रं द्रष्टव्यम् । तथा चोक्तम्—

---

(१) व्याकरणमहाभाष्यइति शेषः ।

निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः ।
अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनमिति ॥
आकृतिगणौ चेमौ । तेनान्येऽपि लक्ष्यानुसारतोऽनुसर्त्तव्याः ॥
इति चादिस्वरादी ॥

**कस्कायस्कुण्डसाद्यस्काः सहकौतस्कुता मताः ।**
**सद्यस्कालशुनस्कर्णावयस्कान्तश्च भास्करः ॥१८॥**

कस्क आदिरित्यनेन कस्कइत्यादिः शब्दगणो निपात्यते ॥ किम् सु । किमः कः । रोरिति विसर्जनीयः । वीप्सायां द्विर्वचनम् ॥ कःक इति तत्र पूर्वस्य विसर्जनीयस्य कस्क आदि(१) रित्यनेन सिः ॥ स च विसर्जनीयजिह्वामूलीयोपध्मानीयानां बाधकः । उदा० । कस्कोऽत्रेत्युक्तिभिः कौतस्कुतीभिर्व्यानशे स्वभूः ॥ ननु कथं कःकोऽत्र भो इति नाटकादौ प्रयोगः । उच्यते । सन्धावित्यधिकारादवसानविषयो (२) विसर्जनीयोऽत्रेत्यदोषः ॥ अपरे पुनराहुः । रूढिविषयत्वान्निपातनानां वीप्सायामेवैतत् सित्वम् (३) । अतएव । तिष्ठति कः को वा गच्छतीति वीप्साभावे सित्वं संहितायामपि न कृतम् । एवमिहापि वीप्साभावे क इति पदं पूर्वसन्तभूतसत्ताकं प्रयुज्यते । ततः कोऽत्रेति ॥ न च क्रमविवक्षायां वीप्सेति संहितायां युक्तो जिह्वामूलीयः । कᳵकोऽत्रेति ॥ अयसः कुण्डम् । अयस्कुण्डम् ॥ सद्यः क्रीणातीति क्विप् । सद्यस्क्रीः । तस्यापत्यमिदं चेत्यण् । एरितीकारलोपः । ञ्णित्यक्त्वारैजित्यनेनारैच् । तदाविवक्षितार्थाभिधायी । यदा तु सद्यः क्रीयते क्रयणं वा सद्यस्क्रीस् तत्र भवस्तदा साद्यस्क. क्रतुः ॥ अपरे सद्यः क्रीयत इति साद्यस्क्रः क्रतुः । तेषां करोतेः स्यादिभ्यः क इति कप्रत्ययः । प्रज्ञादिलक्षणश्चाण् ॥ सहकौतस्कुता इति । सह कौतस्कुतेन । सहकौतस्कुताः ॥ सहस्य बहुव्रीहेः स इत्यनेन विभाषितः सः ॥ किमः पञ्चम्याबह्वद्व्यादिसर्वादिभ्य इत्यादिना तस्प्रत्यये वीप्साभीक्ष्ण्येत्यादिना द्विरुक्तिः । ततः कुतःकुत आगत इति विवक्षायामण् । तत्र सौ वादेरित्यन्त्याज्ञादिलोपः । कौतस्कुती ॥ नन्वत्र तत आगत इत्यनेन पञ्चम्यन्तादुच्यमानः प्रत्ययः कथं तसन्तात् स्यात् । अथ

(१) कस्कादिरि० इति पा० । (२) ०धिकारादवग्रहेऽवसानविषये— इति पा० । (३) सस्त्वमिति पाठान्तरम् ।

तदर्थवृत्तेरपि समुदायात्सुब्रुत्पत्तावपि भविष्यतीति चेत् । न । कृकुन्नेहामात्रतसस्त्यब्रिति स्यपा भवितव्यम् । कथमण् ? । गणपाठादिति ब्रूमः ॥ सद्यस्कालेति समस्तमसमस्तं वा । उदा० । सद्यस्कालं युयुत्सुभिः ॥ शुनः कर्णः । शुनस्कर्णः । श्लुक्प्रतिषेधोऽतएव पाठात् ॥ उदा० । शुनस्कर्णोपमैर्मुक्ता मुष्टिभिश्चक्रपङ्क्तयः ॥ रत्नमतिस्तु शुनस्कर्ण इति वाक्यं समासे तु श्वकर्ण इति प्राह ॥ अयस आकर्षकः कान्तोऽयस्कान्तः । ननु कृकमीत्येव सिद्धः किमर्थोऽस्य पाठः । तस्यैव प्रपञ्चार्थः समस्तार्थः कस्यर्थो वा ॥ उदा० । स चकर्ष परस्वं तदयस्कान्त इवायसम् ॥ भासं करोतीत्येवं शीलो विभादेरटि (१) । भास्करः ॥१८॥

मेदस्पिण्डतमस्काण्डायस्काण्डाहस्करास्तथा ।
रजःकर्णीरजस्कर्ण्यौ भ्रातुष्पुत्रदिवस्पती ॥१९॥

मेदसो वसायाः पिण्डो मेदस्पिण्डः ॥ तमसः काण्डं तमस्काण्डम् ॥ प्रशस्तं वा तमः । तमस्काण्डम् ॥ उदा० । क्षपातमस्काण्डमलीमसं नभः ॥ अयसः काण्डम्—अयस्काण्डम् ॥ प्रशस्तमयो वा । अयस्काण्डम् ॥ न जहाति न त्यजति दिनकरमित्यहर्दिवा । तत्करोतीत्येवं शीलोऽहस्करः ॥ उदा० । अलंकारास्य वधूरहस्करः ॥ रजसः कर्णी रजस्कर्णी । कृकमीत्यादिना नित्यं स्यादेशे (२) प्राप्ते विकल्पार्थः पाठः ॥ भ्रातुः पुत्रो भ्रातुष्पुत्रः । ऋतो विद्यायोनिसम्बन्धात्तेष्वित्यनेन षष्ठीसमासे श्लुक्प्रतिषेधः ॥ दिवः पतिः । दिवस्पतिः शक्रः । श्लुक् प्रतिषेधोऽतएव पाठात् ॥ सर्पिष्कुण्डिका । धनुष्कपालम् । बर्हिष्कपालम् । यजुष्पात्रमित्येकेषां पाठ उत्तरपदस्यस्यापि षत्वं यथा स्यादिति । परमसर्पिःफलमित्येवमादिप्रत्युदाहरणं पारायणिका आहुः । भाष्ये वृत्तौ नित्यं समासेऽनुत्तरपदस्थस्येत्यत्र परमसर्पिःकुण्डिकेत्येतदेव प्रत्युदाहरणम् । अस्माकं चायमेव पक्षः संमतः ॥

आकृतिगणश्चायम् । तेनापरिगणितशब्दसमूहः । य आकृत्याकारेण लक्ष्यते स आकृतिगणः । अयमर्थः—यथा भास्करादिशब्दः साधुः स्वार्थप्रत्यायने

---

(१) दिवाविभेति ३ । २ । २१ सूत्रेण टः प्रत्ययः । एतद्ग्रन्थकारमते तु तत्राङ्विधिः । बहुव्रीहिकर्मधारयसमासयोश्च टित्वे भेद इति ध्येयम् ।

(२) सादेशे—इति पा० ।

समर्थस्तद्वद्योऽन्योऽपि सिविधानाच्छिष्टसम्मतः स गणेऽस्मिन् प्रविष्टः सन् साधुत्वभाग् द्रष्टव्य इति ॥१९॥

इति कस्कादिः ॥

अहनः पतौ गणे पुत्रे पतिपुत्रे च गीर्धुरः ।
राज्ञि प्रचेतसो रः स्याद्विसृष्टस्योपसो (१) बुधे ॥२०॥

पत्याद्येऽहरादेर्वेत्यनेन विकल्पेन रेफादेशो विधीयते(२) ॥ उपसि रात्रौ बुध्यते प्रकाशते—उषर्बुधः ॥ उषर्भुदित्यपि श्रीवत्सुकः ॥ शेष तु सुगमम् ॥२०॥

इत्यहरादिपत्यादौ ॥

सर्वान्यविश्वोभयनेमयत्तदः किंयुष्मदस्मद्द्विभवत्त्यदेतदः ।
उभत्वदन्योऽन्यपरस्परेतराः समः सिमत्वान्यतरेतरेतराः ॥२१

सर्वादेर्गणात् । ए, असि, इ, इत्येतेषां स्थाने । सर्वादेरेभ्यः स्मै । स्मात् । स्मिन् । इत्यनेन यथाक्रमं स्मै । इत्यादय आदेशा भवन्ति ॥ सर्व इति सं ख्याप्रकारकलावद्विषये कात्स्न्र्ये ॥ तत्र संख्याकात्स्न्र्ये । यथा—सर्व आयाता यावन्तो लिखिता दश द्वादश वा त आयाताः । कात्स्न्र्येन समागता इत्यर्थः ॥ प्रकारकात्स्न्र्ये । यथा—सर्वाण्यन्नानि भुक्तानि । सर्वप्रकाराणीत्यर्थः । कलावत्कात्स्न्र्ये । यथा—सर्व ओदनो भुक्तः । यो दत्त ओदनः स सकलो भुक्त इत्यर्थः ॥ सर्वस्मै । सर्वस्मात् । सर्वस्मिन् ॥ तत्पुरुषस्योत्तरपदार्थप्रधानत्वात् परमसर्वस्मै—इत्यादावपि ॥ असर्वस्मै । इत्यादौ नञ्समासेऽपि स्वार्थापरित्यागात् ॥ तथाहि—य एवाश्वशब्देन वक्तुमिष्टः सएव जात्यादिविकलोऽनश्वशब्देनापि ॥ विश्वादीनामप्येवम् । अतो न सर्वादिव्याघातः ॥ यदा पुनरुपसर्जनीकृतस्वार्थानामर्थान्तरवृत्तित्वं तदा प्रियसर्वायेत्यादौ न स्यात् । एतच्च सर्वादेरिति षष्ठीनिर्देशान्निश्चीयते ॥ अन्यस्मै । अन्यत् ।

---

(१) विसृष्टस्य—विसर्गसहितस्योषःशब्दस्येत्यर्थः । सिद्धानुवादोऽयं निर्विसर्गोषाशब्दनिवृत्त्यर्थः । (२) अहर्पतिः । अहःपतिः । अहर्पुत्रः । अहःपुत्रः । गीर्पतिः । गीष्पतिः । धूर्पतिः । धूःपतिः । गीर्पुत्रः । गीःपुत्रः । धूर्पुत्रः । धूःपुत्रः । प्रचेता राजन् । प्रचेतो राजन् ॥

पृथग्वचनोऽयम्॥ विश्वस्मिन्॥ उभयस्मिन्॥ नेम इति सर्वार्धार्थयोः। नेमस्मिन्॥ यदिति निर्देशे। यस्मिन्। यतते प्रयत्नं करोति। तेनार्थमुद्देष्टुमिति व्युत्पत्त्या उद्देशेऽपि॥ तदिति परोक्षे। तस्मिन्। तनोति विस्तृणाति प्रतिनिर्देशमिति व्युत्पत्त्या निर्देशेऽपि वर्त्तते॥ किमिति प्रश्नक्षेपयोः (१)। पृच्छ्यते क्षिप्यतेऽनेनेति किं प्रश्नवाची। कस्मिन्॥ युष्मदिति प्रत्यक्षे। युष्यते सेव्यत उपचारवतीभिर्वाग्भिरिति। त्वकम्॥ अस्यते क्षिप्यते सत्कार इति। अहकम्॥ परमात्मवाचिनौ युष्मदस्मच्छब्दौ॥ द्वकौ॥ भवतुशब्दः परोक्षे। भवकन्तः। उदिच्च च्छन्दोभङ्गभयान्नोपात्तः॥ त्यस्मिन्॥ एतदिति प्रत्यक्षे। एतस्मिन्। एजति(२) कम्पतेऽनेन वचसा सामीप्यवाचिना सत्त्वमिति व्युत्पत्त्या सामीप्येऽपि॥ उभौ। उभाभ्यां हेतुभ्याम्। उभयोर्हेत्वोः। अस्य पाठः सर्वादेरमित्यनेन सर्वविभक्त्यर्थः॥ त्वदिति समुच्चयवाचकः। त्वकत्॥ अन्योन्यपरस्परशब्दौ क्रियाविनिमये। अन्योऽन्यस्मै। परस्परस्मै॥ इतरेति पृथगर्थे। इतरस्मिन्॥ समसिमशब्दौ सर्वार्थे। समस्मिन्। सिमस्मिन्॥ सिमः शक्रः। सितः। अवबद्ध इत्यर्थइत्येके। सिम इति मर्यादायामित्यपरे॥ त्वान्यतरशब्दावन्यार्थे। त्वस्मै। अन्यतरस्मै। अस्य त्वस्मादेव गणपाठात्सिद्धिः॥ शाकटायनस्तु यत्तत्किमन्यद्द्वयोर्निर्धार्ये डतरः। वैकाद्बहूनां प्रश्ने डतमश्चेति सूत्राभ्यां डतरडतमौ। अन्यतराऽन्यतमौ सिद्धौ। ततोऽन्यतरशब्दस्य डतरान्तद्वारेणैव ग्रहणे सिद्धेऽन्यतरग्रहणमन्यतमव्यवच्छेदार्थमित्याह॥ इतरेतरेति क्रियाविनिमये। इतरेतरस्मै॥२१॥

एकेदमदसो ज्ञेया डतरो डतमस्तथा।
स्वमज्ञातिधनेऽनाम्नि कालदिग्देशवृत्तयः॥२२॥
[पूर्वापरावरपरा उत्तरो दक्षिणाधरौ।]

एकेति संख्यासहाययोः। एति गच्छति गणनामित्येकः। एति गच्छत्यद्वितीय इति वा। एकस्मिन्॥ इदमिति प्रत्यक्षे। अस्मिन्॥ अदस्। इत्यप्रत्यक्षे। अमुष्मिन्॥ डतरडतमौ प्रत्ययौ। तदन्तः सर्वादिर्भवति। यतरस्मिन्। यतमस्मिन्। ततरस्मिन्। ततमस्मिन्। कतरस्मिन्। कतमस्मिन्।

---

(१)प्रश्नाक्षेपयोरिति पा०। (२) एजते—इति पा०।

एकतरस्मिन्। एकतमस्मिन्॥ स्वमज्ञातिधन इति स्वशब्दोऽर्थचतुष्टयवृत्तिस्तत्रात्मनि ज्ञातिधनयोश्च रूढितः। अस्य वृत्तिः। यथा हरिशब्दस्य तुरङ्गवानरदर्दुरादिषु। आत्मीये तु सर्वत्र विशेषणरूपतया वृत्तिस्तत्रास्य सर्वनामसंज्ञा। स्वे पुत्राः। स्वेषां गृहाणां स्वामी। आत्मीयानामित्यर्थः॥ स्वस्मै बहुमानः। आत्मन इत्यर्थः॥ स्वे पुत्रा इति न पुत्रा ज्ञातयः किन्तु पितृव्यमातुलश्वशुरादयः सपरिच्छदाः। स्वे गाव इति न गावो धनं किन्तु रुक्मरजतकार्षापणरूपकादिकं धनमुच्यते॥ ज्ञातिधनयोस्तु न भवति। स्वे रक्षा विधेया। ज्ञातावित्यर्थः॥ स्वाय स्पृहयति। धनायेत्यर्थः॥ तथा ज्ञातिधनविशेषणत्वेऽपि स्वशब्दस्य निषेध एव। स्वा ज्ञातयश्चैत्रस्य। स्वे धने रक्षा। आत्मीय इत्यर्थः॥ अपरे तु स्वस्मै पुत्राय। स्वस्मै गव इति ज्ञातिधनार्थयोः प्रतीतौ कथं न निषेधः। उच्यते। पुत्रगोशब्दयोर्हि सान्निध्यादेतदुभय गम्यते स्वशब्दात् स्वात्मीयत्वमात्रमिति। स्वाय ज्ञातये। स्वाय धनायेत्यत्र च शब्दान्तरमनपेक्ष्य ज्ञातिधने स्वरूपेणैव स्वशब्देनाभिधीयेते। यद्येवं ज्ञातिधनयोरनुप्रयोगोऽपि नोपपद्यते पर्य्यायत्वात्। यथा वृक्षशब्दप्रयोगे तरुशब्दस्य। नैष दोषः। पर्यायशब्दो हि यत्राऽनेकार्थः संदिग्धार्थो वा तत्र तदर्थस्य व्यक्तीकरणार्थः पर्य्यायान्तरस्यानुप्रयोगो न विरुध्यते। यथाऽर्कोद्यनेकार्थवृत्तेर्हरिशब्दस्य प्रयोगे सिंहशब्दस्य। यथा च संदिग्धार्थस्य पिकशब्दस्य प्रयोगे कोकिलशब्दस्य। स्वशब्दश्चायमनेकार्थ इति तत्रासत्यनुप्रयोगे किं विषयोऽयं प्रवृत्त इति संदेहः स्यात्। तन्निरासार्थो युज्यते ज्ञातिशब्दस्यानुप्रयोग इति व्याचक्षते॥ अनाम्नि कालदिग्देशवृत्तय इति। पूर्वादयः शब्दा असंज्ञायां वर्त्तमाना दिगादिवृत्तयः सर्वादिकार्यभाजो भवन्ति। तदत्र—

पूर्वापरादिशब्दानां केषाचित् प्रविभागतः।
सामान्येनाभिधानेऽपि प्रवृत्तिर्देशकालयोः॥

तथाहि—पूर्वापरावरपरोत्तरशब्दा मुख्यवृत्त्या दिक्कालयोर्वर्त्तन्ते। तदवच्छिन्ने देशग्रामारामस्तम्भकुम्भादौ च। तथाहि—पूर्वस्यां दिशि वसति। पूर्वस्या दिश आगतः। पूर्वदिक् सम्बन्धात् पूर्वा वापी। पूर्वस्यां वाप्यां शीतमुदकम्। तथा पूर्वस्मिन् ग्रामे वने देशे वा सुखवासः॥ पूर्वः कालो रम्यः। पूर्वकालसम्बन्धात् पूर्वो गुरुः। पूर्वस्मिन् गुरौ वसति। पूर्वस्मात्प्रासादादागतः॥ अपरावरपरशब्दत्रयस्य विनापि दिक्कालसम्बन्धं देशवृत्तित्वं

स्यात्। तथा हि—अपरदेशसम्बन्धादपरो ग्रामः। अवरो वा॥ तस्मिन् परस्मिन् पर्वते वसति। सति संनिकर्षे विप्रकर्षे च सर्वासु दिक्षु तुल्योऽयं व्यपदेशः। ततो न दिगभिसम्बन्धवृत्तिः। एकस्यामेव दिशि स्थितयोर्निकटाऽनिकटयोः पराऽवरादिव्यपदेशप्रवृत्तेरेतच्छब्दत्रयापेक्षया मुख्यवृत्या सार्थकं देशग्रहणं नत्वन्यस्य स्वतो देशवृत्तित्वम्। संनिकर्षासंनिकर्षयोर्देशवत्कालोऽप्युपाश्रयः। ततः परः कालः। अपरोऽवरो वा। परस्मिन् काले जातः। अपरस्मिन्। अवरस्मिन् वा॥ अथ परकालसम्बन्धात् परः श्रीहर्षः। अपरकालसम्बन्धादपरो भोजदेवः॥ परः पाणिनिः। अपरः शिवस्वामी॥ परस्मिन् श्रीहर्षे भक्त इत्यादि॥ दक्षिणाधरशब्दौ दिशि दिगवच्छिन्ने च कलशादौ वर्त्तेते न तु कालेनापि कालावच्छिन्ने। दक्षिणस्यां दिशि वसति। दक्षिणस्मिन्पर्वते देशे वा तदवच्छिन्ने। तथाहि—अधरस्यां दिशि पर्वताद्वसति। अधरदिक्सम्बन्धादधरस्मिन् प्रासादे देशे वा वसति॥ अनाम्नीति किम्। उत्तराः कुरवः। संज्ञारूपेण रूढोऽत्रोत्तरशब्दः। विदेहवर्षवासिनामेकस्यामेव दिशि देवकुरूत्तरवर्षे॥ दिग्देशकालेभ्योऽन्यत्र। दक्षिणा गायकाः। प्रवीणा इत्यर्थः॥ एवम् अधरे ताम्बूलरागः। उत्तरे प्रत्युत्तरे वा शक्तः॥ दक्षिणायां कृतमतिर्विप्रः। इत्यदिग्देशकालवृत्तय इति विस्पष्टोऽयमर्थनिर्देशः॥ ननु व्यवस्थायामसंज्ञायामित्येवमुपक्षिप्य स्वाभिधेयापेक्षोऽवधिर्नियमो व्यवस्थेति यथाऽन्यैर्व्याख्याता। दुरवबोधत्वात्॥ ननु, स्वेषां चैव परेषां च जायन्ते कम्पसम्पदः। क्षीणाः परे शत्रवः। इत्याहुरपरे। इत्यादिप्रयोगेषु कथं जसादीनां सर्वादिकार्य्यविधिः। न ह्यत्र दिग्देशाद्यवच्छेदोऽस्तीति। उच्यते—सारूप्योपचाराच्छिष्टाभीष्टेश्च न दुष्टता ॥२२॥

## अन्तरं चोपसंव्याने बहिर्योगे तथाऽपुरि ॥२३॥

उपसंव्यान इति। उपसंवीयत आच्छाद्यते यत्तदित्युपसंव्यानम्। यद्वा, संवीयतेऽनेनेति संव्यानम्। तस्य समीपं उपसंव्यानम्। तस्मिन्॥ बहिर्योग इति। बहिरित्यनावृतो देशः। तेन योगो बहिर्योगः। एतस्मिंश्च पूर्ववर्जितेऽन्तरशब्दः सर्वादिर्भवति॥ अन्तरस्मै शाटकाय। वस्त्रान्तरेणावृतायेत्यर्थः॥ अन्तरस्मै गृहाय। बाह्याय चाण्डालगृहायेत्यर्थः॥ अपुरीति किम्। अन्तरायां

पुरि वसति । ज्ञाच्छायामित्यर्थः ॥ अयमनयोरन्तरे तापसः प्रतिवसतीत्यादौ मध्यवृत्तित्वेन न भवति ॥२३॥

इति सर्वादिः ॥

त्यत्तद्यदिदं युष्मदद्व्येकादः स्यादथो भवत्वेतत् ।
अस्मत्किमौ च विबुधैर्विज्ञातव्यौ त्यदादिगणे ॥२४॥

एषां त्यदादित्वे यथास्थानं प्रयोजनं द्रष्टव्यम् ॥

इति त्यदादिः ॥

यस्कोत्कासवशिष्ठकुत्सखरपाः कुब्र्यत्रि(१) जङ्घारथाः—
पर्णाटोपरिमेखलौ विपपुटद्रुह्याङ्गिरोविश्रयः ।
पिण्डीजङ्घभलन्दनौ च भडिलः कर्णाटकर्णाढकौ—
लह्योभण्डिलशीर्षमायभृगवो रक्षोमुखो वर्षुकः ॥२५॥

यस्कादयः शब्दाः स्यगलपर्य्यन्ता यस्कादिभ्योऽपत्य (२)इत्यनेन सूत्रेण विहिताऽपत्यप्रत्ययलुग्भाजो(३) भवन्ति बहुत्वेऽस्त्रियाम् ॥ यच्छति निगृह्णाति पापमिति यस्क ऋषिः । तस्यापत्यानि यस्काः । शिवादिपाठादुत्पन्नस्याणः ॥ उत्कसतीत्युत्कासः । तस्य—उत्कासाः । अत इञः ॥ वशिपु तिष्ठतीति वशिष्ठः । तस्य—वशिष्ठाः ॥ कुत्साः । ऋष्यणः ॥ खरान् पातीति खरपः । तस्य—खरपाः । नडादिफणः(४) ॥ कुब्रेः—कुब्र्यः(५) । गृष्ट्यादि ढञः ॥ अत्ति ग्रसते सर्वविद्या इत्यत्रिः । तस्य—अत्रयः । इतोऽनिञ इत्यनेन विहितस्य ढणः । जङ्घे एव रथो यस्य स जङ्घारथः । तस्य जङ्घारथाः ॥ अन्ये । जङ्घे एव रथो यस्य स जङ्घेरथः । निपातनात्सुपः अलुगभावः । तस्य जङ्घेरथा इत्याहुः ॥ पर्णार्थमटतीति पर्णाटः । तस्य पर्णाटाः ॥ उपरि ग्रीवायां मेखला यस्य तस्योपरिमेखलाः ॥ विप पुटो ओष्ठयोर्यस्य स विपपुटो दुर्भाषी । तस्य विपपुटाः । एभ्योऽत इञः ॥ द्रुहि साधुर्द्रुह्यः ।

---

(१) कुब्र्यत्रि०—इति पा० । (२) ०भ्यो गोत्र इ०—इतिपाठान्तरम् ।
(३) लुग्भाजो भ० इति पा० । (४) फक इति तु युक्तम् । (५) कुब्रेः—कुब्र्यः—इति पा० ।

तस्य–द्रुह्याः ॥ शिवाद्यण: ॥ अङ्गिरा बृहस्पतिपिता । तस्य–अङ्गिरसः । ऋष्यण: ॥ विश्रेर्विश्रयः । गृष्ट्यादि ढञः ॥ पिण्डीयुक्ते जङ्घे यस्य तस्य पिण्डीजङ्घाः । अत इञः ॥ भलन्दनस्य भलन्दनाः । शिवाद्यण: ॥ कलन्द-नेति भोजः ॥ भडिलस्य भडिलाः । अश्वादिञ्फस्य ॥ कर्णाटस्य कर्णाटाः ॥ कर्णस्याढकं यस्य स कर्णाढकः । तस्य कर्णाढकाः । आभ्यामत इञः ॥ लह्य-स्य लह्याः । शिवाद्यण: ॥ भण्डिलस्य भण्डिलाः । अश्वादिञ्फस्य ॥ शीर्षं मिनाति–शीर्षमायः । तस्य–शीर्षमायाः । अत इञः ॥ अशुभकर्माणि तपसा भृज्जतीति भृगुः शुक्रपिता । तस्य भृगवः । ऋष्यण: ॥ रक्षस इव मुखमस्य स रक्षोमुखः । तस्य रक्षोमुखाः ॥ वर्षतीत्येवं शीलो वर्षुकः तस्य वर्षुकाः ॥ आभ्यामत इञः ॥ २५ ॥

वशीकपर्णाढकमिच्छका बहि–
र्योगोऽजबस्तिस्तृणकर्णवर्म्मकौ ।
पटाकयुक्तौ वकसक्थगोतमौ–
स्यात् क्रोष्टुमायः कटुमन्थमित्रयू ॥२६॥

वशीकस्यापत्यानि वशीकाः ॥ पर्णस्याढकं यस्य स पर्णाढकः । तस्य पर्णाढकाः ॥ मिच्छतीति मिच्छकः । तस्य मिच्छकाः ॥ बह्निर्योगो यस्य स बह्निर्योगः । तस्य––बह्निर्योगाः ॥ अन्ये तु । अहिना योगो यस्येति । अहि-र्योगः । गणपाठाद्रेफ इत्याहुः ॥ अजवस्तयः । गृष्ट्यादिढञः ॥ तृणकर्णाः । शिवाद्यण: ॥ वर्म्मकाः ॥ पटाकाः ॥ वकसक्थाः ॥ एभ्योऽत इञः ॥ गोत-मस्य गोतमाः ॥ ऋष्यण: ॥ क्रोष्टारं मिमीते । क्रोष्टोरिव मायाऽस्येति वा । क्रोष्टुमायः । तस्य क्रोष्टुमायाः ॥ कटु मथ्नातीति कटुमन्थः । तस्य कटुमन्थाः ॥ अपरे कटुकमन्थ इत्याहुः । अन्यस्तु कटुक मन्थकेति पृथक् शब्दद्वयमिद-मित्याह ॥ आभ्यामत इञः ॥ मित्रयोर्मित्रयवः ॥ औत्सर्गिकस्याण: ॥२६॥

क्रोष्टुपादसदामत्ताऽयःस्थूणक्शभण्डिताः ।
पदकः कपको हारः कम्बलात् स्थगलस्तथा ॥२७॥

क्रोष्टोरिव पादौ यस्य स क्रोष्टुपादः । पाठसामर्थ्यात् पादस्य समासान्ते लुग्न भवति । क्रोष्टून् पादयति निष्कासयतीति वा । क्रोष्टपादः । तस्य

क्रोष्टुपादाः । क्रोष्टमानमिव मानं यस्य स कोष्टमान इति केचित् ॥ सदासत्तस्य सदासत्ताः । आस्थासत इञः ॥ अयोमयी स्थूणा यस्य सोऽयःस्थूणः । तस्यायःस्थूणाः ॥ शिवाद्यण् ॥ कृशस्य कृशाः । अत इञः ॥ भण्डितस्य भण्डिताः । अश्वादिष्फस्य ॥ पदं वेत्त्यधीते वा । पदकः । तस्य पदकाः । कषतीत्यौणादिकेऽके । कषकः । तस्य कषकाः ॥ कठम इति भोजः ॥ हारः कम्बलादिति कम्बलपूर्वो हारशब्दो ज्ञेयः ॥ कम्बलं हरतीति कम्बलहारः । तस्य कम्बलहाराः ॥ स्थगतीति स्थगेरौणादिकेऽल्प्रत्यये । स्थगलः । तस्य स्थगलाः ॥ एभ्योऽत इञः ॥ एवं पुष्करसच्छब्दस्य बाह्वादीञः श्लुग् द्रष्टव्यः । अन्ये तु भृगुकुत्सवशिष्ठगोतमाङ्गिरोऽत्रेरिति सूत्रं पृथग्विदुः । तेषां मते यज्ञादित्वाद् यज्ञादेर्द्व्येकेषु षष्ठ्यास्तत्पुरुष इत्यनेन भृगुकुलं भार्गवकुलमित्यादि सिध्यति ॥२७॥

इति यस्कादिः ॥

उपकलमकौ पिष्टोदङ्कौ कुषीतककर्णकौ
कमककलशीकण्ठौ कृष्णाजिनानुपदौ तथा ।
बधिरकखरीजङ्घावेतौ वटारकपर्णकौ–
गडुकजतुकौ लेखाभ्रूश्च प्रतानपतञ्जलौ ॥२८॥

उपकादयः शब्दा वोपकादेरित्यनेन सूत्रेणापत्यप्रत्ययश्लुग्भाजो वा भवन्ति ॥ उपकस्यापत्यानि । उपकाः । औपकायनाः ॥ लमकाः । लामकायनाः ॥ नडादिफण् श्लुक् ॥ पिष्टस्य पिष्टाः । पैष्टायनाः ॥ उदङ्कस्य । उदङ्काः । औदङ्कयः । अत इञः ॥ कुष्णाति भवबन्धनादात्मानमिति कुषीतको नाम मुनिः । तस्य कुषीतकाः । कौषीतकयः ॥ कर्णयतीति कर्णकः । तस्य कर्णकाः । कार्णकयः ॥ कमेरौणादिकेऽके कमकः । तस्य कमकाः । कामकयः ॥ कलशी कण्ठे यस्य तस्य कलशीकण्ठाः । कालशीकण्ठयः ॥ कृष्णमजिनं यस्य तस्य कृष्णाजिनाः । कार्ष्णाजिनयः । अनुगतं पदं यस्य तस्य । अनुपदाः । आनुपदयः ॥ बन्धेः किरः । बधिरः । बधिर एव बधिरकः । तस्य बधिरकाः । बाधिरकाः । शिवाद्यण् ॥ भोजस्तु बधिरकाः । बाधिरकय इत्याह । खरी जङ्घे यस्य तस्य खरीजङ्घाः । खारीजङ्घयः ॥ वटारको वैश्रवणभक्तः । तस्याऽपत्यानि वटारकाः । वाटारकयः ॥ पर्णानि करोतीति पर्णकः । तस्य

पर्णकाः । पार्णकयः ॥ गडुकस्य गडुकाः । गाडुकयः ॥ जतुकस्य जतुकाः । जातुकयः ॥ लेखाकारे भ्रुवौ यस्य स लेखाभ्रूः । तस्य लेखाभ्रुवः । लैखाभ्रेयाः। शुभ्रादि ढगाः ॥ प्रतानस्य प्रतानाः । प्रातानयः ॥ पतञ्जलति घनी भवति । पतञ्जलः । अतएव निपातनात्तकारस्य सकारः । तस्य पतञ्जलाः । पातञ्जलयः ॥ भोजस्तु पतञ्जलिशब्दमिकारान्तं मन्यमानः पतञ्जलयः । पातञ्जलाः । औत्सर्गिकाणः शलुकीत्याह ॥२८॥

शलाथलाडारककृष्णपिङ्गलाः, कठेरणिः पिङ्गलकः कमन्दकः ।
निदाघचूडारककृष्णसुन्दराः,सुपिष्टपिञ्जूलकवर्णकास्तथा॥२९॥

शले स्थलमस्य । शलाथलः । सकारलोपो दीर्घश्च निपातनात् । तस्य शलाथलाः । शालाथलयः ॥ थलाथल इत्यन्ये ॥ अडतीति—अडारकः । तस्य—अडारकाः । आडारकयः ॥ कृष्णश्चासौ पिङ्गलश्च । कृष्णपिङ्गलः । तस्य कृष्णपिङ्गलाः । कार्ष्णपिङ्गलयः ॥ कठेरणेः कठेरणयः । काठेरणाः ॥ वामनस्त्वीकारान्तं मन्वानः कठेरण्य इत्याह । अत्राणः । अन्ये कठेरणेत्याहुः । पिङ्गलकस्य पिङ्गलकाः । पैङ्गलकयः ॥ पिङ्गुलक इति शाकटायनः ॥ मन्द एव मन्दकः । के शिरस्यात्मनि वा मन्दकः । कमन्दकः । तस्य कमन्दकाः । कामन्दकयः ॥ निर्गतो दाघो यस्मात् स निदाघः । तस्य निदाघाः । नैदाघयः ॥ चूडारकस्य—चूडारकाः । चौडारकयः ॥ वडारक इति भोजः ॥ मटारक इति वामनः ॥ कृष्णश्चासौ सुन्दरश्च—कृष्णसुन्दरः । तस्य कृष्णसुन्दराः । कार्ष्णसुन्दरयः ॥ शोभनं पिष्टं यस्य स सुपिष्टः । तस्य सुपिष्टाः । सौपिष्टाः । शिवाद्यणः ॥ पिञ्जूलकस्य पिञ्जूलकाः । पैञ्जूलकयः ॥ वर्णयतीति वर्णको गणकः । तस्य वर्णकाः । वार्णकयः ॥२९॥

मसुरकर्णपदञ्जलजन्तुकाऽनभिहितप्रतिलोमकपिप्पलाः ।
जतुरकः कशकृत्स्नसुधायुकौ जटिलकश्च मदाघकवन्तकौ ॥३०॥

मसुरइव कर्णावस्य मसुरकर्णः । तस्य मसुरकर्णाः । मासुरकर्णाः । शिवाद्यणः ॥ अपरे मसूराविव कर्णावस्य—मसुरकर्णः । निपातनाद् ह्रस्व इत्याहुः ॥ मयूरकर्णमपरे पठन्ति ॥ पदञ्जलस्य पदञ्जलाः । पादञ्जलयः ॥ जायत इति जन्तुः । ततः के जन्तुकः । तस्य जन्तुकाः । जान्तुकयः ॥ अभिपूर्वस्य

हिनोतेर्दधातेर्वा क्ते नञि च । अनभिहितः । तस्य—अनभिहिताः । आनभिहितयः ॥ केचित् अभिहितेति नञा विना पठन्ति । तत्राऽभिहिताः । आभिहितयः ॥ प्रतिगतानि लोमान्यस्य । प्रतिलोमः । प्रत्यन्ववात् सामलोम्न (५।४।७५) इत्यत् समासान्तः । प्रतिलोमाः । प्रातिलोमयः ॥ कपीनां स्थलमिव स्थलमस्य—कपिष्ठलः । तस्य—कपिष्ठलाः । कापिष्ठलयः ॥ केचित् कपिष्ठलाः । कापिष्ठलायनाः । नडादिफणन्तमुदाहरन्ति ॥ जतुरकस्य जतुरकाः । जातुरकयः ॥ कशाभिः कृन्तति । कृतेः क्स्ने । ङ्याप्त्वे च ह्रस्वश्च बहुलमित्यनेन ह्रस्वत्वे—कशकृत्स्नः । तस्य—कशकृत्स्नाः । काशकृत्स्नयः ॥ वामनस्तु कशकृत्स्नेत्याह ॥ सुधायुकस्य—सुधायुकाः । सौधायुकयः ॥ जटाः सन्त्यस्य जटिलः । के जटिलकः । तस्य जटिलकाः । जाटिलकयः ॥ शाकटायनस्तु शिवाद्यणन्तमाह ॥ मदेनाघं यस्य स मदाघः । तस्य मदाघाः । मादाघयः ॥ कवृवर्णे इत्यस्य क्विपि कव् । कव् अन्ते यस्य स कवन्तकः । तस्य कवन्तकाः । कावन्तकयः ॥ एभ्योऽत इञः ॥३०॥

कमन्तकः कदामत्तः खरीखभ्राष्टकौ तथा ।
अपजग्धानुलोमौ च दामकण्ठोऽप्यबन्धकः ॥३१॥

कमु कान्तावित्यस्य विचि कम् । कम् अन्ते यस्य स कमन्तकः । तस्य कमन्तकाः । कामन्तकयः ॥ कदामत्तस्य कदामत्ताः । कादामत्तयः(१)॥ खरी रासभी तां खनतीति विचि खरीखा । तस्य खरीखाणः । खारीखणाः ॥ सामान्याणः ॥ भ्राष्टकस्य भ्राष्टकाः । भ्राष्टकयः ॥ अपपूर्वस्यादेर्जग्धादेशे । अपजग्धः । तस्यापजग्धाः । आपजग्धयः ॥ भोजस्त्वपदग्धेत्याह ॥ अनुलोमस्य—अनुलोमाः । आनुलोमयः ॥ वामनस्तु गणपाठात् समासान्ताभावे-ऽनुलोमानः । प्रतिलोमानः कुमाराइत्याह ॥ दाम कण्ठे यस्य स दामकण्ठः । तस्य दामकण्ठाः । दामकण्ठयः ॥ बन्धं करोतीति बन्धकः । न बन्धकोऽबन्धकः । न विद्यते बन्धोऽस्येति वा । अबन्धकः । तस्य—अबन्धकाः । आबन्धकयः ॥ अबद्धक इत्येके ॥ एभ्योऽत इञः ॥३१॥

इत्युपकादिः (२।४।६८) ॥

---

(१) कदामत्तस्य—कदामत्ताः । कादामत्तय इति पा० ।

तिककितवौरसलङ्कटकृष्णाजिनकृष्णसुन्दराः कथिताः ।
उपकलमकाश्च वङ्खरभण्डीरथपफकनरकाश्च ॥३२॥

तिककितवादयस्तिककितवादौ(१) द्वन्द्व(२।४।६८)इत्यनेन बहुत्वापत्यप्रत्यय(२)श्लुग्भाजो भवन्ति । तैकायनयश्च कैतवायनयश्च । तिककितवाः (३) । अत्र तिकादेरित्यनेन विहितस्य फिञः श्लुक् (४) ॥ औरसायनयश्च लाङ्कटयश्च । औरसलङ्कटाः । अत्र तिकादिफिञोऽत इञश्च ॥ कार्ष्णाजिनयश्च कार्ष्णसुन्दरयश्च । कृष्णाजिनकृष्णसुन्दराः । अत्रात इञः ॥ औपकायनाश्च लामकायनाश्च । उपकलमकाः । नडादिफणः ॥ वाङ्खरयश्च भाण्डीरथयश्च । वङ्खरभण्डीरथाः ॥ वङ्गरइत्यन्ये ॥ पाफकयश्च नारकयश्च । पफकनरकाः । अत इञः ॥ पफको विकत्थनः ॥ अनुकरण इत्यन्ये । पफ करोतीति पफकः ॥३२॥

वकनखगुदपरिणद्धाः शण्डिलकशकृत्स्नलङ्कशान्तमुखाः ।
प्रहितनरकोज्झककुभाः प्रोक्ता भ्राष्टककपिष्ठलाश्चात्र ॥३३॥

वाकनखयश्च गौदपरिणद्धयश्च । वकनखगुदपरिणद्धाः । आभ्यामत इञः ॥ शाण्डिल्याश्च काशकृत्स्नयश्च । शण्डिलकशकृत्स्नाः । अत इञः । बहुषु यञो लुक्सिद्धेरिञो नित्यं श्लुगर्थं वचनम् ॥ लाङ्कयश्च शान्तमुखयश्च । लङ्कशान्तमुखाः । अत्रात इञः । शं सुखं तनोतीति शान्तनं मुखमस्येति शान्तनमुख इत्यन्ये ॥ प्राहितयश्च नारकयश्च । प्रहितनरकाः ॥ औज्झयश्च काकुभाश्च । उज्झककुभाः । अत्रात इञः शिवाद्यणश्च ॥ भ्राष्टकयश्च कापिष्ठलयश्च । भ्राष्टककपिष्ठलाः । अत इञः ॥३३॥

दशोरकाग्निवेशेभ्यो गडेरकदशेरकाः ।
कृष्णेभ्यः सुन्दराः प्रोक्ताः ककुभश्च पृथोर्जकात् ॥३४॥

दंशनशीलो दशेरः—सर्पः सारमेयश्च । स्वार्थे के सति तस्यापत्यानि । गडति सिञ्चति पर्वताङ्गमिति गडेरो निर्झरः । तद्योगात्पुरुषो गडेरः ।

---

(१) तिककितवादयः पृथोर्जककुभपर्यन्तास्तिककितवादाविति पा० । (२) ०प्रत्ययाश्च लुग्भाजो० इति पा० । (३) तिकस्य कितवस्य वा अपत्यानि बहवः कुमारास्तिककितवाः—इति पा० । (४) फिञो लुगिति पा० ।

तस्यापत्यानि । दाशेरकयश्च गाह्वेरकयश्च । दशेरकगडेरकाः । अत इञः ॥ अग्निवेशाश्च दाशेरकयश्च । अग्निवेशदशेरकाः । यञः पूर्वेणैव लुक् सिद्धः ॥ परपदस्य दाशेरकिशब्दोपलक्षणार्थं त्विहोपादानम् ॥ कार्ष्णयश्च सौन्दरयश्च । कृष्णसुन्दराः । अत इञः ॥ पार्थोर्जकयश्च काकुभयश्च । पृथोर्जककुभाः । अतइञः ॥ ककुभशब्दस्य शिवादौ पाठः प्रायिकः ॥ पृथां पृथिवीमूर्जयति वर्धयति । पृथोर्जकः । पृथगूर्जक इति वा गणनिपातनात् कलोपः ॥

उपकलनकभ्रष्टककपिष्ठलकृष्णाजिनकृष्णसुन्दराणां नित्यार्थः पाठः । अन्येषां तु द्वन्द्वेऽपि पूर्वेण विकल्पः । तेन पिङ्गलककृष्णपिङ्गलाः । पैङ्गलककार्ष्णपिङ्गलयः ॥३४॥ इति तिककितवादिः ॥

ज्ञेयो गोपवनो बिन्दुः शिग्रुश्यामाकभाजनाः ।
श्यामकाश्यावतानौ च श्यापर्णः सम्बकस्तथा(१)॥३५॥

यञञोश्चेत्यनेन लुक् प्राप्तः न गोपवनादिभ्य (२।४।६७)इत्यनेन निषिध्यते ॥ गोपवनस्यापत्यानि । गौपवनाः ॥ बैन्दवाः ॥ शिग्रुरिव शिग्रुर्निःसारः कश्चित् । तस्य शैग्रवाः ॥ श्यामा लताः कायति(२)। श्यामाकः । तस्य श्यामाकाः(३)॥ भाजयतीति भाजनः । तस्य भाजनाः ॥ श्यामं करोतीति श्यामकः । तस्य श्यामकाः ॥ श्यायक इत्यन्ये ॥ श्यावानवतनोति–श्यावतानः । तस्य—श्यावतानाः ॥ श्यामानि पर्णान्यस्य । श्यापर्णः । अतएव निपातनान्मलोपः ॥ सम्बकस्य साम्बकाः । श्यवक इत्यन्ये ॥ बिन्दुभाजनस्तुपथावन्ये पठन्ति ॥ वाजसनेयो शिग्रुः प्रत्याहारः ॥ ३५ ॥

इति गोपवनादिः ॥

कौण्डिन्यागस्त्यपञ्चालिसौभ्रातकिदैवद्धिचैकयताः ।
काणिक्षालिचैटयतायिपिङ्गलिलौडिचैपयताः ॥३६॥

[illegible] ॥ [illegible] ॥ [illegible] । [illegible] । [illegible] । [illegible] । [illegible] ॥ [illegible] । [illegible] । [illegible] । [illegible]

(१) [illegible] इति पाठः । (२) [illegible] इति पाठः । (३) [illegible] इति पाठः । (४) [illegible]

न भवति ॥ आपक्षिति । दुष्टु मिथ्या क्षितोऽपक्षितः । तस्यापत्यं स्त्री । आपक्षित्या ॥ मौधातकि । शोभनं दधातीति सुधाता । तस्याऽपत्यं व्यासादीनामकञ् चेत्यनेनेञ्यकञादेशे च विहिते । सौधातक्या स्त्री ॥ दैवदत्ति । देवदत्तस्यापत्यं स्त्री । इञि । दैवदत्त्या ॥ चैकयत । चीक आमर्षणे चुरादिणिजन्तस्ततः शतुरणि स्त्री । चैकयत्त्या ॥ पाणिनिस्तु चितसंवेदन इत्यस्य चैतयत इत्याह ॥ कापिष्ठलि । कपिष्ठलस्यापत्यं स्त्री । कापिष्ठल्या ॥ चैयटत । चिट प्रैष्य इत्यतो णिचि शतरि । चेटयतोऽपत्यं स्त्री चैटयत्या ॥ आपिशलि । पिंशतीत्यौणादिककलप्रत्यये । पिशलः । न पिशलोऽपिशलः कुलप्रधानम् । तस्यापत्यं स्त्री । आपिशल्या ॥ लाडि । लड विलास इत्यस्याचि । लडः । तस्याऽपत्यं स्त्री । लाड्या ॥ चौपयत । चोपयतीति चोपयन् । तस्यापत्यमण् स्त्री । चौपयत्या ॥ ३६ ॥

वैल्वयतोऽथ क्षत्रियवाच्यो भोजश्च सूतवाग्युवतौ ।
भौरिकिभौलिकिशालास्थलिशाल्मलिकौटिसैकयताः ॥३७॥

वैल्वयतः । बिल्ववन्तमाचष्ट इति णिचि । विन्मत्वोरिति मतुब्लोपे शतरि । वैल्वयतोऽपत्यमित्यणि स्त्री । वैल्वयत्या ॥ क्षत्रियवाच्यो भोज इति क्षत्रिये वाच्ये भोजशब्दः क्रौड्यादौ भवति स्त्रियाम् । भोज्या क्षत्रिया ॥ यथा । भोज्यां प्रति व्यर्थमनोरथत्वात् ॥ भोजाऽन्या॥ सूतवाग्युवताविति सूतशब्दो युवतौ वाच्यायां क्रौड्यादौ भवति । सूत्या युवतिः । प्राप्तयौवना स्त्रीत्यर्थः ॥ अन्ये तु सूताः सारथयः । तत्सम्बन्धिनी युवतिः सूत्या । न भवत्याहुः ॥ सूत्याऽन्या ॥ भौरिकि । भूरिरेव भूरिकः । तस्यापत्यं स्त्री भौरिक्या ॥ भौलिकि । वारादेर्वलि लत्वे । भौलिकिः । तस्यापत्यं स्त्री । भौलिक्या ॥ शालास्थलि । शालास्थलस्यापत्यं स्त्री शालास्थल्या ॥ शाल्मलि । शाल्मलेः शाल्मल्या ॥ कौटि । कूट दाहेऽच् । अत इञि । कौट्या ॥ भौरिकिभौलिकिशब्दयोर्गोत्रादिपठितादिति ङ्ये प्राप्ते तद्बाधनार्थं गौरादिषु पाठः । क्रौड्यादिलक्षणस्तु ङ्यो भवत्येव । अन्यथा पाठानर्थक्यं स्यात् ॥ सैकयत । सेकृ गतावित्यतो णिचि शत्रा । सेकयन् । तस्यापत्यं स्त्री सैकयत्या ॥ आकृतिगणोऽयम् । तेनाश्वक्या काश्या रौढ्या याज्ञदत्त्या इत्यादयो द्रष्टव्याः॥ रौढिः । रूढस्यापत्यमणि स्त्री । रौढ्या । केचिद् गोकक्षशब्दं यञन्तमत्र

षेठुः । तन्मते गौकक्ष्या । फलं तु गौकक्षीपतिः । गौकक्षीपुत्रः । ष्यङः संप्रसारणं भवेदिति गोनर्दीयो मन्यते । अस्माकं तु मते पीतिमाप्याद्यत्सिद्धिः । तथा गौकक्ष्यापतिः । गौकक्ष्यापुत्र इत्येव भवितव्यम् । अत्रापाठात् । तथा च सौनागाः पठन्ति । ष्यङः संप्रसारणे गौकक्ष्या प्रतिषेध इति ॥ ३७ ॥

इति क्रौड्यादिः ॥

अजपरभृताश्वकोकिलचटकैडकमूषिकाविलातश्च ।
बालः पाको मन्दः कन्यो वत्साम्बहोडाश्च ॥ ३८ ॥

अदन्तादिभ्योऽस्वस्रादिभ्य आडित्यनेन । अकारान्ताच्छब्दात्स्वस्रादिवर्जितादजादिभ्यश्च स्त्रियां स्वार्थे आट् प्रत्ययो भवति ॥ अज गतिक्षेपणयोः । ततोऽचि । अदजादिभ्योऽस्वस्रादिभ्य आङ् इत्यनेनाडि । अजा ॥ परभृता ॥ अश्नुते पृथिवीं व्याप्नोतीत्यौणादिके वप्रत्यये । अश्वा ॥ कुक, वृक आदाने । कोकते गृह्णाति सहकारमञ्जरीमिति कोकिला ॥ चट, स्फुट भेदे । चटति भिनत्ति वस्तूनीति चटका ॥ ईड, स्तुतौ । आङ्पूर्वः । एडयतीति । एडका ॥ मुष स्तेये । मुष्णात्यपहरति वस्तुजातमिति मूषिका ॥ एषां जातिलक्षणे ङीप्रत्यये प्राप्ते ॥ विपूर्वो रा ला दाने । ततः क्ते शीतादय इत्यौणादिके वा ते । विलाता ॥ वल प्राणने । बलतीति ज्वलादेर्ण इति णे । बाला ॥ पाति पिबति पायति वा तमाहाराचारानुसंस्कारैरित्यौणादिके कप्रत्यये । पाका ॥ मन्दते स्वपितीति मन्दा । यौवनस्था स्त्री ॥ यदा तु स्त्रीजातिनाम तदा जातिलक्षणे ङीप्रत्यये ॥ कनति शोभते वपुषा कन्या ॥ अथवा । कनन्ति गच्छन्ति तस्यां रागिमनोनयनानीति कन्या । कुमारी ॥ वदति । आह्वयति पयस्कामा मातरमिति वत्सा । पुत्रिका ॥ अवति पालयति गर्भाधानात्प्रभृत्याजीवितान्तात् पुत्रमिति । अम्बा माता ॥ होडा ॥ मन्दादन्ये षडपि बाल्यवचनाः । अन्यमते तु मन्दोऽपि ॥ वयस्यनन्त्य इति ङीप्रत्यये प्राप्ते विलातेत्यत्र । क्तादल्पोक्ताविल्यनेन ङीप्रसक्तावित्यन्ये ॥ ३८ ॥

मध्यज्येष्ठौ मध्यमकनिष्ठपूर्वापहाणदंष्ट्राः स्युः ।
अपरापहाणमुग्धौ पालान्ताः सम्प्रहाणश्च ॥ ३९ ॥

मां ध्यायतीति मध्या । मध्यस्य भार्य्या वा । मध्या ॥ इयमनयोरतिशयेन वृद्धा प्रशस्या वा । ज्येष्ठा ॥ ज्येष्ठस्य भार्य्या वा । ज्येष्ठा ॥ मध्येभवा मध्यमा । मध्यान्म इति म प्रत्यये ॥ मध्यमस्य भार्य्या वा । मध्यमा ॥ अल्पतमा । कनिष्ठा । कनिष्ठस्य भार्य्या वा । कनिष्ठा ॥ वयस्यनन्त्य इत्यनेन स्याख्यादित्यनेन वा ङीप्रत्यये प्राप्ते ॥ अपहीयतेऽनयाऽस्यां वा । अपहाणा । पूर्वस्यापहाणा । पूर्वापहाणा ॥ अथ समासात्प्रागेवात्र ङीः कस्मान्न भवतीति चेत् । न । वचनानर्थक्यप्रसङ्गः ॥ यद्वा । पूर्वश्चासावपहानश्चेति पूर्वापहानः। स्त्री चेत् पूर्वापहाणा । णत्वं निपातनादेव । टिल्लक्षणे ङीविधौ प्राप्ते ॥ अपरे णत्वं नाधीयते । ते हि । ओहाङ् गतावित्यस्मिन् कृतनिष्ठातकारनकारे पूर्वमपहानमस्या इति वाऽनाच्छादाज्जातेरित्यादिना ङीप्राप्तिर्बाध्यत इत्याहुः ॥ एवम् अपरापहाणा ॥ केचित्तु परापहाणेति पठन्ति ॥ परप्रहाणेत्यपि ॥ दश्यतेऽनया । दंष्ट्रा ॥ मुग्धा । वयोलक्षणे ङीप्रत्यये प्राप्ते । यदा त्ववयोवाचकत्वं तदाऽत एवाड् भवति । एतत्तु पूर्वेष्वपि यथासम्भवं द्रष्टव्यम् ॥ पालान्ता इति पालोऽन्ते येषां ते पालान्ताः शब्दा अस्मिन् गणे द्रष्टव्याः ॥ गोपालकस्य भार्य्या । गोपालिका । स्याख्यादिति ङीप्राप्तौ । या तु स्वयं प्रतिविधानेन गाः पालयति न तत्र प्राप्तिरस्ति ॥ एवं पशुपालिका । द्वारपालिकेत्यादयो द्रष्टव्याः ॥ संप्रहाणेति पूर्वापहाणावत् ॥ भोजस्तु पूर्वापहायणा । अपरापहायणा । संप्रहायणेति पठति ॥ ३९ ॥

दिशा दृशा चुधा वाचा क्रुञ्चा देवविशोष्णिहा ।
त्रिकल्पाडो बुधैर्लक्ष्या जातिः शूद्रोऽमहत्परः ॥४०॥

दिशा । दिक् ॥ दृशा । दृक् ॥ क्षुधा । क्षुत् ॥ वाचा । वाक् ॥ क्रुञ्चा । क्रुङ् ॥ निपातनान्नलोपाभावोऽन्त्याजादिलोपाभावश्च ॥ देवविशा । देवविट् । देवानां प्रजेत्यर्थः ॥ भोजस्त्वनयोर्विकल्प नेच्छति ॥ उष्णिहा । उष्णिक् ॥ पाणिनिस्तु त्रयाणां विकल्पं नेच्छति । भाष्यकारस्तु हलन्तान्नाप् किंत्वकारान्तादित्याह ॥ शूद्रा जातिः ॥ जातिरिति किम् । शूद्रस्य भार्या । शूद्री ॥ अमहत्पर इति किम् । महाशूद्री । आभीरजातिः ॥ ४० ॥

संभस्त्रापिण्डाजिनशणत्रिपूर्वं फलं नञो मूलम् ।
प्राक् शतसदेककाण्डप्रान्तात्पुष्पं परं ज्ञेयम् ॥ ४१ ॥

संफला ॥ भस्त्राफला ॥ पिण्डफला ॥ अजिनफला ॥ शणफला ॥ ओषधिजातिविशेषाणां संज्ञा एताः ॥ त्रीणि फलानि समाहृतानि । त्रिफला। द्विगोरिति ङीप्राप्तौ ॥ अमूला । मूलान्तलक्षणे ॥ प्राञ्चि पुष्पाणि यस्याः । प्राक्पुष्पा ॥ शतपुष्पा॥ सत्पुष्पा॥ एकपुष्पा ॥ काण्डपुष्पा ॥ प्रान्तपुष्पा॥ पुष्पान्तलक्षणे ॥ आकृतिगणोऽयम् । तेन । गिरा । गीः ॥ बलाका । बड-वेत्यादयः सिद्धाः ॥

इत्यजादिः ॥

स्वसामाताननान्दाऽथ दुहिता तिस्रयुष्मदौ ।
स्तश्चतस्रस्मदौ याता नान्ता संख्यापि कीर्त्तिता ॥ ४२ ॥

स्वस्यति सम्यगाकर्षति कुलगृहद्रव्यं सोदर्यमनांस्यात्मनि प्रणयाद्वा । स्वसा। भगिनी ॥ मान्यते पूज्यतेऽप्रमेयोपकारितया श्रुतैरिति माता । जननी ॥ न नन्दति । न समृध्यति । ननान्दा । भर्त्तृभगिनी ॥ दोग्धि । अपहरति सर्वस्वं मातृकुलादिति दुहिता। सुता॥ तिस्रः॥ युष्मभ्यम् ॥ चतस्रः ॥ अस्मभ्यम् ॥ यतत उत्सहते हितप्रतिपादनेनेति याता ॥ पञ्च ॥ सप्त ॥

युष्मदस्मदोराङि प्राप्तेऽन्येषां तु ङी प्रत्यये प्राप्ते प्रतिषेधः । पाणिनिप्रभृतयस्तु युष्मदस्मदोर्गणे पाठं न प्रदर्शयन्ति । अलिङ्गत्वात् । एतच्चायुक्तम् । यतो नान्ता संख्याऽप्यलिङ्गैव ततस्तेऽपि तत्प्रदर्शनं किमिति कृतवन्तः। तस्मादत्र शब्दतत्त्वज्ञा एव प्रमाणम्॥ ननु तिस्रश्चतस्र इत्यत्र त्रिचतुरोर्विभक्तिसनिपातेन तिसृचतसृावुच्येते तत्र संनिपातलक्षणो विधिरनिमित्त तद्विघातस्येति ङीर्न भविष्यति। सत्यम् एतदेव ज्ञापयति। अनित्येयं परिभाषा । तेन या सेत्यादौ विभक्तिसंनिपातलक्षणस्त्यदाद्यकार आड्विधिनिमित्तं स्यात् ॥ ४२ ॥

इति स्वस्रादिः ॥

क्रोडवालागलाभालभगोरवाः खुरसंयुताः ।
शफो भुजो गुदो घोणाकरौ क्रोडादिनामनि ॥ ४३ ॥

क्रोडशब्दः स्त्रीलिङ्गः । विष्ठा मञ्जिष्ठा काष्ठेत्यादिलिङ्गकारिकासामर्थ्यात् । कल्याणी क्रोडा यस्याः सा कल्याणक्रोडा गौः । न ना क्रोडं भुजा-

न्तरमिति वचनादपि च ॥ रत्नमतिस्तु कल्याणः क्रोडो यस्या इति विग्रहं दर्शयन् पुंल्लिङ्गतां ख्यापयति ॥ कल्याणा बालाऽस्याः। कल्याणबाला ॥ शोभनो गलोऽस्याः। सुगला ॥ भव्यो भालोऽस्याः। भव्यभाला ॥ शोभनो भगोऽस्याः सुभगा ॥ उत्खनतीति। उखा स्फिक्। गणपाठाड्डप्रत्यय उदो दलोपः ॥ श्रीमत्युखा यस्याः। श्रीमदुखा ॥ कल्याणो गोखो यस्याः। कल्याणगोखा। इत्यपि शाकटायनः ॥ कल्याणः खुरोऽस्याः। कल्याणखुरा ॥ गवादेः पादाग्रं शफः। पवित्रः शफोऽस्याः। पवित्रशफा ॥ मृणालवद्भुजावस्याः। मृणालभुजा ॥ कल्याणो गुदोऽस्याः। कल्याणगुदा ॥ कल्याणं गुदमस्या इति तु शाकटायनः ॥ उन्नता घोणाऽस्याः। उन्नतघोणा ॥ किसलयाकारौ करावस्याः। किसलयकरा ॥

आकृतिगणश्चायम्। तेन सुरङ्गाप्रभृतयोऽन्येऽपि द्रष्टव्याः ॥ ४३ ॥

इति क्रोडादिः ॥

गौरारीहणखारकर्करचराः सारङ्गशृङ्गाढका–
द्रोणालिन्दवराहबिम्बबदरा लोहाण्डपाण्डौ पुटः।
नाटः पिण्डस्पाटचेटबरटा मूलाटसूपाण्टाः–
शूर्पासन्दनदाः पितामहमहौ मातामहो मालतः ॥४४॥

गौरादेरित्यनेन गौर इत्यादेः शब्दगणात् स्त्रियां ङी प्रत्ययो भवति ॥ गौरी वर्णयुक्ता नामधेयं वा ॥ यथा। सरोजकर्णिका गौरी गौरी प्रति मनो दधे ॥ अरीहणी। ओषधिः काचित्। हरीकणीत्येके ॥ खारी। षोडशद्रोणपरिमाणा ॥ कर्करी जलभाजनम् ॥ ह्रस्वः कर्कः। कर्कटी। ग्रामटी। लौकिकष्टप्रत्यय इति कश्चिदाह ॥ चरी दिगम्बरप्रसिद्धा ॥ तदन्तादपि। अनुचरी। सहचरीत्यादि ॥ सारङ्गी। शबलवर्णयुक्ता ॥ वाद्यविशेषो वा ॥ शृङ्गयुक्तत्वात्। शृङ्गी। प्रतिविषा कर्कटशृङ्गी च ॥ आढकी। तुवरी ॥ आढकीति केचिदाहुः ॥ द्रोणी। जलक्षेपिका ॥ अलयते भूष्यते पुष्पप्रकरेण। अलिन्दी प्रघणः ॥ अथवा। अलयन्ते निवार्यन्ते तस्यां पतनाद् भाजनानीत्यलिन्दी। कोष्ठिका ॥ वराही। बिम्बी। तुण्डिका ॥ बिम्बेति कश्चित्। बिम्बं वनस्पतिजातिरित्येके ॥ बदरी वृक्षः ॥ लोह इवाण्डमस्याः। लोहाण्डी नाम

शकुनिः ॥ स्त्रीविषय एवायम् ॥ पाण्टी पिच्छिका ॥ पाण्डोरपत्यमित्येके ॥ पुटी ॥ नाटयतीति नाटी ॥ नाटीसञ्ज्ञया द्वे काव्ये । एको भेदः प्रख्यातो नाटिकाख्यः । इतरस्त्वप्रख्यातः ॥ प्रकरणिकासंज्ञः । तथाच ।

अनयोश्च बन्धयोगादेको भेदः प्रयोक्तृभिर्ज्ञेयः ।
प्रख्यातस्त्वितरो वा नाटीसंज्ञाश्रिते काव्ये ॥

पिण्डी । मदनफलम् ॥ सर्पति गच्छति क्षुद्रद्रव्यसंघातमिति सृपाटी । उपानत् कुप्यं क्षुद्रपुस्तकः परिमाणविशेषश्च ॥ चेटी ॥ बरटी । क्षुद्रधान्यम् ॥ वटरीति कश्चित् ॥ मूलैरटतीति मूलाटी ॥ सूपी ॥ आरटी ॥ शूर्पी । परिवपनं मान च ॥ आसन्दी । वेत्रासनम् । आनन्दीति पाणिनिः । नदी ॥ पितामही ॥ मही । पृथ्वी नदी च ॥ मातामही ॥ मलयामोदैर्वसुन्धराम् । मालती जातिः ॥

गौरसारङ्गचेटपितामहमातामहानामजातित्वात् ।
अन्येषां तु जातित्वेऽपि स्त्रीविषयत्वादप्राप्ते पाठः ॥ ४४ ॥

कदरकदलसूचा मण्डलो मण्डकश्च—
प्लवभषकृषभङ्गा यूषतर्कारमत्स्याः ।
गवयमुकयगाहा मेथशर्कारपुत्राः—
शबलगडुलगूर्दाः सूदकल्माषदेवाः ॥ ४५ ॥

कदरी वृक्षविशेषः ॥ केन वायुना दल्यते । कदली । मोचा करिपताका ॥ च ॥ सूची । सूचिभेद्यैस्तमोभिरित्यादि दर्शनात् सूचिशब्दोऽप्यस्ति । परमस्य पाठादिदं सिद्धम् ॥ पञ्चभिः सूचिभिः क्रीतः । पञ्चसूचः । तस्य तु पञ्चसूचिरिति स्यात् ॥ मण्डली । संहतिर्देशश्चतुरस्रता च ॥ मण्डकी ॥ प्लवत इति प्लवी ॥ भषति पैशुन्येन वक्ति । भषी ॥ कृषी ॥ भङ्गी । वृद्धवैयाकरणाभिप्रायेण दर्शितम् । विवेचकास्तु भङ्गिभङ्गीशब्दौ विच्छित्तिपर्यायौ भङ्गशब्दारवोपधिवृत्तेराद्यैव स्यात् तिलमाषोमाणुभङ्गाभ्यो वेति सौत्रनिर्देशादिति मन्यन्ते । उमा । भङ्गी नाम काचिदोषधिरिति शाकटायनः ॥ यूषति ज्वरं हिनस्तीति यूषी । मुद्गादिनिर्यासः ॥ यूषीति भोजः ॥ तर्कति । इयर्ति । तर्कारी । जया ॥ मत्सी जलचरी ॥ मत्स्या नाम जनपदः । तदीश्वरस्य

क्षत्रियस्तन्नामधेयः । तत्र मत्स्यानां राज्ञी मत्स्यस्यापत्यं स्त्रीति वा । पुरु-द्वन्द्वमगधेत्यादिनाणि तस्यातोऽप्राच्यभर्गादेरिति श्लुचि । मत्सी ॥ गोरिव-यो गमनमस्येति पृषोदरादित्वात् सिद्धौ । गवयी । गोप्रतिनिधिर्मृगः ॥ सुकं वैवर्ण्यं यातीति सुकयी । मृगजातिः । गर्दभ्यामश्वतराज्जातेत्येके ॥ गाहत इति गाही ॥ मेधृ सङ्गमे वेत्यस्याचि । मेधी ॥ शर्कोरी ॥ पुत्री । सूत्रोग्ररा-जमेरुभ्यो दुहितुः पुत्राड्ढेति वक्तव्यमुशन्ति । तन्न । समासेऽप्यनेनैव सिद्धम् ॥ शवति याति वर्णान् । शवली । शवलवर्णयुक्ता ॥ गडुली ॥ गूर्दी ॥ सूदत इति सूदी काचित् ॥ सूर्द इत्यपि शाकटायनः ॥ कलयति वर्णान् । कल्मा-षी । कलेर्मोषमासाविति वचनाद् मूर्धन्यदन्त्यौ ॥ देवी । कृताभिषेका ॥ मत्स्यगवयसुकयानां जातित्वेऽपि योपान्त्यत्वात् । पुत्रशवलकल्माषाणाम-जातित्वात् ॥ इतरेषां तु जातित्वेऽपि स्त्रीविषयत्वादप्राप्ते पाठः ॥ ४५ ॥

उभयहयमनुष्याः कुम्भदासौ पिशङ्ग-
कुवलहरिणयूथाः शूषमेथौ गुडूचः ।
अमरपिठरसूर्माः पिप्पलो वैजयन्तो-
विकलमठकरीरी केतकास्थानचोराः ॥ ४६ ॥

उभयी । स्थितिः ॥ पाणिनीयास्त्वयच्प्रत्ययविधानेन टित्वाद् ङीप् प्रत्ययमाहुः ॥ हयी । अश्वा ॥ मनुष्यी । शाकटायनस्तु मनोरपत्यमिति मनोर्जातौ पुक् चेति यप्रत्यये मत्स्यतद्धितहलो य इत्यनेन यलोपे मनुषी-त्याह ॥ कुम्भी । रसाधारत्वात् कुमुदिका । मृदादिपात्रवाची तु कुम्भशब्दः कुण्डादौ द्रष्टव्यः ॥ दासते प्रयच्छति स्वामिने वचनकाल इति दासी। चेटी ॥ दासयन्ति प्रयच्छन्ति वेतनं तस्या नद्युत्तारणहेतोरिति दासी । प्लविका ॥ अथवा । दासते प्रयच्छत्यारोग्यमिति दासी । शैलेयद्रव्यम् । सकारस्तालव्यो दन्त्यो वा । दासःशचेत्युणादिवचनात् ॥ पिशङ्गी । पिङ्गवर्णयुक्ता । यथा—

विभ्राणमानीलरुचं पिशङ्गीर्जटास्तडित्वन्तमिवाम्बुवाहम् ॥

कुवली । क्षुद्रबदरी ॥ हरिणी । शुक्लवर्णयुक्ता ॥ यूथी । मागधी ॥ शूषी ॥ मेथति हिनस्ति वातमिति मेथी ॥ गुडति रक्षति दोषेभ्यः । गुडूची । वत्सा-दनी ॥ अमति गच्छत्यष्टगुणैश्वर्य्यमिति । अमरी ॥ पिठति हिनस्ति तण्डु-

लानिति पिठरी । भाण्डम् ॥ सूर्मी । लोहप्रतिमा ॥ यत्स्मृतिः । सूर्मीञ्ज्वलन्तीमालिङ्गेन्मृत्यवे गुरुतल्पगः ॥ चुल्लिश्च ॥ पिपर्त्ति । पिप्पली । वैदेही ॥ वैजयन्ती । पताका ॥ विकली ॥ विकलनिष्कलपुष्कलशब्देभ्यो वनस्पतिवृत्तिभ्य एव ङीविधिः सम्भाव्यते रूढितः । अन्यत्र विगता कला यस्याः । विकला । निष्कला । पुष्कला धनर्द्धिरित्येवं स्यात् ॥ वामने च । कृतीस्म राज्ञा यदि पुष्कला स्याम् ॥ छित्तपस्तु ।

न पुष्कली ते स्वर्लोके जनता किन्तु सामरी ।
विकली शल्कमात्रेण महती निष्कलीष्यते ॥

इति सामान्येनाह ॥ कथं विकलाकालविशेषवाचिनो नित्यस्त्रीविषयत्वादाबेव भवतीति भोजोऽपि ॥ मठन्ति निवसन्त्यस्यामिति मठी ॥ करीरी । करिदन्तमूलम् ॥ केतकी ॥ आस्थानी । संसत् ॥ चोरयतीति चोरी । तथा च ।

नृपचित्तचोर्यः सुन्दर्यो दुरुद्वहकटीतटाः ।
नदीगाहीप्लवीचर्य इव यद्भूप्रभाम्भसि ॥

हयमनुष्ययोर्जातित्वेपि योपान्त्यत्वात् । उभयदासपिशङ्गहरिणामरचोराणामजातित्वात् । इतरेषां तु जातित्वेपि स्त्रीविषयत्वादप्राप्ते पाठः॥४६

द्रुणविटसरसायः स्थूणसौधर्ममाचाः—
पटललवलपादा वल्लकालम्बिनाचाः ।
अतसपृथिवभृङ्गाः कन्दलारष्टिदोटाः—
शमतमकुटपेटा मञ्जरो निष्कलश्च ॥ ४७ ॥

द्रुणी । कच्छपस्त्रिय एवोच्यन्ते न कच्छपाः पुमांसः॥ विटी । महत्सर॰॥ सरसी । कर्णाटदेशे प्रसिद्धिरेषा हलन्तत्वादप्राप्ते॥ अयोमयी स्थूणा यस्य सोऽयःस्थूणः । तस्यापत्यं शिवाद्यणि । आयःस्थूणी । ङ्यस्य प्राप्तौ ॥ अयोमयी स्थूणा यस्याः सा । अयःस्थूणी । कुटी । तस्यान्यार्थे वृत्तिः स्वार्थेत्वयःस्थूणेति स्यादिति कश्चिदाह॥ आयस्थैणीति केचित् ॥ शोभनो धर्मो यस्य स सुधर्मा। तस्यापत्यं स्त्री सौधर्मी। ऋष्यणि ङ्यस्य प्राप्तौ॥ माची। अम्बष्ठा ॥ पटली । सङ्घातः ॥ लवली । लताविशेषः ॥ पादी ॥ वल्लकी ॥

अलम्बस्यापत्यं स्त्री। आलम्बी। अत इञि ङ्यस्य प्राप्तौ ॥ नाची ॥ अतति गच्छति नीलैः कुसुमैः स्नेहवद्बीजानीति। अतसी। उमा ॥ पृथिवी ॥ पाणिनिप्रभृतयस्तु ङीप्रत्ययान्तमाहुः ॥ भृङ्गी। भृङ्गराजः। लवङ्गी वा ॥ कन्दली। कन्दविशेषः ॥ अरट्टस्यापत्यमिञि स्त्री। आरट्टी। ङफस्य प्राप्तौ ॥ दोटी ॥ शमयति दोषान्। शमी। सक्तुफला सिम्बा वा (१) ॥ तास्यन्त्यस्यामिति तमी। रात्रिः ॥

विभूषणं के कुचमण्डलानां                    हाराः
कीदृश्युमा चन्द्रमसः कुतो भाः।         महादेवरता तमातः।
सीता कथं रौति दशास्यनीता    हा राम! हा देवर! तात! मातः!
हारामहादेवरतातमातः ॥

इति लक्ष्यात् तमापि ॥ कुटी ॥ पेटी वृन्दं परिच्छदश्च ॥ मञ्जरी। पुष्पयष्टिः ॥ निष्कली ॥ विकलनिष्कलशब्दौ जनपदवाचिनौ। स्त्रीविषयाविति शाकटायनः ॥ उक्तेभ्योऽन्यत्र जातित्वेऽपि स्त्रीविषयत्वादप्राप्ते ॥४७॥

**ऋश्यो बन्धकधातकावनडुही शष्कण्डकोषातका-**
**ऽनड्वाहीबृसवेतसाः पटनटक्रोष्ट्र्योकणाः काकणः।**
**आलच्यालजभिक्षुकोर्दसुषवा औद्गाहमानिर्गरो-**
**गायत्र्यामलकौ हरीतकशचावालब्धिमांसौ तरः ॥४८॥**

ऋश्यी ॥ बध्नाति मनो यूनामिति बन्धकी ॥ धातकी। ताम्रपुष्पी ॥ अनडुही। ङीप्रत्ययान्तपाठो गणेऽस्त्रीत्वप्रतिषेधार्थः। तेन। अनडुही। वृन्दारिका ॥ वामनादयस्त्वनडुहीभार्य इत्युदाहरन्ति। तन्न युक्तम्। जातिप्राण्यङ्गङ्योऽमान्यादाविति (२) नियमितत्वात् पुंवद्भावस्य निषेधः सिद्ध एव ॥ अथवा। पञ्चभिरनडुहीभिः क्रीतः। पञ्चानडुहिरित्यादौ ङ्यः श्लुचीत्यनेन श्लुक् प्राप्ता निषिध्यते। एवं सर्वत्र ॥ शष्कण्डी। हैमवतः कश्चिद्वृक्षः ॥ कोशातकी। पटोली ॥ अनड्वाही ॥ बृसी। व्रतिनामासनम् ॥ वेतसी।

---

(१) शिम्बा वा। इति पा०। (२) स्वाङ्गाच्चेतोऽमानिनि। जातेश्चेत्येतयोरेव पाणिनिसूत्रयोः केनचिदेवं न्यासः कृत इत्यनुमीयते। भी० शा०

वञ्जुलः । अम्लवेतसश्च ॥ पटी । प्रच्छादनवस्त्रम् ॥ नटी ॥ क्रोष्ट्री । क्रोष्ट्रीशब्दस्य पाठः सुखार्थः । क्रोष्टोः स्त्र्यनौ क्रोष्टृजिति । ऋदन्तन्वन्नुगिदश्च इत्यनेन ङीप्रत्ययः सिद्धः ॥ ओकणी । पर्यन्तवनस्य संज्ञा । उकणीत्यन्यः ॥ काकणी । पणचतुर्थभागः ॥ अलक्षस्यापत्यमिञि स्त्री । आलक्षी । ङ्ये प्राप्ते ॥ आलजी ॥ भिक्षुकी ॥ उर्दी । विमानम् ॥ सुषुवति प्रेरयति दोषानिति सुषवी । कृष्णजीरकम् ॥ सुष्ठु सवतीति सुसवीति नन्दी प्राह ॥ उदगाहमानस्यापत्यमिञि स्त्री । औदूगाहमानी । ङ्ये प्राप्ते ॥ गरी । देशविभागस्य सञ्ज्ञा ॥ गायतस्त्रायतेऽवश्यम् । गायत्री । छन्दोविशेषः खदिरो वा ॥ आमलति गुणान् । आमलकी । वयःस्था ॥ हरति रोगान् । हरीतकी । पथ्या ॥ शचति । शची । इन्द्राणी ॥ अलब्धस्यापत्यमिञि स्त्री । आलब्धी । ङ्ये प्राप्ते ॥ कालवधीत्यपि शाकटायनः ॥ मांसी । जटा ॥ तरी । नौः ॥

ऋश्यस्य जातित्वेपि येोपान्त्यत्वात् । बन्धकनटभिक्षुकाणामजातित्वात् । अनडुहो हलन्तत्वात् ॥ अन्येषां च स्त्रीविषयत्वादप्राप्ते ॥ ४८ ॥

कुसुम्भसुन्दरौ पूयः शष्कुलो देहलस्तटः ।
तापसोऽथ सिनीवालः पूलसल्लकगौतमाः ॥४९॥

कुसुम्भी । ओषधिविशेषः ॥
अस्मिन् रतिश्रमजितश्च सरोजवाताः ।
स्मर्त्तुं दिशन्ति न दिवः सुरसुन्दरीभ्यः ।

अत्र दिव्यस्त्रीविषयत्वाज्जातिलक्षणो ङीर्न भवति । गुणवचनात्तु सुन्दरशब्दाच् शोणादिपाठात् पाक्षिके ङीप्रत्यये कृते सुन्दरीणां सुन्दरा गिर इति भवति ॥ भोजस्तु सामान्येनैव ङीप्रत्ययं दर्शयति ॥ पूयी । दुर्गन्धा ॥ शक्यन्ते मृष्यन्ति तस्यां परस्परमस्वन्ध निस्तुषतिला इति शष्कुली । भक्ष्य विशेषः । अथवा । शक्नोति पर्याप्नोति पुद्गलविकारं शब्दं ग्रहीतुमिति शष्कुली । कर्णशष्कुली ॥ दिह्यते । देहली । द्वाराग्रस्थला ॥ तटी ॥ तपः शीलमस्याः छत्रादेर्ण इति णे सति । तापसी ॥ सिनी सिता वाला कला यस्यां सा सिनीवाली । दृष्टेन्दुरमावास्या ॥ पूली । तृणसंघातः ॥ असकृत्सल्यत आस्वाद्यते गजैरिति सल्लकी । गजप्रिया ॥ गौतमी । अस्य पाठः सुखार्थः । मतान्तरे तु स्वरः प्रयोजनम् ॥ तटतापसयोरजातित्वात् । अन्येषान्तु स्त्रीविषयत्वादप्राप्ते ॥ ४९ ॥

कटेटभौलिङ्ग्यधिकारदेहा, गवादनोद्वाहनतेजनाः स्युः ।
आपच्चिको भौलिकिभौरिकी च काकादनः प्रत्यवरोहिणी च ॥५०॥

कटस्य ईटः । कटेटः । कटेटी ॥ भुवि लिङ्गं कीर्त्तिरस्येति भूलिङ्ग-ऋषिः । तस्यापत्यमिति शाल्वांसेत्यादिना । इञि भौलिङ्गिः । स्त्री भौलिङ्गी । ङ्यञि प्राप्ते ॥ अधिकः कारोऽस्या इति । अधिकारी । अधिक्रियत इति वहुलाधिकाराद्ङ्यञि स्त्रियां यथा शोभेत्येके ॥ देही ॥ गवादनी । इन्द्रवारुणी ॥ उद्वाहनी ॥ तेजयत्यग्निमिति तेजनी । कङ्गुणी ॥ आपच्चिको नाम जनपदः । समाननामा क्षत्रियः । तस्यापत्यं स्त्रीति राष्ट्राख्याद्ब्राह्मणोऽञे-वेत्यनेनाञि तस्य च श्लुचि । आपच्चिकी ॥ भूलिकस्यापत्यमिञि स्त्री । भौलिकी ॥ भूरिकस्यापत्यमिञि स्त्री । भौरिकी । गोत्रादिपठितादित्यनेन ङ्यस्य प्राप्तौ ॥ काकादनी । गुञ्जा ॥ प्रत्यवरोहिणी ॥ टनूप्रत्ययान्तस्यास्यान्येषां च टिद्द्वारेणैव ङीप्रत्यये सिद्धे गणे पाठः पुंवद्भावप्रतिषेधार्थः । मतान्तरे तु स्वरः प्रयोजनम् ॥ ५० ॥

बर्बरदाडिमचमसास्तरुणस्तलुनाग्रहायणीबन्दाः ।
पण्डरपुष्कललवणाः पिङ्गलमुसलौ विभीतको नन्दः॥५१।

वर्बरी ॥ दाडिमी । वृक्षजातिः ॥ चमसी । सोमपात्रम् ॥ तरुणी । सुरा ॥ तलुनी । सुरा ॥ अग्रं हायनमस्याः । आग्रहायणी पौर्णमासी । अत एव निपातनाद्दीर्घत्वं णत्वञ्च ॥ वन्दी । हठहृता स्त्री ॥ पण्डते याति मनोऽस्मिन् । पण्डरः । तद्योगात् पण्डरी । पटी ॥ पुष्कली । वनस्पतिः ॥ लवणी । ओषधिः । समुद्रपार्श्वस्त्रोतो यत्र वहनानि स्थाप्यन्त इत्येके ॥ लवणा यवागूरिति गुणशब्दोऽजातौ द्रष्टव्यः ॥ पिङ्गली । पिशङ्गी ॥ मुसली । ओषधिः॥ विभीतकी ॥ नन्दति । ऋद्धिं यातीति नन्दी । प्रज्ञाद्यणि । नान्दी ॥

पण्डरपिङ्गलनन्दानामजातित्वात् । अन्येषां तु स्त्रीविषयत्वादप्राप्ते ॥ आकृतिगणोऽयम् । तेन देवदानी पटोलीत्यादयो द्रष्टव्याः ॥ ५१ ॥

इति गौरादिः ॥

शोणोऽथभरुजस्तूणकमलौ विकटाह्नी ।
चान्द्रभागाभवेन्नद्यां त्वयर्थशून्यादिकारतः ॥५२॥

शोणादयः शब्दाः शोणादिरित्यनेन(१) ङीप्रत्ययभाजो वा भवन्ति ॥ शोणी । शोणा । रक्तवर्णयुक्ता ॥ कश्चित्संज्ञायामपि शोणी शोणा वडवेति ॥ भरुजी । भरुजा । स्नेहभृष्टाः किल तण्डुलाः ॥ तूणी । तूणा । तूणीमुखोद्धृतशरेणविशीर्णपङ्क्ति । वीणा धिषणा तूणा स्थूणेत्यादि ॥ कमली । कमला नाम काचित् ॥ विकटी । विकटा । रचना ॥ दीर्घाह्नी । दीर्घाह्ना शरत् ॥ अहन्शब्दः केवलः स्त्रियां न सम्भवति नित्यं नपुंसकलिङ्गत्वात् । अतस्तदन्त उदाहृतः ॥ अह्नी । अह्ना । इति कश्चित् केवलस्य स्त्रियामुदाहरति ॥ चान्द्रभागी वनराजिः । चान्द्रभागा नदी । टिड्ढाणञित्यादिना ङीप्राप्तः स शोणादिपाठान्नद्यां निषिध्यान्यत्र विधीयत इतिविकल्पार्थः ॥ चन्द्रभागा नद्यामिति केचिदाहुः । यदृच्छया चन्द्रभागी चन्द्रभागा काचित् । नदी तु चन्द्रभागेति मतद्वयं वामनाचार्य्यस्य ॥ पाणिनिशकटाङ्गजौ तु चन्द्रभाग इव भागो यस्याश्चन्द्रभागी चन्द्रभागा नाम नदी । अन्यत्र चन्द्रभागा नाम देवता स्त्री वा काचिदित्याहतुः ॥ केचित्तु चन्द्रभागो नाम पर्वतः । ततः प्रभवतीत्यणि । चान्द्रभागी चान्द्रभागा नदी । चान्द्रभाग्यन्येत्युदाहरन्ति ॥ भोजस्तु चान्द्रभागादनद्यामिति सूत्रं पपाठ ॥ क्त्यर्थशून्यादिकारतः । क्त्यकणाविति क्तिप्रत्ययो भावाकर्त्रोर्विहितस्तदन्तस्तदर्थप्रत्ययान्तो वा यो न भवति । ततोऽनेन ङी विकल्पितः । अशनिः । अशनी ॥ शक्तिः । शक्ती । शस्त्रम् ॥ आत्मम्भरिः । आत्मम्भरी । क्त्यर्थशून्यादिति किम् । शक्तिः सामर्थ्यम् ॥ कश्चिदस्मादपि ङी मन्यते । अहरणिः । का त्व कारिसकार्षीः ॥५२॥

चण्डः पद्धतिकल्याणपुराणकृपणध्वजाः ।
विशालारालमूषा हन्बहूदारविशङ्कटाः ॥५३॥

चण्डी । चण्डा । परुषा ।
सा किलाश्वामिता चण्डी भर्त्रा तत्संश्रुतौ वरौ ॥

चण्डारालशब्दयोर्गौरादिलक्षणे ङीप्रत्यये सिद्धे बह्वादौ पाठः सञ्ज्ञायां विकल्पार्थ इति शाकटायनः ॥ पादयोर्हतिः । पद्धतिः । पद्धती । क्त्यर्थःपाठः ॥ कल्याणी । कल्याणा कथा ॥ पुराणी । पुराणा छाया ॥ कृपणी ।

(१) शोणात्प्राचामिति सूत्रं बह्वादिष्वेवान्तर्भूतं क्रियत इत्यनुमीयते ॥

कृपणा नाम काचित् ॥ ध्वजी । ध्वजा । पताका ॥ विशाली । विशाला कीर्त्तिः ॥ अराली । अराला । भूमिः ॥ मूषी । मूषा । सुवर्णाद्यावर्त्तनस्थानं प्राणिविशेषो वा ॥ वृत्रघ्नी । वृत्रहा ॥ बह्वी । बहुर्नाम काचित् । गुणवचनादुतो वाऽस्वरोरित्यनेन गुणवचनाद्विकल्पः सिद्ध एव ॥ उदारी । उदारा सृक्तिः ॥ विशङ्कटी । विशङ्कटा बुद्धिः ॥ आकृतिगणोऽयम् । तेन सुन्दरकन्दरादयो द्रष्टव्याः ॥ ५३ ॥ इति शोणादिः ॥

कुण्डः पात्रेऽकृत्रिमार्थे स्थलं च, भाजः पक्वे कामुकः स्याद्रिरंसौ।
नागः स्थूले कृष्णवर्णे च कालो, धान्याधारे सम्मतो गोणशब्दः॥५४॥

कुण्डादयः शब्दाः पात्रादावर्थे पात्राद्ये कुण्डादेरित्यनेन ङीप्रत्ययान्ता भवन्ति। पात्रे कुण्डी। कुण्डाऽन्या॥ दाहक्रियैव तत्सम्बन्धादन्यद्वा तथोच्यते। यस्तु द्रव्यवचनः कुण्डशब्दः स नित्यं नपुंसक एव वर्त्तत इति न प्रत्युदाहर्त्तुं युक्तः॥ अकृत्रिमेऽर्थे स्थली। स्थलाऽन्या॥ पुरुषप्रयत्ननिष्पाद्या वेदिका इत्यन्ये॥ पक्वेऽर्थे भाजी। भिक्षायामित्यन्यः। भाजाऽन्या। वक्रयष्टिः॥ मैथुनेच्छौ नायिकायां कामुकी। कामुकाऽन्या। धनाद्यभिलाषुका॥ स्थूलेऽर्थे नागी। नागाऽन्या। दीर्घादिगुणयुक्ता सञ्ज्ञा वा काचित्। क्षयविशेष इत्यन्ये॥ हस्तिसर्पजातिशब्दिनस्तु ङी भवत्येव। प्रत्युदाहरण गुणवचनस्य॥ कृष्णवर्णेऽर्थे काली। छाया बलान्याशु ततान काली॥ कालाऽन्या। धमनी॥ रत्नमतिस्तु कालशब्दस्य सञ्ज्ञावाचिनो ङी। न तु कृष्णवर्णवाचकस्य कृष्णत्वाव्यभिचारादित्याह॥ धान्याधारे गोणी। यस्याश्छाटीति प्रसिद्धिः। यथा—

गोणीं जनेन स्म निधातुमुद्धृतामनुक्षणं नोक्षतरः प्रतीच्छति।

गोणाऽन्या। तृणविशेषः॥५४॥

कुशो लोहविकारे स्याद् घटः कुम्भश्च मृन्मये।
कबरः केशविन्यासे नीलश्चौषधिदेहिनोः॥५५॥

अयोविकारे कुशी। कृष्युपकरणम्। न सामान्येनायोविकारः॥ कुशाऽन्या। अलोहविकाराकृतिरेव काष्ठादिमयी॥ भग्नस्याक्षस्य प्रतिष्टम्भ इत्यन्ये। अपरे तु वल्लेति ब्रुवते॥ मृन्मये पात्रे। घटी॥ घटाऽन्या। गजघटा। करिघटा॥ कुम्भी। तैलादिस्थान स्तम्भाधारो वा। कुम्भान्या॥ केशरचनायां कवरी। वेणी। कवराऽन्या। वर्णविशेषोपेता। व्याकीर्णमाल्यकवरां कवरीं

तरुण्या. ॥ ओषधौ प्राणिनि च । नीली—ओषधिः । नीली वडवा ॥ अन्यत्र । नीला शाटी ॥५५॥

सूचस्तीक्ष्णे भाजने पात्रपारौ, स्थालः कुम्भ्यां रेवती रोहिणीभे।
ज्ञेयस्तालो लोहमय्यां विपञ्चः, स्याद्गोणायां लोकवृन्दे च गोष्ठः ५६

तीक्ष्णाग्रा सूची । सूचाऽन्या ॥ भाजने पात्री । काष्ठपात्री ॥ अन्यत्र । पात्रमिव ब्राह्मणी । पात्रं तपस्विसंहतिः ॥ पारी । गोदोहनी । यथा—

प्रीत्या विमुक्ताँल्लिहतीः स्तनन्धयान्, निगृह्य पारीमुभयेन जानुनोः ।
वर्धिष्णुधाराध्वनिरोहिणीः पयश्, चिरं निदध्यौ दुहतः स गोदुहः ॥

पाराऽन्या ॥ पिठरिकायां स्थाली । स्थालाऽन्या ॥ नक्षत्रे रेवती, रोहिणी । रेवता रोहिणाऽन्या॥ ननु कथं रेवती कन्या । रोहिणी कन्येति नह्यास्यां नक्षत्रं वाच्यम् । सत्यम् । रै विद्यते यस्याः । निपातनादेत्त्वे कृते । रेवती ॥ रोहितस्य रोहिणी ॥ रेवतरोहिणशब्दौ च नक्षत्रवाचिनौ प्रातिपदिकौ । पञ्चरोहिण्यो रेवत्यो वा देवता यस्य । पञ्चरोहिणः पञ्चरेवत इत्यादिप्रयोगदर्शनाद्विशेषो द्रष्टव्य ॥ लोहविकारे ताली लोकप्रसिद्धा । तालाऽन्या ॥ वीणाया विपञ्ची । विपञ्चाऽन्या ॥ लोकवृन्दे गोष्ठी । समानजातीयो जनसमुदायः । यथा—गोष्ठेषु गोष्ठीकृतमण्डलासनान् ॥ गोष्ठाऽन्या । भूर्यत्र गावस्तिष्ठन्ति ॥५६॥

श्लेषद्रव्ये खलो लक्ष्यो विदारशठमोपधौ ।
दूतः सन्देशहारिण्यां कुट्टिन्यां शम्भलो बुधैः ॥ ५७ ॥

श्लेषद्रव्ये खली । खलाऽन्या ॥ विदारी । शठी । ओषधिः ॥ विदारा । शठाऽन्या ॥ दूती सन्देशहारिका । दूताऽन्या । यथा—

कृतपुष्पशयनाल्लतागृहानेत्य दूतिकृतमार्गदर्शनः ।

इत्यादि लक्ष्यदर्शनादिकारान्तोऽप्यनुमीयते ॥ शम्भं श्रेयोयुक्तं लाति गृह्णातीति वा । शम्भली । कुट्टिनी ॥ वामनस्तु दूत्या शम्भलीत्याह । न तदस्मन्मनोरञ्जकं लक्ष्येष्वदर्शनात् ॥ शम्भलाऽन्या । देशविभक्तिः ॥

कश्चित्तु शम्भलविदारशब्दौ गौरादावाह । कश्चिन्नायिकायां सुन्दरी । अन्यत्र सुन्दरास्य वृद्धिरित्युवाच । तन्न समीचीनं गौरादावस्य दर्शनात् । अयं चास्माभिर्लक्ष्यानुसारेण तत्रैव व्याख्यातः ॥ ५७ ॥

[मातङ्गानां स्नेहपानप्रकारे—
पीनः शालो वल्लभाया भगिन्याम् ।
फालः खण्डेऽथो खनित्रे कशश्च—
ज्ञेयः श्रोण्यां बुद्धिमद्भिः कटश्च ॥ ५८ ॥]

पीनी हस्तिनां स्नेहपानप्रकारः । पीनाऽन्या ॥ शाली कलत्रस्वसा । शालाऽन्या ॥ फाली खण्डम् । यथा—

कर्पूरस्फारफालीकलितकिसलयस्रस्तरोद्दामलीला ।

फालाऽन्या ॥ खनित्रे कशी । कशाऽन्या । अश्वताडनहेतुश्चर्ममयी यष्टिः ॥ श्रोण्यां कटी । कटाऽन्या । व्यवस्थास्थित्युपाश्रितिर्वा ॥

आकृतिगणोऽयम् । तेन । एषणी । नाराची वैद्यशलाका वा । एषणाऽन्या । इत्यादयोऽर्थविभागेन ज्ञेयाः ॥ ५८ ॥ इतिकुण्डादिपात्रादौ ॥

लोहितश्रुवकतालिगुकक्षा बभ्रुवल्गुमनुसूनुतलुक्ताः ।
तण्डमण्डुकपिकन्थकवृक्ता मन्तुतन्तुतनुमङ्क्षुतरुक्षाः ॥५९॥

यञ्लोहितादिशकलान्तयञ्कौरव्यासुरिमाण्डूकाड्डायन् इत्यनेन स्त्रियां नित्यं ङी भवति डायनादेशश्च ॥ लौहित्यायनी ॥ श्रौव्यायणी ॥ कात्यायनी ॥ आलिगव्यायनी ॥ काक्ष्यायणी ॥ बाभ्रव्यायणी । कौशिकी तु बाभ्रवी बाभ्रव्यायणी ॥ गर्गादौ तु बभ्रुः कौशिक इति पाठादिति नः सम्मतम् । वामनस्तु बभ्रुपाठं मन्यते । कपिशब्दस्य च ॥ वाल्गव्यायनी ॥ मानव्यायनी ॥ सौनव्यायनी ॥ तालुक्त्यायणी ॥ ताण्ड्यायनी ॥ माण्डव्यायनी ॥ काप्यायनी । आङ्गिरसी तु कापी काप्यायनी ॥ कान्थक्यायनी ॥ वाृक्त्यायणी ॥ मान्तव्यायनी ॥ तान्तव्यायनी ॥ तानव्यायनी ॥ माङ्क्षव्यायणी ॥ तारुक्ष्यायणी ॥५९॥

गुहलुः संशितः शङ्कुमनार्यालिगुसम्बत्रः ।
वतण्डः शकलो मङ्खुलतुक्षत्रजिगीषवः ॥६०॥

गौहलव्यायनी ॥ सांशित्यायनी ॥ शाङ्कव्यायनी ॥ मानाय्यायनी ॥ लैगव्यायनी ॥ साम्बव्यायनी ॥ अनाङ्गिरसी तु वातण्ड्यायनी । शिवादिपाठात् वातण्डी । आङ्गिरसी तु वतण्डी । अस्त्रीयपाककर्णपर्णपुष्पफलमूलवालान्ताज्जातेरित्यनेन ङीप्रत्ययः ॥ शाकल्यायनी ॥ माङ्खव्यायनी ॥ लातव्यायनी ॥ आत्क्ष्यायणी । रौक्ष्यायणीत्यन्यः ॥ जैगीषव्यायणी ॥६०॥ इति लोहितादिः ॥

यच्छन्दा मेनका चात्र दण्डकापिप्पकेष्टकाः ।
रेवकाधारका चैव द्वारकादेवकैरकाः ॥६१॥

यदादय एडकान्ताः ख्यातोऽयदाम् इत्यनेनाकारस्येत्व यत्प्राप्तं यदादिपर्युदासात् तद्भाजो न भवन्ति ॥ यका ॥ मनिपचिमचां नाम्नीत्यनेनाकारस्यैत्वे । मेनका । अप्सराः ॥ दण्डका । अरण्यम् ॥

वर्षाणि तिष्ठतु चतुर्दश दण्डकायाम् ॥

प्राप्तानि दुःखान्यपि दण्डकेषु सञ्चिन्त्यमानानि सुखीबभूवुः ॥

इति रघुकाव्ये चिन्त्यम् ॥ पिप्पका ॥ इष्यते काम्यते प्रासादादिषु या सा । इष्टका मृद्विकारः ॥ रेवा नदी । ततः सञ्ज्ञायां के । कुत्सादौ वा । रेवका ॥ धारयतीति धारका ॥ द्वारप्रकारा । द्वारका नगरी ॥ यथा धनञ्जयस्य—

चलत्पताकामुद्बद्धतोरणां तावविक्षताम् ।
द्वारकां गोपुरद्वारैः किष्किन्धनगरीमिव ॥

देवकाः । अप्सराः ॥ एरका । उदकतृणजातिः ॥ ६१ ॥

क्षिपका धुवका चरका तत्सेवकया करकाचटके स्तः ।
अवकालहके अलका स्यात् कन्यकया ध्रुवकैडकया च ॥६२॥

क्षिपतीति क्षिपका । आयुधम् ॥ अथवा । अज्ञाता क्षिपा । क्षिपका ॥ धू विधूनने । धुवतीति धुवका । आवपनविशेषः ॥ अथवा । अज्ञाता धुवा । धुवका ॥ चरका ॥ सका ॥ सेवा भक्तिः । कुत्सिता वा सेवा । सेवका ॥ करका । वर्षोपलः—

तान्कुर्वीथास्तुमुलकरकावृष्टिहासावकीर्णान् ।

केचित्तु करकशब्द पुंस्याहुः । कमण्डलौ च करक इति ॥ चटका ॥ अवतीति । अवका । शैवलम् ॥ लहका ॥ अलका । नगरी ॥ कन्यका ।

सवर्णकन्यका रूपयौवनारम्भशालिनी ॥

ध्रुवतीति ध्रुवका । आवपनविशेषः ॥ अथवा । कुत्सिता ध्रुवा । ध्रुवका ॥ एडका । अविजातिः ॥ वेगवतीछन्दः । त्रिसकारपरं गुरुकं चेद्वेगवतीति च भादथ भौ गौ ॥ आकृतिगणोयम् । तेन यथा दर्शनमन्येऽपि भवन्तीति ॥६२॥

इति यदादिः ॥

इति श्रीगोविन्दसूरिशिष्यपण्डितश्रीवर्द्धमानविरचितस्वोपज्ञ-
गणरत्नमहोदधिग्रन्थवृत्तौ प्रथमो नामाध्यायः समाप्तः ॥

# अथ द्वितीयोऽध्यायः ॥

अर्धर्चध्वजकुञ्जशीधुमधवो वर्चस्ककूर्चाढकाः—
पङ्कानीकपिनाकनिष्ककपटाष्टङ्कः किरीटः कुटः ।
कूटः कङ्कटकर्बटाण्डशकटा वल्मीकसानू नटः—
खण्डोद्योगविडङ्गशृङ्गसरकाः पुङ्खव्रजौ मोदकः ॥६ ३॥

एतेऽर्धर्चादयः शब्दाः पुंसि नपुंके साधवो भवन्ति॥ अर्धश्चासौ। ऋक् च। अर्धर्चः। अर्धर्चम्॥ ध्वजं पताका॥ कुञ्जो वनषण्डो हस्तिदन्तश्च। यथा—

अथोष्णभासेव सुमेरुकुञ्जान् विहीयमानानुदयाय तेन ॥

निकुञ्जोऽपि॥ शेते सुप्यत्यनेनास्मिन् वा हिताहितप्रतिपत्तिरिति शीधुर्मद्यम्।

मनोज्ञगन्धं सहकारभङ्गं पुराणशीधुं नवपाटलं च ॥

मधुर्द्राक्षादिमद्यम् ।

बिभ्रती मधुरतामधिपात्रं रागिभिर्युगपदेव पपाते ।
आननैर्मधुरसो विकसद्भिर्नासिकाभिरसितोत्पलगन्धः ॥

वर्चस्कं शकृत्॥ कूर्चो दीर्घश्मश्रु॥ आढकं मानविशेषः॥ पङ्कं कर्दमः। यथा—

पुरोगैः कलुषास्तस्य सहप्रस्थायिभिः कृशाः ।
पश्चात्प्रयायिभिः पङ्काश्चक्रिरे मार्गनिम्नगाः ॥

अनीकं सैन्यं सङ्ग्रामश्च॥ पिनाको रुद्रधनुः। त्रिशूलं च॥ निष्क आभरणम्। कण्ठे निष्क इवार्पितः॥ कपटं व्याजः॥ टङ्कः पाषाणच्छेदनः॥ किरीटो मुकुटम्॥ कुटं घटः। हलाङ्गविशेषश्च॥ कूटम्। सङ्घातो माया निश्चलो मृगादिवधार्थं छलं कैतवम् अयोघनः शैलशृङ्गं सीराङ्गं च॥ कङ्कटं सन्नाहः॥ कर्बटः। नद्यद्रिवेष्टितं खेटं कर्बटं शैलवेष्टितम्॥

दुर्गस्तु कर्पटम् अल्पोपकरणस्थानमित्याह॥ अण्डं पक्ष्यादिप्रसवः॥ शकटो गन्त्री॥ वल्मीको वामलूरः॥ सानु प्रस्थम्। सानूनि गन्धः सुरभीकरोति॥ नटो नर्त्तनविशेषः(१)। आनट इति शाकटायनः॥ खण्ड इक्षुविकारविशेषः शकलं च। यथा—

(१) नर्त्तकविशेष इति पा०। एतदेव साधुभाति।

ऊनस्य नूनं परिपूरणाय ताराः स्फुरन्ति प्रतिमानखण्डाः ॥

खण्डनक्रियावाचिनस्तु वाच्यलिङ्गतैव । खण्डी घटी । खण्डो घटः । खण्डं कुलम् ॥ उद्योग उत्साहः ॥ विडङ्ग औषधम् ॥ शृङ्गो विषाणम् ॥ सरकं मद्यम् ॥ पुङ्खः शराङ्गम् ॥ व्रजं पुञ्जः ॥ मोदकं भक्ष्यविशेषः ॥ ६३ ॥

शाको मस्तककल्कशूकनिकटाः शुल्कं निदाघो नखो—
बाणद्रोणसुवर्णभूषणरणाः कार्षापणस्तोरणः ।
काण्डस्ताण्डवदण्डमण्डपिटकाः सक्तुस्तडागव्रणौ—
पेटो मञ्चकवारबाणचरणा वस्त्राम्बरैरावताः ॥६४॥

शाकं भक्ष्यविशेषः ॥ मस्तको मूर्धा ॥ कल्कम् । औषधानां निर्यासो दम्भः पातकं च ॥ शूक धान्यादेः सूची । वृश्चिकादेः कण्टकोऽपि ॥ निकटः समीपम् ॥ शुल्को मण्डपिकायासायस्थानं स्त्रीधनं च ॥ निदाघं ग्रीष्मः ॥ नखं पाणिजः । यथा रुद्रस्य त्रैलोक्यसुन्दर्यां हस्तिवर्णने । उयोरस्ताजनितदन्तवेदनाशङ्कया प्रसादनार्थं पादलग्नानि चन्द्रमण्डलानीवोज्ज्वलानि नखानि धारयन्तम् ॥ बाणं शरः ॥ द्रोणं चतुराढकोऽष्टाढको वा देशभेदात् ॥ सुवर्णं कनकम् ॥ दुर्गस्तु स्त्रीनरलिङ्ग इत्याह । सवर्ण इति शाकटायनः ॥ भूषणं अलङ्कारः ॥ रणन्ति दुन्दुभयोऽत्रेति रणम् । यथा—रणे रभसनिर्भिन्नद्विपपाटविकासिनि ॥ रभसेन निर्भिन्ना द्विपपाटविकानामसयो यत्र तदित्यर्थः ॥ कार्षापणं हिरण्यप्रमाणम् । अणप्रत्ययं विनापि पुंनपुंसकवाचीत्यर्थः ॥ तोरण वन्दनमाला ॥ काण्डः शरो नालं वर्गो वारि कुत्सितं च ॥ ताण्डवम् । उद्धतनृत्तं तृणविशेषश्च ॥ दण्डं यष्टिश्चतुर्थोपायो दमो मन्थाश्च ॥ मण्डं सर्वरसानां द्रवद्रव्याणां मुख्यम् ॥ पिटकं गण्डोलकः । विस्फोटवाची(१) तु त्रिलिङ्गः ॥ सक्तु यवादिविकारः ॥ तडागः सरः ॥ व्रण क्षतम् ।

विपक्षचित्तोन्मथना नखव्रणास्तिरोहिता विभ्रमनमण्डनेन ये ॥

समासे तु पुल्लिँङ्गो यथा नाडीव्रणः ॥ पेट संहतिः परिच्छदश्च ॥ मञ्चकं शयनविशेषः ॥ वारम् आच्छादकं वानमस्य वयनरन्यादेः प्रागवदित्यनेन णत्वे । बारबाणं कञ्चुकः ॥ बाणे वारणस्य(२) व्यत्ययो मयूरव्यंसकादित्वादिति श्रीभोजः ॥ चरणं पादः । यथा—

(१) विस्फोटकवाचीति पा० । (२) वारणं वाणस्येति पा० ।

स्खलति चरणं भूमौ न्यस्तं न चार्द्रतरा मही-
स्फुरति च तथा वामो वाहुस्तनुश्च विकम्पते ।
शकुनिरहितश्चायं तारं विरौति हि नैकशः-
कथयति महाघोरं वृत्तं न चात्र विचारणा ॥

वस्त्रो वासः ॥ अम्बरो वस्त्रम् ॥ ऐरावतम् । इन्द्रगजः ॥६४॥

चरकमठविटङ्कक्ष्वेडिता भूतवृत्त-
प्रयुतघृतवसन्ता हस्तबुस्तापराह्णाः ।
पलितफलककण्वा नामकर्माभिधाना-
ऽयुतशततृणनीडा यौवनोद्यानयानाः ॥६५॥

चरकं शास्त्रविशेषः ॥ मठं व्रतिनां स्थानम् ॥ विटङ्कं कपोतपाली ॥ क्ष्वेडितो मुखध्वनितभेदः ॥ भूतः पिशाचः ॥ वृत्तः शीलम् ॥ प्रयुतम् । दश लक्षाः ॥ घृतः । आज्यम् ॥ वसन्तम् । ऋतुविशेषः ॥ हस्तं पाणिः ॥ बुस्तं मांसशष्कुली ॥ अपराह्णं दिवसापरार्धभागः ॥ पलितः । पाण्डुराः केशाः ॥ फलकः खेटकम् ॥ कण्वं पापम् ॥ नामा ॥ अयं कर्मा ॥ अभिधानं नाम श-व्दश्च ॥ अयुतम् । दश सहस्राणि ॥ शतः । सङ्ख्याविशेषः ॥ तृणः शष्पः ॥ नीडः कुलायः ॥ यौवनो द्वितीयं वयः ॥ उद्यान आरामः ॥ यानो वाहनम् ॥६५॥

तीर्थप्रोथौ नलिनपुलिनस्तेनयोधौषधानि-
स्थानं शूर्पं निधनशयनद्वीपपुच्छायुधानि ।
यूथं गूथं कुणपकुतपच्छद्मवर्णासनानि-
छत्राकाशप्रतिसरमुखाष्टापदारण्यवर्षाः ॥६६॥

तीर्थः पुण्यस्थानम् ॥ प्रोथोऽश्वादीनां नासा ॥ नलिनः कमलम् ॥ पुलिनः सैकतम् ॥ स्तेनं चौर्यं चोरश्च ॥ योध सुभटः । यथा सूराचार्य्याणाम् ।

योधैर्योधानि हन्यन्ते क्रोधान्धैः सिन्धुरैर्गजाः ।
न गण्यते स्वपक्षोपि धिक् क्रोधनसमञ्जसम् ॥

औषधो भेषजम् ॥ स्थानम् । आधारः ॥ शूर्पं मानविशेषः ॥ निधनो मृत्युः ॥ शयनः शय्या ॥ द्वीपम् । अन्तरीपः ॥ पुच्छं लाङ्गूलम् ॥ आयुधो हेतिः ॥ यूथः पशुसमूहः । द्वयोर्यूथयोः समाहार इति विग्रहे द्वियूथमित्यपि

शाकटायनः ॥ गूथो विष्ठा ॥ कुणपं शवः ॥ कुं तपति सूर्योऽत्रेति कुतपः श्राद्धकालः । यत्स्मृतिः—

दिवसस्याष्टमे भागे मन्दीभवति भास्करः ।
स कालः कुतपो यत्र पितृभ्यो दत्तमक्षयम् ॥

यद्वा छागरोममयो वस्त्रविशेषः ॥ क्षेमः—कुशलम् ॥ वर्णम् । अक्षरम् । शुक्लादिद्विजादिश्रुतिवाची तु पुंल्लिङ्गः ॥ आसनः पीठम् ॥ आवृत्त्या । असनं वृक्षविशेषः ॥ छत्त्र आतपत्रम् ॥ आकाशो नभः ॥ प्रतिसरः । कङ्कणं वाहिनीजघनं च ॥ मुखो वदनम् ॥ अष्टसु लोहेषु पदं प्रतिष्ठाऽस्येति सञ्ज्ञायामष्ट इत्यनेनात्वे । अष्टौ पदान्यत्र । अष्टापदं शारीफलम् । अष्टापदः सुवर्णम् ॥ अरण्यः । अटवी ॥ वर्षं वृष्टिः संवत्सरश्च । यथा—पुष्पवर्षं इव मौक्तिकवर्षः ॥६६॥

कमण्डलुर्मण्डपकुट्टिमार्बुदाऽवतंसपाराः शतमानचन्दनौ ।
समानयूपौ द्रढमूषिकौदना,दिनं विमानं च वितानलोहितौ ॥६७॥

कमण्डलुः करकं कुण्डिका च ॥ मण्डपं जनाश्रयः ॥ कुट्टेन निर्वृत्तः । घञन्तभावादिम(१) इत्यनेन । इमप्रत्यये । कुट्टिमो बद्धभूमिकम् ॥ अर्बुदो दशकोटिरक्तजो व्याधिश्च । पर्वते तु पुंल्लिङ्गः ॥ अवतंस शेखरम् ॥ पारः परतीरम् ॥ शतं मानानामस्य । शतमानो भूभागविशेषः ॥ यद्वा । शतमानं रूप्यपलम् ॥ यत्स्मृतिः—

द्वे रूप्याले रूप्यमाषो धरण षोडशैव ते । शतमानं तु दशभिर्धरणैः पलमेव च ॥

चन्दनो मलयजम् ॥ समानः सदृशम् ॥ यूषो मुद्गनिर्यासः ॥ द्रढोऽविनष्टम् ॥ मूषिकम् । आखुः ॥ उद्यते सिच्यते व्यञ्जनैरिति । ओदनम् ॥ दिनो वासरः ॥ विमानो देवतायानं सप्तभूमिकगृहं च ॥ वितानो याग उल्लोचो विस्तारश्च । तुच्छवाची तु त्रिलिङ्गः ॥ लोहितः शोणितम् । गुणवचनस्तु वाच्यलिङ्गः । लोहितो गौः । लोहिता शाटी । लोहितं वस्त्रम् ॥ ६७ ॥

अंसक्षीरकषायबिम्बविटपा नेत्राण्ययौ शेखरः,
केदाराश्रमशल्यशूलवलया वालस्तमालो मलः ।

---

(१) भावप्रत्ययान्तादिमब्वक्तव्य इत्यस्य वार्त्तिकस्यैव पाठान्तरमिदं विज्ञेयमिति प्रो० श० ।

गुल्माङ्गारविहारतोमररसाः पात्रं पवित्रं पुरं,
मध्यं बुध्नमृणालमण्डलनला नालप्रवालोत्पलाः ॥६८॥

अस्यते भारेण । अंसं स्कन्धः ॥ क्षीरं पयः ॥ कषायं तुवराख्यो रसो निर्यासरागविशेषौ च ॥ बिम्बो मण्डलम् आकृतिश्च ॥ विटपं स्तम्बः । स्कन्धादूर्ध्वं तरोः शाखा ॥ नेत्रो नयनं परिधानपरिमाणविशेषौ च ॥ अव्ययम् । अलिङ्गसंख्यम् ॥ शेखरम् । आपीडः ॥ क्लिद्यति । आर्द्रीभवति पाकार्थं जलेनेति केदारम् । क्षेत्रविशेषः ॥ आश्रमो मुनीनां स्थानम् ॥ शल्यं वंशादीनां कीलविशेषः ॥ शूलं प्रहरणविशेषो रुजा च ॥ वलयो हस्ताभरणम् । यथा—
तनुत्वरमणीयस्य मध्यस्य च भुजस्य च । अभवन्नितरां तस्या वलयः कान्तिवृद्धये ॥

बालं शिशुः केशश्च ॥ तमालं वृक्षविशेषः ॥ मलः पापविट्किट्टानि । यथा सागरचन्द्रस्य—
मुष्णातु कल्मषमलानि मनोऽपकूलखेलन्मरालमिथुनात्तपनात्मजेव ॥
स्मृतौ तु । वसा शुक्रमसृङ् मज्जा मूत्र विट्कर्णविण्नखाः ।
श्लेष्माश्रु दूषिका स्वेदो द्वादशैते नृणां मलाः ॥

गुल्मः प्रकाण्डम् । यद्वा । गुह्यन्ते व्याकुलीक्रियन्ते पथिकसार्थास्तस्मिन्निति गुल्मः । आयस्थानम् ॥ अङ्गति गच्छति निर्धूमकालाग्नितामिति । अङ्गारो वह्निदग्धकाष्ठम् ॥ विहारं भिक्षुस्थानम् ॥ ताम्यन्ति काङ्क्षन्ति तेनारीन् प्रहर्तुमिति तोमरं शर्वला ॥ रसम् । मधुरादिः शृङ्गारादिश्च विषं वीर्यं रागश्च ॥ पात्रो भाजनम् । अत्रास्य पाठः प्रचुरप्रयोगापेक्षः ॥ पवित्रः पावनम् ॥ पुरः पुरी ॥ मध्यः । उदरम् ।
आकर्षतेवोर्ध्वमपि कृशीयानत्युन्नतत्वात् कुचमण्डलेन ।
ननाम मध्योऽतिगुरुत्वभाजां नितान्तमाक्रान्त इवाङ्गनानाम् ॥

बुध्नम् अधोभागः ॥ मृणालो बिसम् । मृणालीत्यपि दृश्यते महाकविलक्ष्येषु ॥ बिसाङ्कुर इत्यन्ये ॥ मण्डलो बिम्बं भूभागविशेषश्च । यथा—
अयमनेन महोदधिभोगिना वलयितो वसुधाफणमण्डलः ॥

नलं शुषिरं(१) तृणम् ॥ नालः पुष्करादीनां दण्डः ॥ अमरमालायां तु नालं नाला स्त्रियामिति स्त्रीलिङ्गोऽभिहितः ॥ प्रवालं पल्लवो विद्रुमश्च ॥ उत्पलो जलजम् ॥६८॥

---

(१) सुषिरमिति पा० ।

जृम्भो वज्रकबन्धकर्षककुदाश्चक्रान्धकाराङ्कुशा–
वक्त्रं सङ्गमदेहदाडिमहिमाः पत्रं बलं वल्कलम् ।
कर्पासामिषकाशकोशकुसुमप्रग्रीवमासेक्कसा–
निर्यासः कलशाम्बरीषकलला माषः करीषं कुशः ॥६९॥

जृम्भो जृम्भणम् ॥ वज्रः कुलिशम् । यथा । वनस्पतिं वज्र इवावभज्य ॥ यथा । भिन्दानो हृदयमथाहि नोद्वज्रः ॥ हीरकश्च ॥ कबन्धं रुण्डः । यथा– वामामसंसक्तसुराङ्गनः स्व नृत्यत्कबन्धं समरे ददर्श ॥ कर्षः पलचतुर्थभागः ॥ ककुदः । प्रधानं राजचिन्हं शृङ्गं च ॥ चक्रो रथाङ्गम् ॥ अन्धकारस्तमः । यथा–प्रोषितार्य्यमणं मेरोरन्धकारस्तटीमिव ॥ अङ्कुशः सृणिः । यथा–

प्रत्यन्यनागं चलितस्त्वरावता निरस्य कुण्ठं दधतान्यमङ्कुशम् ॥

वक्त्रो मुखं छन्दोजातिश्च ॥ वक्त्रेत्यपि शाकटायनः ॥ संगमं नद्यादिमेलः ॥ देहं शरीरम् ॥ दाडिमं फलविशेषः ॥ हन्ति हिनस्ति पद्मवनानीति हिमः । तुहिनम् ॥ पत्रं पर्णं वाहनं च ॥ बलं सामर्थ्यं सैन्यं च ॥ वल्कलं तरुत्वक् ॥ कर्पासं तूलकारणम् ॥ आमिषो मांसम् ॥ काशं तृणभेदः ॥ कोशं धनम् । अमरसिंहस्तु कोष इत्याह ॥ कुसुमः पुष्पम् ॥ प्रग्रीवं वातायनं वाजिनिमित्तधारणं च ॥ मासं त्रिंशदहोरात्रः ॥ सेक्कसः । सिक्कसं यवपिष्टपर्य्यायम् अमरसिंहाद्याः ॥ निर्यासं वृक्षादेर्निस्यन्दः ॥ कलशं घटः । कलशस्त्रियामित्यमरसिंहः ॥ अम्बरीषं भ्राष्ट्रः । अमरसिंहस्तु क्लीबे ॥ कललं शुक्रशोणितपर्याय. ॥ माषं दशार्धगुञ्जो व्रीहिविशेषश्च ॥ करीषो गोमयाग्निः । शुष्कगोमयसङ्घात इत्येके ॥ कुशं दर्भं ॥६९॥

मुसलमुकुलमूलाः पार्श्वपात्रीवपूर्वाः–
कमलहलत्रपालाः खण्डलं कुण्डलं च ।
निगडफलपलाला मङ्गलं शालशीले–
विपचपकविशालाः पूलतैले कपालम् ॥७०॥

मुकुलः कुड्मलम् । यथा सुमनम् । आयुधविशेषः धोदनविशेषश्च ॥ विक्रोर्यम्याम् ।

उष्णालुः शिशिरे निषीदति तरोर्मूलालवाले शिखी—
निर्भिद्योपरि कर्णिकारमुकुलान्यध्यासते षट्पदाः ॥

मूलः । प्रतिष्ठा । आर्द्रः । शिफा । नक्षत्रभेदश्च ॥ परशूनां समूहः । पार्श्वम् । कक्षयोरधः ॥ पात्रीवं यज्ञोपकरणम् ॥ पूर्वं रूढितोऽर्थोऽवगन्तव्यः ॥ दिक्कालयोगे त्वाश्रयलिङ्गः । पूर्वः पर्वतः । पूर्वा नदी । पूर्वं वनम् ॥ कमलं पद्मम् ॥ हलः सीरम् ॥ चषालं यज्ञपात्रम् ॥ खण्डलं खण्डम् ॥ कुण्डलः कर्णवेष्टनम् ॥ निगडं पादबन्धः यथा कालिदासस्य—

मणिबन्धविगलितमिदं सङ्क्रान्तोशीरपरिमलं तस्याः ।
हृदयस्य निगडमिव मे मृणालवलयं स्थितं पुरतः ॥

फलं प्रयोजनं कुसुमादिसम्भवश्च ॥ पलालः । धान्यादेः शुष्कतृणम् ॥ मङ्गलः(१) प्रशस्तम् ॥ शालो वृक्षविशेषः ॥ शीलः । चरित्रम् ॥ विषः शृङ्गिकादिद्रव्यभेदः ॥ चषको मधुपानभाजनविशेषः । यथा—

अधिरजनि वधूभिः पीतमैरेयरिक्तं, कनकचषकमेतद्रोचनालोहितेन ।
उदयदहिनरोचिर्ज्योतिपाक्रान्तमन्तर्मधुन इव तथैवापूर्णमद्यापि भाति ॥

विशालो विशङ्कटम् ॥ पूलं बद्धतृणसञ्चयभेदः ॥ तैलः । तिलादीनां विकारः ॥ कपालः । शिरसोऽस्थि । घटादिखण्डोऽप्युपचारात् ॥७०॥

**समरतिमिरवारा राजसूयोपवासौ—**
**चमसदिवसकंसा वाजपेयो हिरण्यम् ।**
**जठरदरशरीरारावकान्ताराष्ट्राः—**
**पटहगृहकवाटाः कुक्कुटाद्रौं च धाम ॥ ७१ ॥**

समरो रणम् ॥ तिमिरः । तमः ॥ वारं परिपाटिः ॥ राजसूयं क्रतुः ॥ उपवासं भोजनच्छेदः ॥ चमसं यज्ञपात्रविशेषः ॥ दिवसं दिनम् । यथा—

प्रविश्य हेमाद्रिगुहागृहान्तरं निनाय बिभ्यद्दिवसानि कौशिकः ॥

कंसं परिमाणभेदः । लोहभेदो वा ॥ नृवाची तु पुंल्लिङ्गः ॥ वाजपेयं यागः ॥ हिरण्यो धनम् ॥ जठरम् । उदरम् ॥ दर त्रासः श्वभ्रं च ॥ शरीरः कायः ॥ आरावं शब्दः ॥ कान्तारो महारण्यं दुर्गपथश्च ॥ राष्ट्रम् । जनपद

(१) मङ्गलमिति पा० ।

उपद्रवश्च । परराष्ट्रभयम् ॥ पटह डिण्डिमः ॥ गृहो वासः । गृहाः पुंसि च भूम्न्येवेति कश्चित् ॥ कं शिरः पाटयति प्रविशताम्(१) । जपादित्वात् । कवाटो द्वारपिधानम् ॥ कुक्कुटं ताम्रचूडः । अमरसिंहस्तु कुक्कुटः पुंस्येवेत्याह ॥ आर्द्रः शृङ्गवेरम् ॥ धामा गृहं तेजश्च ॥७१॥

पद्मापाढकपित्थषष्टिककुलान्यम्भोजवाजामृताः—
स्थूलद्यूतखलीनलोहकवचाशोकक्षयानेकपाः ।
शङ्खस्तण्डकधर्मचर्मरजतस्नेहासिहंसापराः—
सारः सैन्धवमध्यमाध्वरधनुर्मानस्तनस्थाणवः ॥७२॥

पद्मो जलजम् । निधिवचनस्तु पुंल्लिङ्ग एव । यथा श्रीहर्षस्य ।

अच्छिन्नामृतविन्दुवृष्टिसदृशीं प्रीतिं दधत्या दृशां,
याताया विगलत्पयोधरपटाद्द्रष्टव्यतां कामपि ।
अस्याश्चन्द्रमसस्तनोरिव करस्पर्शास्पदत्वङ्गता,
यन्नैते मुकुलीभवन्ति सहसा पद्मास्तदेवाद्भुतम् ॥

यथा वा कुमारिलस्य ।

सम्पिण्डिताङ्गावयवा उदीयुः पद्मा नवाः कण्टकितोर्ध्वदण्डाः ।
अन्तर्जलावासविवृद्धशीतत्रस्ता वसन्तातपकाम्ययेव ॥

आषाढम् । व्रतिनां दण्डं मासश्च ॥ कपित्थो वृक्षविशेषः ॥ षष्टिकं व्रीहिभेदः ॥ कुलोऽभिजनो गृहं च ॥ अम्भोजः कमलम् ॥ वाजं पिच्छम् ॥ अमृतम् । सलिलं सुधा मोक्षो हृद्यं च ॥ स्थूलं दृढः ॥ द्यूतो दुरोदरम् ॥ खलीनं कविकम् । खलिनेति शाकटायनः ॥ लोहोऽयःप्रभृतिद्रव्यविशेषः ॥ कवचः सन्नाहः ॥ अशोकं तरुविशेषः ॥ क्षयं गृहम् ॥ अनेकपं हस्ती ॥ शङ्खं कम्बु० । निधिललाटास्थिवचनस्तु पुंल्लिङ्ग एव ॥ तण्डकम् । छन्दोगयोग्यो ब्राह्मणो ग्रन्थविशेषः परिष्कारो दण्डको वा ॥ धर्मोऽदृष्टार्थवाची । तत्साधनवाची तु नपुंसकलिङ्गः । तानि धर्माणि प्रथमान्यासन्(२) ॥ अमरसिंहस्तु

(१) प्रविशतां कवाटो द्वारपट्टः जपादित्वाद्वत्वम् । इति पा० ।

(२) धारणाद्धर्मः । यागाङ्गे नपुंसकम् । तानि धर्माणि प्रथमान्यासन् ॥ फले तु पुमान् । एष धर्मः सनातनः । इति विशेषोऽस्य नेष्टः । लोकधर्मो नाऽस्यधर्मोऽस्ति पारिभाषिको धर्मो शब्दोऽप्यस्ति । इत्यधिकं क्वचित् ।

धर्ममस्त्रियामिति पठन् सामान्येनाह । धर्मः पुण्ययमन्यायस्वभावाचारसोमपा इति च(१) ॥ चर्माऽजिनम् ॥ रजतो रूप्यं श्वेतं च ॥ स्नेहं सौहृदम् ॥ असि खड्गः ॥ हंसं सितच्छदः ॥ अपरोऽपरमन्यत् ॥ सारो बलं चन्दनादिस्थिरांशश्च । सारं न्यायादनपेतम्(२) । उत्कर्षवाचकस्तु त्रिलिङ्गः ॥ यत्तु जयादित्येनोक्तम् । उत्कर्षे सारशब्दः पुंलिङ्ग एवेति । तन्न समीचीनम् । सज्जा स्रुतवती सारा दर्पिकाव्रतगर्धिनः ॥

तथा । जये धरित्र्याः पुरमेव सारम् । इत्यादि बहुतरलक्ष्यविरोधात् ॥ ननु वाच्यलिङ्गत्वेऽस्य । सारं सारङ्गलोचना ।

राज्ये सारं वसुधा वसुन्धरायां पुरं पुरे सौधम् ।

इत्यादौ कथं न विशेष्यपदलिङ्गपरिग्रहः । सत्यम् । सामान्यविशेषभावयोजनाया अङ्गीकृतत्वादिति न यथोक्तदोषप्रसङ्गः ॥ सैन्धवो लवणोत्तमम् । यौगिकस्तु त्रिलिङ्गः । सैन्धवं वस्त्रम् । सैन्धवोऽश्वः । सैन्धवी शाटी ॥ मध्यतो मध्यगं नातिप्रधानम् ॥ अध्वरं क्रतुः ॥ धनुः कोदण्डम् । यथा—

धनुर्वंशविशुद्धोऽपि निर्गुणः किं करिष्यति ॥

मानं दर्पः ॥ स्तनं पयोधरः ॥ स्थाणुः कीलकः ॥ ७२ ॥

**महिमनेत्रकपञ्चकदण्डकाः, क्रकचशम्बलकुण्डपकन्दराः ।**
**कटकमालकमर्मरदैवताः, शिखरकेशरदारुभगन्दराः ॥७३॥**

महिम महत्त्वम् ॥ नेत्रकः शृङ्खलकम् ॥ पञ्चकः पञ्चकं विस्तारः ॥ दण्डकं छन्दोविशेषः ॥ क्रकचः करपत्रम् ॥ शम्बलं पाथेयम् ॥ कुण्डपं क्रतुविशेषः ॥ कन्दरं दरी ॥ कटकः सैन्यम् । यथा सागरचन्द्रस्य—

---

(१) पुण्यः । यागाद्यहिंसा वा ॥ यमो धर्मराजः । धर्मस्तु भीमवत् ॥ न्याये च । धर्माधिकारिणः ॥ स्वभावे यथा क्रूरधर्माः ॥ आचारे यथा धर्मशास्त्रम् ॥ सोमपे यथा । एष धर्मः सनातनः ॥ युधिष्ठिरपितापि तावदेव ॥ धर्मसाधने यागादौ च क्लीबे । यच्छ्रुतिः—तानि धर्माणि प्रथमान्यासन् ॥ इत्यधिकं क्वचित् ।

(२) बले यथा—सुसारः । घृतान्मांसन्तु सारकृत् । स्थिरांशे—चन्दनसारो मज्जासारः । न्याय्ये—नैतत्सारं चरेत् । जये धरित्र्याः पुरमेव सारम् ॥ इत्यधिकं क्वचित्पुस्तकान्तरे ॥ भी० श० ।

कटकः कण्टकान्यस्य दलयामास निर्दयम् ।
स हि न क्षमते किञ्चिद्बिन्दुनाप्यात्मनोऽधिकम् ॥

स्वलयं भूभृन्नितम्बश्च ॥ मालको ग्रामान्तरालाटवी ॥ मर्मरं शुष्कपत्र-ध्वनिः ॥ दैवतो देवः ।

यथायं दारुणाचारः सर्वदैव विभाव्यते ।
तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथवा ॥

शिखरोऽग्रम् । यथा—

अगस्त्याज्ञासद्यःश्वसितविकलोच्छ्रायविषमान् ।
उदस्यन्तः सेतावलगितवतो विन्ध्यशिखरान् ॥

केशरः किञ्जल्कम् । यथा—

सम्पिण्डीकृतजीर्णजीरककणश्रेणीश्रियः केशरान्—
सन्नद्धे परितो निरन्तरदलद्द्रोणीनिवेशैस्त्रिभिः ॥

दारुः काष्ठम् । केचिद्दार्विति नपुंसकमेवाहुः ॥ भगन्दरो रोगः ॥७३॥

**दीपोद्यमब्रह्मपिधानभावा वास्तुव्रतार्धप्रवरापिधानाः ।**
**अर्मो मुहूर्तं धनवप्रसौधा रेणुस्तलं लोम पटो विहायः॥७४॥**

दीपं प्रकाशविशेषः ॥ उद्यमं उत्साहः । शाकटायनस्त्वस्मादेव पाठा-दात्वे । उद्याममित्याह ॥ ब्रह्म । प्रजापतिर्वेदाः शाश्वतं ज्ञानं तपश्च ॥ वेधसि पुंस्त्वमित्यन्यः ॥ पिधानः संवरणम् ॥ भावम् । स्वभावः शब्दविष-योऽभिप्राय आत्मा योनिश्च ॥ वास्तुः । वेश्मभूर्गृहं च ॥ व्रतो ब्रह्मचर्यादि-नियमः ॥ अर्द्धं समभागः । अर्धोऽसमभागः ॥ प्रवरः प्रकृष्टम् ॥ अपिधानः स्थगनम् ॥ अर्मं चक्षूरोगविशेषः । अर्मेन्निति दुर्गः ॥ मुहूर्त्तो द्वादश क्षणाः ॥ धनो वित्तम् ॥ वप्रं प्राकारः केदारं तटं च । तत्र तटे—

वप्रेण पर्यन्तचरोडुचक्रः सुमेरुवप्रोऽन्वहमन्वकारि ॥

तथा अर्कोपलोल्लसितवह्निभिरह्नि दीप्ता-
स्तीव्रं महाव्रतमिवात्र चरन्ति वप्राः ॥

सौधः सुधाधवलितम् ॥ रेणुर्धूलिः ॥ तलोऽधो रूपं च ॥ लोमा तनूरुहम् ॥ पटं वस्त्रविशेषः ॥ विहायः । आकाशम् ॥७४॥

उटजचापनपुंसकपातका भुवनकोटरपल्लवगोमयाः ।
अलिखरं हरिचन्दनमूलकौ भवनसंक्रमगाण्डिवपत्तनाः ॥७५॥

उटजः पर्णशाला ॥ चापो धनुः । यथा परिमलस्य—
विपक्षहृद्भङ्गकृता नितान्तं भ्रूलेखया कुञ्चितयोल्लसन्त्या ।
नाकारमात्रेण परंतपस्य यस्यान्वकारि क्रिययापि चापः ॥

नपुंसकं शब्दः । स नपुंसकोऽभवदिति भाष्यकारवचनात्पुंस्यपि ॥ पातकः पापम् ॥ भुवनो लोकः ॥ कोटरं निष्कुटः ॥ पल्लवं किशलयम् । यथा—

लोलौष्ठमौष्ट्रकमुदग्रमुखं तरूणाम् ।
अभ्रंलिहानि लिलिहे नवपल्लवानि ॥

गोमयः करीषः ॥ अलिखरम् । अर्थस्तु लोकादवसेयः ॥ हरिचन्दनम् । हरेरिन्द्रस्य चन्दनो हरिचन्दनः । स चातिपीतः शीतश्च देववृक्षश्च ॥ मूलकं शाकविशेषः ॥ भवनो गृहम् ॥ सङ्क्रमः दुर्गसञ्चरः सेत्वादिः ॥ गाण्डिर्विद्यते यस्य । गाण्ड्यजगात्सञ्ज्ञायामित्यनेन वप्रत्यये । गाण्डिवोऽर्जुनधनुः ॥ पत्तनोऽधिष्ठानम् ॥ ७५ ॥

कर्पूरकूर्पासकषष्ट्युशीरा गाण्डीवनिष्ठेवसुपर्णभस्त्राः ।
पिण्याकपुस्तौ नखरेषुषण्डा वैनीतकं द्वीपिनसारकूटम् ॥७६॥

कर्पूरं घनसारः ॥ कुर्परेऽस्यते । कूर्पासकः । स्त्रीणां कञ्चुकिकाख्यः ॥ षष्टिः सङ्ख्यावाची । अन्ये पुनः स्त्रियामेव मन्यन्ते ॥ उशीरो वालुकम् ॥ गाण्डी विद्यते यस्य । गाण्ड्यजगात्सञ्ज्ञायामित्यनेन वप्रत्यये । गाण्डीवोऽर्जुनधनुः ॥ निष्ठेवो निष्ठीवनम् ॥ सुपर्णे गरुडः ॥ भस्त्रम् ॥ पिण्याकः । सुगन्धिसल्लकीप्रभवधूपस्तिलकल्कं च ॥ पुस्तं लेप्यकर्म ॥ नखरं नखः ॥ इषुः शरः । स्त्रीपुंसयोरित्यन्ये ॥ षण्डः पद्मादीनां समुदायः ॥ वोढृपरम्परया वाह्यते यत्तद्विनीतानामिदम् । वैनीतकं यानम् ॥ द्वीपिनं व्याघ्रः ॥ आरकूटं पित्तलम् ॥ ७६ ॥

[मञ्जीरनूपुरशफाणुतरण्डमेढ्राः—
संसारचूर्णव्रतवासरजन्तुसत्त्वाः ।

कोलाहलः ककुभजानुभगाब्दवेषा—
वित्तस्वभूर्जलशुनाः शललं च गेहम् ॥७७॥]

मञ्जीरो हंसकम् ॥ नूपुरं तुलाकोटिः ॥ शफ खुरः ॥ अणुः सूक्ष्मपरिमाणविशेषोऽन्नविशेषश्च ॥ तरण्डं प्लवः॥ मेढ्रं मेहनम्। यथा—ह्रस्वं वृत्तं मृदु स्थूलं मेढ्रं शस्तं महासुखम् ॥ संसारं जगत् ॥ चूर्णं क्षोदः ॥ वटं तुल्यता गोलश्च ॥ वासरं दिनम् । यथा—

वासराणि कतिचित्कथञ्चन स्थाणुना पदमकार्यत प्रिया ॥

जन्तुसत्त्वेति । जन्तौ प्राण्यभिधेये सत्त्वं पुंनपुंसकं भवति यथा—वन्याग्निनेष्वन्निव दुष्टसत्त्वान् ॥ जन्ताविति किम्। सत्त्वं द्रव्यं प्रकृतिगुणश्च ॥ कोलाहलम्। अव्यक्तो ध्वनिः ॥ ककुभो वीणावादनम् ॥ जानु । अष्ठीवान् । यथा—जानुमस्य गृह्णीयात् ॥ भगं योनिः ॥ अब्दं संवत्सरः॥ वेषो नेपथ्यम् ॥ वित्ते स्वम् । वित्ते वाच्ये स्वं पुन्नपुंसकम् । स्वाः । स्वानि ॥ भूर्जो वृक्षविशेषः ॥ लशुनः । रसोनः स्निग्धश्चोष्णश्च लशुनः कटुको गुरुः ॥ शललं शल्लकशूची ॥ गेहं वेश्म ॥ अस्मादस्ताभिप्रायेणैते दर्शिताः ॥ ७७ ॥

इत्यर्धर्चादिः ॥

राजदन्तार्पितोतावक्लिन्नपक्वपरःशताः ।
नृवरोऽग्रेवणं भृष्टलुञ्चितो लिप्तवासितः ॥७८॥

राजदन्तादौ समासे पूर्वनिपातो न भवति । दन्तानां राजा । राजदन्तः । प्रमुखदृश्यदन्तद्वयम् । अत्र षष्ठीत्यनेन(१) । यदा तु राजा च दन्ताश्चेति समासान्तरं तदा न नियमः ॥ पूर्वमुतम् आतानवितानीकृतं पश्चादर्पितम् । अर्पितोतम् । यथा—

ज्योत्स्नापटे तुहिनदीधितिनार्पितोते, द्यौरास नग्नमुषितेव हृतेऽरुणेन ।
व्योमोत्पगाढमिव भानुमरीचिसस्यं, विक्लिन्नपक्वफलिनीफलवच्च बभ्रे ॥

पूर्वं पक्वं पश्चादवक्लिन्नम् आर्द्रम् । अवक्लिन्नपक्वम् । अनयोरेकादिसूत्रेण ॥ शतात्परे । परःशताः । यथा—

---

(१) षष्ठीति सूत्रे षष्ठीति पदं प्रथमानिर्दिष्टत्वादुपसर्जनं तस्मात्तस्य पूर्वनिपाते प्राप्ते राजदन्तादित्वात्परनिपातः । भी० श०।

स जवेन पतत्परःशतानां पततां व्रात इवारवं वितेने ।

पृषोदरादित्वात्सकारागमः । अत्र पञ्चमीसूत्रेण(१) ॥ ना चासौ वरश्च । नृवरः । प्रधानपुरुषः ॥ वनस्याग्रे । अग्रेवणम् । अतएव पाठात्सप्तम्या अलुक् । अस्भावश्चाव्ययीभावत्वात् ।

बहुधाभिन्नमर्माणो भीमाः खरणसादयः ।
अग्रेवणं वर्त्तमाने प्रतीच्यां चन्द्रमण्डले ॥

वनस्याग्रम् अग्रेवणमित्येके । निपातनात्सत्वम् । अत्र षष्ठीसूत्रेण ॥ पूर्वं लुञ्चितम् अपनीतं पश्चाद्भृष्टं पक्वम् । भृष्टलुञ्चितम् । यथा—

यद्भृष्टलुञ्चितशशेव शशाङ्कपात्री ॥

पूर्वं वासितं भावितं पश्चाल्लिप्तं दिग्धं लिप्तवासितम् । अनयोरेकादिसूत्रेण(२) । यथा—यल्लिप्तवासितमिव द्युसदोऽब्जवातैः ॥ ७८ ॥

**उत्तगाढकुरुश्रेष्ठौ सिक्तसंमृष्टसंयुतौ ।**
**उत्तमर्णाधमर्णौ च परःसहस्र इत्यपि ॥७९॥**

पूर्वं गाढम् अवलोडितं पश्चादुत्तम् उत्तगाढम् । अत्रैकादिसूत्रेण । यथा—

व्योमोत्तगाढमिव भानुमरीचिसस्यम् ॥

कुरुश्चासौ श्रेष्ठश्च । कुरुश्रेष्ठः ॥ पूर्वं संमृष्टं पश्चात्सिक्तम् । सिक्तसंमृष्टम् ॥ सिक्तसंसृष्टमित्यन्ये ॥ अत्रैकादिसूत्रेण । यथा—

यत्सिक्तमृष्टमसृणेव नभोऽङ्गणश्रीः ॥

ऋण उत्तमः । उत्तमर्णः ॥ ऋणेऽधमः । अधमर्णः । अत्र सप्तमीशौण्डैरित्यनेन ॥ सहस्रात्परे । परःसहस्राः । अत्र पञ्चमीत्यनेन ॥ शतसहस्रावित्युपलक्षणम् । तेन—परोरजोभिः स्वगुणैरगाधः सगाधिपुत्रोऽपि गृहानुपैति ।

इत्यपि सिद्धं भवति । पृषोदरादावप्येतद्द्रष्टव्यम् ॥ ७९ ॥

**कुबेरकेशवौ श्रद्धातपसी विष्णुवासवौ ।**
**सोमरुद्रौ शिरोजानु चित्रास्वाती शिरोविजु ॥ ८० ॥**

---

(१) पञ्चमी भयेनेति सूत्रे पञ्चम्याः प्रथमानिर्दिष्टत्वादुपसर्जनत्वेन शतपदस्य पूर्वनिपाते प्राप्ते राजदन्तादित्वात्परनिपातः ॥ एवमन्यत्रापि योज्यम् । (२) पूर्वकालैकसर्वजरत्पुराणेति सूत्रेण वासितादीनां पूर्वं प्रयोगः प्राप्त इति योज्यम् । भी० श० ।

कुबेरश्च केशवश्च । कुबेरकेशवौ । पूज्यद्वारेण(१) ॥ श्रद्धा च तपश्च । श्रद्धातपसी । लघुद्वारेण(२) ॥ विष्णुश्च वासवश्च । विष्णुवासवौ । वर्णभ्रातॄणामनुपूर्वमित्यनेन(३) ॥ सोमश्च रुद्रश्च । सोमरुद्रौ । पूज्यद्वारेण ॥ शिरश्च जानुश्च । शिरोजानु ॥ चित्रा च स्वातिश्च । चित्रास्वाती ॥ शिरश्च विजुश्च । शिरोविजु । विजुर्ग्रीवा स्कन्धो वा । असखियुद्द्वारेण(४) ॥ भोजस्तु शिरोविजूइत्याह ॥८०॥

जम्पती दम्पती जायापती पुत्रपती तथा ।
गौपालिधानपूलासविष्वक्सेनार्जुना मताः ॥८१॥

जाया च पतिश्च । जम्पती । दम्पती । जायापती । इह पाठाज्जायाशब्दस्य जंदंभावश्च ॥ पुत्रश्च पतिश्च । पुत्रपती । एषामसखियुद्द्वारेण ॥ गाः पालयतीति गोपालः । तस्यापत्यं गौपालिः । स धीयते यस्मिंस्तद्गौपालिधानम् । ग्रामोऽवस्थानं वा ॥ पूलानस्यतीति पूलासः ॥ गौपालिधानं च पूलासश्च । गौपालिधानपूलासम् ॥ अल्पाज्द्वारेण(५) ॥ विष्वक्सेनश्चार्जुनश्च । विष्वक्सेनार्जुनौ । अजाद्यद्द्वारेण(६) । यदा पूज्यता न विवक्ष्यते तदा परनिपातार्थः पाठः । अथवा । विष्णोरन्यो विष्वक्सेनः ॥८१॥

वैकारिमतं तण्डुलकिण्वावन्त्यश्मकाश्च दारगवम् ।
केशश्मश्रु स्नातकराजानौ नग्नमुषितश्च ॥ ८२ ॥

विकारस्यापत्यं वैकारिः । स च मतश्च । वैकारिमतम् । अल्पाज्द्वारेण ॥ शाकटायनस्तु वैकारेर्मतो वैकारिमतः । गाजयतीति गाजः । वाजयतीति वाजः । गाजस्य वाजः । गाजवाजः । वैकारिमतश्च गाजवाजश्च । वैकारिमतगाजवाजमित्याह ॥ तण्डुलाश्च किण्वं च । तण्डुलकिण्वम् ॥ अवन्तिर्नाम राजा जनपदो वा । अश्मका नाम जनपदः । अवन्तयश्चाश्मकाश्च ।

---

(१) अभ्यर्हितं च पूर्वं निपततीति वार्त्तिकेन केशवपदस्य पूर्वनिपाते प्राप्ते ।
(२) लघ्वक्षरं च पूर्वमिति वार्त्तिकेन तपःपदस्य पूर्वनिपाते प्राप्ते ।
(३) भ्रातुश्च ज्यायसइति वार्त्तिकेन वासवपदस्य पूर्वनिपाते प्राप्ते । (४) द्वन्द्वेघीति सूत्रेण जान्वादिपदानां पूर्वनिपाते प्राप्ते । एवमग्रेऽपि योज्यम् ।
(५) अल्पाच्तरमिति सूत्रेण पूलासपदस्य पूर्वनिपाते प्राप्ते । (६) अजाद्यदन्तमिति सूत्रेण प्राप्ते । भी० श०।

श्वन्नयश्मकम् । अजाद्यदन्तद्वारेण ॥ दाराश्च गौश्च । दारगवम् । अल्पाज्द्वारेण ॥ केशाश्च श्मश्रु च । केशश्मश्रु ॥ केशश्मश्रू इति भोजः ॥ असखियुद्द्वारेण । स्नातकः समाप्तवेदः । स च राजा च । स्नातकराजानौ । अल्पाज्द्वारेण ॥ पूर्वं मुषितः पश्चान्नग्नः । नग्नमुषितः । यथा—

द्यौरास नग्नमुषितेव हृतेऽरुणेन । एकादिसूत्रेण ॥८२॥

दृषदुपलं पुत्रपशू पूलासकुरण्डगाजवाजानि ।
आरट्वायनिचान्धनिसिञ्जास्थोशीरबीजानि ॥८३॥

दृषच्चोपलं च । दृषदुपलम् । अजाद्यदन्तद्वारेण ॥ पुत्रश्च पशुश्च । पुत्रपशू । असखियुद्द्वारेण ॥ पूलासश्च कुरण्डश्च । पूलासकुरण्डम् ॥ शाकटायनस्तु कुरण्डानां स्थलं कुरण्डस्थलम् । कुरण्डस्थलं च पूलासश्च । कुरण्डस्थलपूलासमित्युवाच ॥ गाजश्च वाजश्च । गाजवाजम् ॥ अन्यस्तु । गजानां समूहो गाजम् । वाजिनां समूहो वाजम् । गाजं च वाजं चेति । गाजवाजम् । तत्प्रत्ययस्तु गणपाठादेव न भवतीत्याह ॥ अनियमप्रसक्ते वाजशब्दस्यैव परनिपातः ॥ आरटतीति । आरट्वो नाम कश्चित् । तस्यापत्यम् आरट्वायनिः । तिकादित्वात् फिञ् ॥ चम्यं भक्ष्यं धनमस्य । तस्यापत्यं चान्धनिः ॥ आरट्वायनिश्च चान्धनिश्च । आरट्वायनिचान्धनि । अल्पाज्द्वारेण ॥ कश्चिद् आरट्वायनिबन्धनीत्याह । पाणिनिस्तु । आरट्वायनिबन्धकीत्याह ॥ सिञ्जनं सिञ्जा । आस्थानं आस्था । सिञ्जा चास्था च । सिञ्जास्थम् । अत्रानियमे प्राप्ते नियमः ॥ उशीरं च बीजं च । उशीरबीजम् ॥ शाकटायनस्तु । उशीरं बीजं यस्मिन् । उशीरबीजो नाम पर्वतः ॥ सिञ्जायां तिष्ठतीति सिञ्जास्थः पर्वतः । उशीरबीजश्च सिञ्जास्थश्च । उशीरबीजसिञ्जास्थम् ॥ अल्पाज्द्वारेण ॥८३॥

विषयेन्द्रियाधरौष्ठाः स्थलपूलासं च दारजारौ च ।
भार्यापती उलूखलमुसलाक्षिभ्रुवगजाश्वशूद्रार्याः ॥८४॥

विषयाश्चेन्द्रियाणि च । विषयेन्द्रियाणि । अजाद्यदन्तद्वारेण ॥ अधरश्चौष्ठश्च । अधरौष्ठम् । अल्पाज्द्वारेण ॥ स्थलं च पूलासश्च । स्थलपूलासम् ॥ दारयतीति हृदयमिति दारः । जरयतीति जारः । दारश्च जारश्च । दारजारौ ।

अत्रानियमप्रसङ्गे दारशब्द एकवचनान्तोऽपि दृश्यते। यथा। धर्मप्रजासम्पन्ने दारे नान्यं कुर्वीत ॥ भार्या च पतिश्च। भार्यापती। अप्राख्युदृद्वारेण ॥ उलूषन्त इत्युलवो धान्यानि। आप्ये(१) क्विप्। उलवः खल्यन्ते सञ्चीयन्ते प्रक्षिप्यन्त इति। उलूखलम्। तच्च मुसलं च। उलूखलमुसलम्॥ अक्षिणी च भ्रुवौ च। अक्षिभ्रुवम्। अत एव पाठात्समासान्तः॥ अनयोरल्पाज्द्वारेण॥ गजश्चाश्वश्च। गजाश्वौ॥ शूद्रश्चार्यश्च। शूद्रार्यौ॥ अनयोरजाद्यदन्तद्वारेण॥८४॥

काकमयूरौ मेधातपसी दारार्थपाण्डुधृतराष्ट्राः।
नरनारायणदीक्षातपसी चित्ररथबाल्हीकौ॥८५॥

काकश्च मयूरश्च। काकमयूरौ॥ मेधा च तपश्च। मेधातपसी। अनयोरर्च्यलघुद्वारेण॥ दाराश्चार्थश्च। दारार्थम्। अजाद्यदन्तद्वारेण॥ पाण्डुश्च धृतराष्ट्रश्च। पाण्डुधृतराष्ट्रौ। वर्णभ्रातॄणामनुपूर्वमित्यनेन॥ नरश्च नारायणश्च। नरनारायणौ॥ दीक्षा च तपश्च। दीक्षातपसी॥ अनयोरर्च्यलघुद्वारेण॥ चित्ररथश्च बाल्हीकश्च। चित्ररथबाल्हीकौ राजानौ। अल्पाज्द्वारेण। पाणिनिवामनमतेन॥ शाकटायनस्तु बल्होऽस्यास्तीति बल्ही। बल्हिकः। सञ्ज्ञाप्रकृत्योरित्यनेन के। चित्ररथबल्हिकम्॥ भोजस्तु चित्ररथबाल्हिकावस्मिन् गणे पपाठ। वणादिमध्ये तु मृद्वीकातिन्तिडीकबाल्हीकवल्मीककलमीककिङ्किणीकापुण्डरीकचञ्चरीकसमीकप्रतीकपूतीकपर्करीकादय इत्यस्मिन् बाल्हीकमिति प्रादर्शयत्॥ एतेषामेतैः सूत्रैः प्राङ्निपाते प्राप्ते परनिपातः क्रियते॥८५॥

पूर्वोऽप्यर्थो धर्मतः शब्दकामात्—
इन्द्राकांन्तेभ्योऽग्निचन्द्रादयोऽपि।
भीष्मादित्यं द्रोणचन्द्रात्त्व राहो—
श्चन्द्रो ग्रीष्मो वा वसन्तादिभाव्यः॥८६॥

पूर्वोऽप्यर्थ इति न केवलं धर्मशब्दकामेभ्यः पूर्वोऽर्थशब्दः परोऽपि द्रष्टव्यो गणपाठसामर्थ्यात्। अर्थश्च धर्मश्च। अर्थधर्मौ। धर्मार्थौ॥ अर्थशब्दौ। शब्दार्थौ॥ अर्थकामौ। कामार्थौ॥ न केवलम् अग्निचन्द्रादयः पूर्वे

(१) कर्मणीत्यर्थः। भो० श०।

भवन्ति परतोऽपि । अग्निश्चेन्द्रश्च । अग्नीन्द्रौ । इन्द्राग्नी ॥ चन्द्रार्कौ । अर्कचन्द्रौ ॥ आद्यन्तौ । अन्तादी ॥ भीष्मद्रोणौ । द्रोणभीष्मौ ॥ चन्द्रादित्यौ । आदित्यचन्द्रौ ॥ राहुचन्द्रौ । चन्द्रराहू ॥ ग्रीष्मवसन्तौ । वसन्तग्रीष्मौ ॥८६॥

शुक्रशुचिकरभरासभगुणवृद्धिसमीरणाग्निकुशकाशाः ।
सर्पिर्मधुदीर्घलघू सतपःश्रुतपाणिनीयरौढीयाः ॥८७॥

शुक्रशुच्यादयः शब्दाः शकृन्मूत्रशब्दपर्यन्ता विपर्ययेणापि भवन्ति ॥ शुक्रश्च शुचिश्च । शुक्रशुची । शुचिशुक्रौ ॥ करभरासभौ । रासभकरभौ ॥ गुणवृद्धी । वृद्धिगुणौ ॥ समीरणाग्नी । अग्निसमीरणौ ॥ कुशकाशम् । काशकुशम् ॥ सर्पिर्मधुनी । मधुसर्पिषी ॥ दीर्घलघू । लघुदीर्घौ ॥ सतपःश्रुतेति । सह तपःश्रुताभ्यां वर्त्तन्ते । सतपःश्रुताः । सतपःश्रुताश्च ते पाणिनीयरौढीयाश्च ॥ तपःश्रुते । श्रुततपसी ॥ पाणिनीयरौढीयाः । रौढीयपाणिनीयाः ८७

भीमसेनार्जुनावेतौ कपित्थाश्वत्थसंयुतौ ।
शकृन्मूत्रं कृतद्वन्द्वा व्यत्यासेन सतां मताः ॥८८॥

भीमसेनार्जुनौ । अर्जुनभीमसेनौ ॥ कपित्थाश्वत्थौ । अश्वत्थकपित्थौ ॥ शकृन्मूत्रम् । मूत्रशकृत् ॥ एतेषां स्वीयस्वीयसूत्रेण नियमे प्राप्ते गणपाठाद्विकल्पः ॥ सतां मता इति साभिप्रायम् । तेन जित्याविपूयविनीयाः । विपूयविनीयजित्याः ॥ देवापिशन्तनू । शन्तनुदेवापी इत्यादयोऽपि भवन्ति ॥८८॥

इति राजदन्तादिः ॥

कडारः पिङ्गलो गौरो भिक्षुकः खलतिस्तनुः ।
शौण्डः कुण्टो वृकः खञ्जो बठरो गडुलस्तथा ॥८९॥

कडारादयः शब्दाः कडाराः कर्मधारये वेत्यनेन पूर्वं वा निपतन्ति । कडारजैमिनिः । जैमिनिकडारः ॥ पिङ्गलमाण्डव्यः । माण्डव्यपिङ्गलः ॥ गौरगोतमः । गोतमगौरः (१)॥ भिक्षुकदाक्षिः । दाक्षिभिक्षुकः ॥ खलतिखारपायणः । खारपायणखलतिः ॥ तनुतृणबिन्दुः । तृणबिन्दुतनुः । तनुशब्दः कृशवाची ॥ शौण्डलिगुः । लिगुशौण्डः ॥ कुण्टमाण्टिः । माण्टिकुण्टः ॥

(१) गौरगौतमः । गौतमगौरः । इति पा० ।

सूकशाण्डिल्यः । शाण्डिल्यसूकः ॥ खञ्जुवात्स्यः । वात्स्यखञ्जुः ॥ बठरच्छान्दसः । छान्दसबठरः ॥ गडुलगालवः । गालवगडुलः ॥ ८९ ॥

वृद्धखोडाविमौ काणः कूटखेलौ च कीर्त्तितौ ।
आहिताग्निगतार्थोढभार्यपीतघृतप्रियाः ॥९०॥

वृद्धमनुः । मनुवृद्धः ॥ खोडकहोडः । कहोडखोडः ॥ काणद्रोणः । द्रोणकाणः ॥ कूटदाक्षिः । दाक्षिकूटः ॥ खेलशाण्डिल्यः । शाण्डिल्यखेलः ॥ एतेषां गुणवचनत्वात्पक्षे परत्वार्थं वचनम् ॥ इतिकडारादिः ॥

एते शब्दा बहुव्रीहौ प्राप्तपूर्वनिपाताः सन्तो वाहिताग्न्यादावित्यनेन पूर्वपदत्वभाजो वा भवन्ति ॥ आहितोऽग्निर्येन स आहिताग्निः । अग्न्याहितः । यथा च भट्टिकाव्ये ।

अग्न्याहितजनप्रष्ठे विजिगीषापराङ्मुखे ।
कस्माद्वा नीतितीक्ष्णस्य संरम्भस्तव तापसे ? ॥

यथा वा । प्रतिशरणमशीर्णज्योतिरग्न्याहितानां
विधिविहितविरिब्धैः सामिधेनीरधीत्य ।
कृतगुरुदुरितौघध्वंसमध्वर्युवर्यै-
र्हुतमयमुपलीढे साधु सांनाय्यमग्निः ॥

गतोऽर्थो यस्यासौ गतार्थः। अर्थगतः॥ ऊढा भार्य्या येन । ऊढभार्यः । भार्योढः ॥ पीतं घृतं येन । पीतघृतः । घृतपीतः ॥ प्रियशब्दस्य केवलस्येहोपदेशादुत्तरपदसनियतम् । तेन प्रियगुडः । गुडप्रियः ॥ प्रियविश्वः । विश्वप्रियः ॥ प्रियद्विः । द्विप्रियः ॥ एतेन चाहिताग्न्यादयो गणाधीता एव ग्राह्या नाधिकप्रयोगाः। तेनाहितवसुरित्यादौ यथाप्राप्तं स्यान्न विकल्पः ॥९०॥

जातादन्तः सपुत्रोऽथ तैलं मद्यं च पीततः ।
गड्वादेः सप्तमी क्तान्तं जातिकालसुखादितः ॥९१॥

जाता दन्ता अस्य । जातदन्तः । दन्तजातः ॥ पुत्रो जातोऽस्य । पुत्रजातः । जातपुत्रः ॥ तैलं पीतं येन । पीततैलः । तैलपीतः ॥ मद्यं पीतं येन । मद्यपीतः । पीतमद्यः ॥ गड्वादेः सप्तमीति गड्वादिभ्यः सप्तम्यन्तो (१)

(१) सप्तम्यन्तमिति पा० ।

बहुव्रीहौ पूर्वं वा निपतति । गडुः कण्ठे यस्य । गडुकण्ठः । कण्ठेगडुः ॥ गडुशिराः । शिरसिगडुः(१)॥ गुरुमध्यः ।मध्येगुरुः ॥ गुर्वन्तः । अन्तेगुरुः(२)॥ इन्दुर्मौलौ यस्य । इन्दुमौलिः । मौलीन्दुः । यथा च

मौलीन्दोर्मौलिभूषा मनसिजनृपतेरान्तरः केलिकोशः ।
प्राचीदिङ्नायिकायाः कनकविरचितप्रौढताडङ्ककान्तिः ।
पीयूषासारवर्षी त्रिभुवननयनानन्दवृन्दैकपात्रं
देवः श्रीश्वेतभानुर्जयति कुमुदिनीबान्धवः सिन्धुजन्मा ॥

भोजस्तु नेन्द्वादिभ्य इत्यनेन निषेधान्मौलीन्दुरिति मन्यते ॥ समर्थाधिकाराद्बहेगडुरित्येव भवति । तथा शशिशेखरः । पद्मनाभः । ऊर्णनाभः । शङ्खपाणिः । पद्मपाणिरित्यादौ परनिपात एव ॥ क्तान्तमित्यादि । क्तान्तं च वा पूर्वं निपतति ॥ जातेः । पलाण्डुभक्षिती । भक्षितपलाण्डुः ॥ सारङ्गजग्धी । जग्धसारङ्गः ॥ पाणिगृहीती । गृहीतपाणिः ॥ कालात् ॥ मासजाता जातमासा ॥ संवत्सरजाता । जातसंवत्सरा ॥ सुखादेः । सुखजाता । जातसुखा ॥ जातदुःखा । दुःखजाता ॥ तृप्रोत्पन्ना । उत्पन्नतृप्रा ॥ न्यासकृता सुखादयो गुणवचना इत्युक्तम्। भोजस्तु सुखादयो दश क्यज्विधौ निरूपिता इत्युक्तवान् जातिग्रहणमकृत्वाकृतिग्रहणात्॥ आकृत्या संस्थानेन व्यज्यते सा जातिः। तेनेह न भवति । आहूतब्राह्मणः । सेवितक्षत्रियः । तर्पितद्राक्षिः । प्रीणितकट इत्येके ॥ जातिपरत्व आकृतेः पूर्वनिपातः। न व्यक्तिपरत्व इत्येके ॥१९॥

ज्ञेयो जातश्मश्रुः पीतदधिच्छिन्नशीर्षपीतविषाः ।
क्तः प्रहरणवाचिभ्यः सप्तम्यपि सम्मता विदुषाम् ॥९२॥

जातं श्मश्रु यस्य । जातश्मश्रुः । श्मश्रुजातः ॥ पीतं दधि येन । पीतदधिः। दधिपीतः ॥ छिन्नं शीर्षं यस्य। शीर्षच्छिन्नः। छिन्नशीर्षः ॥ पीतं विषं येन। विषपीतः । पीतविषः॥ क्त इति। प्रहरणं धनुः खड्गाद्यर्थो येषां तेभ्यः क्तान्तं सप्तम्यन्तं च पूर्वं निपतति । उद्यत उत्खातोऽसिर्येन स उद्यतासिः । असुद्यतः ॥ कलितप्रहरणः । प्रहरणकलितः॥ दण्डः पाणौ यस्यासौ दण्डपाणिः। पाणिदण्डः। विश्रान्तन्यासकृत्वसमर्थत्वाद्दण्डपाणिरित्येव मन्यते ॥

(१) शिरोगडुरित्यपीति पा० । (२) मध्यगुरुः । अन्तगुरुः ! इत्यपि क्वचित्।

वज्रपाणिः । पाणिवज्रः । अविशेषोक्तावप्यसमर्थत्वात् । शूलपाणिः । शार्ङ्गपाणिः । धनुष्पाणिः ॥ पाशहस्त इत्यादौ परनिपात एव ॥ आकृतिगणोऽयम् ॥९२॥ इत्याहिताग्न्यादिः ॥

तिष्ठद्गु प्ररथं खलेबुसमधोनाभं समम्भूमि च-
प्राह्णं पुण्यसमं वहद्गु विषमं प्रान्तं तथा निःषमम् ।
एकान्तं च समम्पदाति सुपमं तीर्थं समानात्परम्—
पूतेनान्वितपूयमानखलतो लूनाद्यवं वा बुसम् ॥९३॥

तिष्ठद्गु । इत्येवमादयः समासास्तिष्ठद्ग्वादिरयमित्यनेनाव्ययीभावसञ्ज्ञा निपात्यन्ते । अयमेव निपातितः समासो भवति नान्यः ॥ तिष्ठन्ति गावो यस्मिन् काले दोहाय स कालस्तिष्ठद्गु । प्रथमरात्रेरर्धघटी । प्रावृट्काल इत्यन्ये । अयमेवेति वचनात्कथनमयं भट्टिकाव्ये प्रयोगः ।

आतिष्ठद्गु जपन्सन्ध्यां प्रक्रान्तामायतीगवम् ।
प्रातस्तरां पतत्रिभ्यः प्रबुद्धः प्रणमन् रविम् ॥

तिष्ठद्गु यावद् आतिष्ठद्गूच्यते । भाष्योदाहरणात्तावदयं विजातीयः । न च समासमात्रेण न भवितव्यमित्युक्तम् । अभिधानप्रमाणश्च समासः ॥ प्रगतत्वं रथस्य । प्रगताः प्रभूता वा रथा अस्मिन्देशे । प्ररथम् ॥ खले बुसानि यत्र काले स कालः खलेबुसम् ॥ नाभेरधोऽधोनाभं प्रहृतवान् । गणपाठादकारः समासान्तः ॥ समत्व भूमेः । समम्भूमि । निपातनान्मुगागमः ॥ शाकटायनस्तु समभूमीत्यप्याह । अन्यार्थत्वे तु । समभूमयो वीथय इत्येवं यौगिकत्वेनास्य लक्षणस्य प्रवृत्तिः । अन्यार्थत्वेऽपि समभूमीति केचित् ॥ प्रगतत्वमह्नां प्रगतमह इति वा । प्राह्णम् । निपातनाद् अह्नादेशः ॥ पुण्यत्वं समायाः पुण्या समेति वा । पुण्यसमम् । पुण्येन समं तृतीयासमासापवाद इति केचित् । वहन्ति गावो यस्मिन् काले स कालो वहद्गु । शरत्काल इत्यन्ये ॥ विगतं समं विगतत्वं समस्य वा । विषमम् ॥ समाद्विप्रकृष्टो हीनो वा देश इति केचित् ॥ प्रगतत्वमन्तस्य प्रगतोऽन्तोऽस्मिन्देश इति वा । प्रान्तम् ॥ निर्गतं समं निर्गतत्वं समस्येति वा । निःषमम् ॥ समान्निष्क्रान्तो निःषममिति केचित् ॥ एकोऽन्तो यस्य तद् एकान्तम् ॥ समत्वं पदातेः । समंपदाति ।

निपातनान्मुगागमः ॥ समपदातीत्यपि शाकटायनः ॥ अन्यार्थत्वे तु । समपदातयो राजान इति यौगिकत्वेनास्य लक्षणस्य प्रवृत्तिः ॥ शोभनाः समा यत्र स कालः सुषमम् । शोभनत्वं समस्येति वा ॥ समानं तीर्थं तीर्थस्य समानत्वमिति वा, समानतीर्थम् ॥ पूताः पूयमानाश्च यवा यत्र काले स पूतयवम् । पूनयवमिति भोजः ॥ पूयमानयवं कालः ॥ खलं रणाजिरं धान्यावपनस्थानं च । खलन्ति संचीयन्ते यशांसि शूरैर्धान्यानि वा यत्र तत्खलम् । खले यवा बुशानि च यस्मिन् काले स खलेयवम् ॥ खलेबुशम् ॥ लूना यवा यस्मिन् काले स लूनयवम् ॥ वा बुशमिति वा शब्दो व्यवस्थावाची । तेन बुशशब्दः खलशब्दादेव द्रष्टव्यः ॥ ९३ ॥

समपक्षं पापसमं समानतीरं प्रदक्षिणं प्रमृगम् ।
अपदक्षिणं च सम्प्रति वासंप्रति लूयमानयवम् ॥९४॥

समत्वं पक्षस्य समः पक्षोऽस्मिन्निति वा । समपक्षं देशः ॥ पापाः समा यस्मिन्युगे काले वा । पापसमम् ॥ समानं तीरं समानत्वं तीरस्येति वा समानतीरम् ॥ प्रस्तुत्य दक्षिणतो भ्रमति । प्रदक्षिणम् । भोजस्तु प्रदक्षिणं वाममित्याह ॥ प्रकृष्टत्वं दक्षिणाया वा । प्रदक्षिणम् ॥ प्रगता मृगा यत्र काले यतो वाऽरण्यादेस्तत् प्रमृगम् ॥ अपगता दक्षिणा यत्र तत अपदक्षिणम् ॥ सम्प्रतीति प्रादिसमुदायरूपः शब्दः । स एव नञ्सम्पर्कादु असम्प्रति ॥ लूयमाना यवा यत्र काले स लूयमानयवम् ॥९४॥

संहृतसंह्रियमाणाद् बुसं यवं चायतीगवात्रिषमे ।
अपरायत्योश्च समं दुःषमामिङ्प्रत्ययोऽपि गणे ॥९५॥

संहृतानि संह्रियमाणानि च बुसानि यवाश्च यत्र काले स कालः संहृतबुसम् । संह्रियमाणबुसम् ॥ संहृतयवम् । संह्रियमाणयवम् ॥ दोहार्थं जलपानार्थं निवासार्थं वायत्यो गावो यत्र काले स आयतीगवम् । यथा—आतिष्ठद्गु जपन्नूसन्ध्यां प्रक्रान्तामायतीगवम् ॥ न विषमम् । अविषमम् ॥ अपरा आयत्यो वा समा यत्र काले सोऽपरसमम् । अवरसममिति भोजः ॥ आयतीसमम् ॥ दुष्टत्वं समाया दुष्टाः समा वा यत्र तद्दुःषमम् । गणपाठसामर्थ्यात्स्त्रीत्वनिवृत्तिः ॥ इच्प्रत्ययोऽपीति । इच्युद्धे इत्यनेन य इच् विहित-

स्तदन्तः शब्दोऽत्र गणे द्रष्टव्यः । तेन परमं भीमं वा केशाकेशीति समासारम्भकत्वं न भवति ॥

तिष्ठद्गु वहद्गवायतीगवं लूनलूयमानपूतपूयमानयवाः खलेसंहृतसंह्रियमाणयवबुसाश्च कालविशेषवाचिन एव गणे द्रष्टव्याः ॥ अन्ये तु देशवृत्तित्वमपि मन्यन्ते । तेनान्यत्र पूर्वेण बहुव्रीहिः स्यात् । तिष्ठन्ति गावो यत्र स तिष्ठद्गुः । तिष्ठद्गवो ग्रामाः ॥ वहन्त्यो गावो यत्र सा वहद्गुर्हलपङ्क्तिः । वहद्गवः कुटुम्बिनः ॥ आयत्यो गावो यत्र स आयद्गुः ॥ लूनयवेषु क्षेत्रेषु वसतीत्यादि ॥ लूनयवादयस्तु प्रथमैकवचनान्ता एव प्रयोक्तव्याः । तेन द्वितीयादिका विभक्तिर्न भवति ॥ समं भूमिपदातिभ्यामन्यपदार्थे प्राऽह्नरथमृगदक्षिणाभिरित्येताभ्यां सूत्राभ्यां कालभावयोरेवान्यपदार्थ इष्यते । तेन समा भूमिरस्मिन्ग्रामे । समभूमिर्ग्रामः । प्रगता मृगा अस्मात् । प्रमृगो देशः । प्राह्णः । प्ररथः । प्रमृगः । प्रदक्षिणः ॥ अन्यपदार्थ एव । समा भूमिः । समभूमिरित्यादौ तत्पुरुष एवेति भोजः ॥ आकृतिगणोऽयम् । तेन यत्प्रभृति तत्प्रभृतीत्यादीनामपि क्रियाविशेषणवृत्तीनां व्युत्पत्तिरनेनैव द्रष्टव्या ॥ ९५ ॥

इति तिष्ठद्ग्वादिः ॥

ऊरीभ्रंशकलोररीगुलुगुधाधूसीस्वधाविःसजू—
धूलीध्वंसकलोरुरीमसमसाविक्लीफलीमस्मसाः ।
तालीसंशकला फलू च शकला स्वाहा वषट्श्रौषटौ—
वेताली च पशूपलीगुलुगुलातालीवितालीश्रदः ॥ ९६ ॥

इत्पुक्तेत्यादिना सूत्रेणोर्यादयः सुबन्ता भ्वादिना सह समस्यन्ते । स समासस्तत्पुरुषो भवति ॥ ऊरीत्यङ्गीकारे विस्तारे च । ऊरीकृत्य । अङ्गीकृत्य विस्तारं कृत्वा वेत्यर्थः ॥ केचिद् अनुकरणविस्तारयोरिति पठन्ति । अपरे भृशार्थमप्यदमशंसन्तु । यथा—

तदूरीकृत्य कृतिभिर्वाचस्पत्यं प्रतायते ॥

भ्रंशकलेति हिंसायाम् । भ्रंशकलाकृत्य । हिंसित्वेत्यर्थः ॥ उररी । ऊरीवत् ॥ गुलुगुधेति पीडायाम् । गुलुगुधाकृत्य (१) । पीडयित्वेत्यर्थः ।

(१) गुलगुधेति० गुलगुधाकृत्य । इति पा० ।

क्रीडायामित्यन्ये ॥ गुलुगुधेत्यन्ये ॥ धूसीति विस्तारे । धूसीकृत्य । विस्तार्येत्यर्थः ॥ धूसी कान्ताविति शाकटायनः । अपरे धूसी काङ्क्षायाम् । धूसीकृत्य । काङ्क्षां कृत्वेत्यर्थः ॥ स्वधेति संप्रदाने । स्वधाकृत्य स्वधाशब्दोच्चारितमग्न्यादिकर्म कृत्वा गत इत्यर्थः ॥ तृप्तिप्रीत्योरित्यन्यः ॥ एवं स्वाहावषट् श्रौषट्वौषटामर्थो द्रष्टव्यः । वषट् पूजायामित्यन्यः । एतेषां सम्प्रदानार्थत्वात्करोतिनैव सम्बन्धः ॥ आविस् । इति प्राकाश्ये यथा—

तेषामाविरभूद्ब्रह्मा परिम्लानमुखश्रियाम् ॥

आविष्करोति । प्रकटयतीत्यर्थः । आविःशब्दस्येह पाठात्सूक्तत्वे धातोः प्रागेव निपातः । एवं च योऽयं प्रयोगः । वारुणीमदविशङ्कमथाविश्चक्षुषोऽभवदसाविव रागः ॥ इति । तथा—

पृथुदर्विभृतस्ततः फणीन्द्रा, विषमाशीभिरनारतं वमन्तः ।
अभवन् युगपद्विलोलजिह्वा, युगलीढोभयसृक्वभागमाविः ॥

इति च सप्रमादज एव नास्त्यभ्युद्धारः । आविरभवद्रागः । आविरभवन्फणीन्द्रा इति क्रियायोगस्य समीहितत्वात् ॥ सजूरिति सहार्थे । सजूःकृत्य । सहितं साहित्येन वा कृत्वा गत इत्यर्थः । सहार्थत्वादयं कृभ्वस्तिभिर्युज्यते । आविःशब्दश्च प्राकाश्यार्थत्वात् ॥ धूलीति विदूरव्याकुलीभावे । धूलीकृत्य । विदूराकुलतां कृत्वेत्यर्थः ॥ ध्वंसकला । भ्रंशकलावत् ॥ उरुरी । उरीवत् ॥ मसमसेति ध्वंसकलावत् ॥ विक्ली फली । इति विकारे । हिंसायामिति वामनः । विकारार्थत्वात् कृभ्वस्तिभिर्युज्यते । विक्लीकृत्य ॥ अपर आक्ली विक्लीति विचारे । विक्लीकृत्य विचार्येत्यर्थः ॥ फलीकृत्य ॥ मसमसेति मसमसावत् । अपरे तु मसमसा मसमसेति द्वौ सञ्चूर्णने संवरणे चेत्याहुः ॥ ताली विदूराकुलीभावे । तालीकृत्य ॥ ताली आताली वर्णे शाकटायनः ॥ अपरे तूत्तमार्थे । तालीकृत्य । उत्तमं कृत्वेत्यर्थः ॥ विस्तारे तु भोजः ॥ संशकलेति मसमसावत् । असङ्कुलेति भोजः ॥ फलू विक्लीवत् । फलू फलीति क्रियासम्पत्तौ । फलूकृत्य । फलीकृत्य । क्रियां सम्पाद्येत्यर्थः ॥ शकला । मसमसावत् ॥ अपरे शकला संशकला ध्वंसकला भ्रंशकलेति चत्वारः परिभवे । शकलाकृत्य । परिभूय गत इत्यर्थः ॥ वेतालीति तालीवत् । विस्तारे तु भोजः ॥ पशू । इति हिंसायाम् । पशूकृत्य गतः । हत्वा गत इत्यर्थः ॥

फलीति विक्लीवत् ॥ गुलुगुला । गुलुगुधावत् ॥ आताली वितालीति तालीवत् ॥ श्रुदिति शीघ्रार्थे । श्रुत्कृत्य गतः । शीघ्रं कृत्वा गत इत्यर्थः ॥ अन्यस्तु श्र-दिति श्रद्धाने । श्रद्धाय । श्रद्धां कृत्वेत्यर्थः । अथ दधातिना युक्त प्रयुज्यत इत्याह ॥ ९६ ॥

प्रादुः पाम्प्यालम्बीपाम्पालीसङ्कलाश्च केवाली ।
आलोष्ठी केवासी सेवाल्याक्ली च वार्दाली ॥९७॥

प्रादुः प्राकाश्ये । यथा ममैव—

निःसीमाश्चर्यधाम त्रिभुवनविदितं पत्तनं यत्त्वदीयं—
तन्मध्ये वृद्धिमीयुः फलभरनमिताः शाखिनश्चूतमुख्याः ।
नैतच्चित्रं विचित्राद्विहितकृतयुग त्वत्प्रभावात् क्षितीश—
प्रादुःषन्ति प्रभूता यदि सुरतरवश्चित्रमेतद्बुधानाम् ॥

श्वादिनेति सामान्योक्तावपि कृभ्वस्तिभिरेव योग एतेषां समासः ॥ पाम्पी विस्तारविध्वंससाधुर्येषु करुणाविलापे च । पाम्पीकृत्य । विस्तार विध्वंसं साधुर्यं च कृत्वेत्यर्थः ॥ पाम्पीकृत्य । करुणं विलप्येत्यर्थः ॥ आल-म्बीति प्राकाश्ये हिंसायां च । आलम्बीकृत्य ॥ पाम्पाली । सङ्कला । केवा-ली । आलोष्ठी । केवासी । सेवाली । आक्ली हिंसायाम् ॥ पाम्पालीकृत्य । हिंसित्वेत्यर्थ इत्यादि ॥ आक्लीशब्दो विकारेऽपि । आक्लीकृत्य ॥ वार्दा-लीति प्राकाश्ये हिसायां च । वार्दालीकृत्य ॥ पार्दालीति कश्चित् ॥

इत्यूर्य्यादिः ॥

साक्षाद्बीजरुहानमःप्रसहनेचिन्ताविसो रोचना—
बीजर्य्या लवणं सह प्रतपने भद्रार्थयग्नावमाः ।
अद्धा प्राजरुहोदकं विसहने मिथ्यार्द्रमास्थोऽष्टमः—
प्राजर्या च विकम्पने विहसने शीतंवशेप्रादुसः ॥९८॥

साक्षादित्यादय शब्दाश्च्व्यर्थविषयाः करोतिना सह साक्षादाद्याच्च्चिव-रित्यनेन वा समस्यन्ते । स च तत्पुरुषसञ्ज्ञो भवति । साक्षात्कृत्य । सा-क्षात् कृत्वा । असाक्षाद्भूतं साक्षात् कृत्वेत्यर्थ ॥ बीजरुहेति रुहिक्रियार्थः । बीजरुहाकरोति सेवक ॥ शोभायामित्यन्ये ॥ नमस्कृत्य ॥ प्रसहने । इत्युत्सा-

हे सामर्थ्ये च । प्रसहनेकृत्य ॥ चिन्ता इति मानसे व्यापारे । चिन्ताकृत्य ॥ चित्तेति कश्चित् । स चाचित्ता चित्ताकृत्वा । चित्ताकृत्य । अव्ययत्वादसमासेऽपि विभक्त्यश्रवणमव्ययत्वं च स्वरादेराकृतिगणत्वादित्याह । एवमन्येष्वपि ॥ आविष्कृत्य ॥ रोचना इति श्रद्धोत्पादने प्रशंसायां च । रोचनाकृत्य ॥ लोचनेलि दीप्तौ कश्चिदाह ॥ वीजर्या इति जरणक्रियार्थः । वीजर्य्याकृत्य धनस्य गतः ॥ शोभार्थे इत्यन्ये ॥ लवणमिति रुच्यर्थे । लवणंकृत्य ॥ सह इति सम्बद्धार्थः । सहकृत्य ॥ प्रतपने इति तापार्थः । मिथ्याकृतां प्रतपनेकृदथ क्षितीशः ॥ वितपन इत्यपि वामनः ॥ भद्रा इत्यालोचनाप्रशंसामङ्गलेषु । अभद्राभद्राकरणं पूर्वम् । भद्राकृत्य ॥ केचित् अभद्रां भद्राङ्कृत्वेति विग्रहे विभक्तिमुच्चारयन्ति ॥ अर्थेकृत्य श्लोकं पठति । सार्थकं कृत्वेत्यर्थः । यद्वा— अर्थेकृत्य वदति । सप्रयोजनं कृत्वा वदतीत्यर्थः । यथा छित्तपस्य—

साक्षात्कृतेऽथ लवणंकृति दिङ्मुखानाम्—
उष्णांकृतोऽर्चिषि वशेकृदमाकृदास्ते ।
आस्थाकृताः कृतनमस्कृतयोऽर्थमर्थे—
कृत्य व्रती च नृपती च नृपस्य जग्मुः ॥
अग्नीकृत्य । अग्नीकृत्वा ।
अग्नीकृतामथ हुतैरुदकंकृदंशाव्—
आर्द्रेकृते विहसनेकृति पद्मिनीनाम् ॥

अग्नाविति तैक्ष्ण्ये शाकटायनः ॥ अमा इति रहःसमवायसंयोगसामर्थ्येषु । अमाकृत्य ॥ अद्धाकृत्य । यथा—

शीतंकृदर्चिषि तटीमपराम्बुधेः सं—
सर्गाचिकीर्षति रवावुदयाद्रिशृङ्गम् ।
प्रादुष्कृता मिलितकोकयुगे मुहूर्त्तम्—
अद्धाकृतेव वियता सरसि स्वलक्ष्मीम् ॥

प्राजरुहा इति रुहिक्रियार्थः । प्राजरुहाकृत्य पर्जन्यो निवृत्तः ॥ शोभार्थ इत्यन्ये ॥ उदकंकृत्य ॥ विसहने । प्रसहनेवत् ॥ मिथ्याकृत्य ॥ आर्द्रेकृत्य ॥ आर्द्रे इत्येकारान्तमपि कश्चित् । आर्द्रेकृत्य ॥ आस्था इत्यादरे प्रतिज्ञायां च । आस्थाकृत्य ॥ प्राजर्या इति वीजर्य्यावत् ॥ प्राजुग इत्यपि शाकटायनः ॥ चिन्ताकृताश्रितहितोरिविकम्पनेकृत् ॥ शाकटायनस्तु विकम्पने

प्रकपने वैरूप्ये । विकपने हिंसायाम् । प्रकपने सन्ताप इत्यन्ये । इत्याह ॥ विहसनेकृत्य ॥ शीतंकृत्य ॥ शीतमनादर इति शाकटायनः ॥ वश इत्यस्वातन्त्र्ये । वशेकृत्य ॥ प्रादुष्कृत्य ॥

विकम्पनेप्रभृतीनामेजन्तत्वं लवणंप्रभृतीनां मान्तत्वं च गणपाठसामर्थ्यादेव । अथवा । एते सप्तमीप्रतिरूपका द्वितीयाप्रतिरूपकाश्च निपाताः ॥ चादित्वाभावे । आस्यांकृत्वा । अग्नौ कृत्वा जलं तापयतीत्यादि स्यात् ॥ आकृतिगणोऽयम् । तेन पर्य्यटनं वृत्तिसंसर्य्योप्रभृतयो द्रष्टव्याः ॥ ९८ ॥

इति साक्षादादिः ॥

स्युर्याजकोद्वर्त्तककर्त्तृकारकाः—
प्रयोजकोत्सादकभर्त्तृवर्त्तकाः ।
अध्यापकस्नापकगोप्तृपूजका—
स्तुर्य्यः परेश्चारकवेषकाविमौ ॥ ९९ ॥

याजकादिभिः शब्दैः सुबन्तं पदम् अकयाजकादिभिरित्यनेन समस्यते । स समासस्तत्पुरुषसञ्ज्ञो भवति ॥ ब्राह्मणानां याजकः । ब्राह्मणयाजकः । याजयिता ॥ शरीरस्योद्वर्त्तकः । शरीरोद्वर्त्तकः ॥ प्रणम्य सर्वकर्त्तारम् ॥ घर्मस्य कारकः । घर्मकारकः ॥ तत्प्रयोजककर्तृत्वमुपैति मम जल्पतः ॥ रिपूणामुत्सादकः । रिपूत्सादकः ॥ छद अपवारणे उत्पूर्वः । क्षत्रियस्योच्छादकः । क्षत्रियोच्छादक इति शाकटायनः ॥ भुवो भर्त्ता । भूभर्त्ता ॥ वर्त्तयतीति वर्त्तकः । भाष्यस्य वर्त्तकः । भाष्यवर्त्तकः ॥ पुत्राणामध्यापकः । पुत्राध्यापकः ॥ स्नापयतीति स्नापकः । राज्ञः स्नापकः । राजस्नापकः ॥ धात्र्या गोपकः । धात्रीगोपकः (१) साधूनां पूजकः । साधुपूजकः ॥ ब्राह्मणानां तुर्यः । ब्राह्मणतुर्य्यः ॥ परिचरतीति परिचारकः । गुरोः परिचारकः । गुरुपरिचारकः ॥ परिवेवेष्टि । परिवेषकः । राज्ञः परिवेषकः । राजपरिवेषकः ॥ यद्वा । घृतस्य परिवेषकः । घृतपरिवेषकः ॥ ९९ ॥

---

(१) मूले गोप्तृपदमुदाहरणे च गोपक इति विरोधो नैव ज्ञेयः । यतो मूलेऽपि गोप्तृपदेन गोपक एवाभिप्रेतः । छन्दोभङ्गभयात्तु तथापाठो न कृत इत्यनुमीयते । भी० शा० ।

गणको रथपत्तिभ्यां चतुर्थोन्मादकौ तथा ।
होता हि त्रि च तीयान्तं तुरीयोऽपि सतां मतः ॥१००॥

रथानां गणकः । रथगणकः ॥ पत्तीनां गणकः । पत्तिगणकः ॥ आत्मनश्चतुर्थः । आत्मचतुर्थः ॥ चित्तस्योन्मादकः । चित्तोन्मादकः ॥ क्षीरस्य होता । क्षीरहोता ॥ राज्ञां द्वितीयः । राजद्वितीयः ॥ राज्ञां तृतीयः । राजतृतीयः ॥ राज्ञां तुरीयः । राजतुरीयः । तुरीयोऽपि सतां मत इति साभिप्रायम् । तेन द्वितीयतृतीयेत्यादिसूत्रं बृहत्तन्त्रे व्यर्थम् । गणसमाश्रयणमेव श्रेयः ।

क्रियानुगतिमास्थाय लोके ख्यातिमुपागताः ।
ये कान्ताः पावकाद्यास्ते द्रष्टव्या याजकादिषु ॥

तेन गोमयानां पावकः । गोमयपावकः ॥ गृहस्य दीपकः । गृहदीपकः ॥ पिष्टस्य मोदकः । पिष्टमोदक इत्यादि ॥ न कर्त्तरीति प्रतिषेधे प्राप्ते पाठः ॥ १०० ॥

इति याजकादिः ॥

शौण्डव्याडौ निपुणचपलौ पण्डितान्तःप्रवीणाः—
स्यात्संवीतः कुशलकितवाधीनधूर्त्तप्रधानम् ।
सव्यध्यानप्रवणविदिताः(१) सारगुर्वायसाः स्युः—
सिद्धो बन्धः कठकविरसौ शेखरः शुष्कपक्वौ ॥१०१॥

सप्तम्यन्तं शौण्डादिभिः सह सप्तमी शौण्डैरित्यनेन वा समस्यते । स समासस्तत्पुरुषसंज्ञो भवति ॥ अक्षेषु प्रसक्तः शौण्डः । अक्षशौण्डः ॥ वृत्तौ प्रसक्तक्रियाया अन्तर्भावः शौण्डः प्रवीणः । यथा पण्डितश्रीसागरचन्द्रस्य—

द्रव्याश्रयाः श्रीजयसिंहदेवगुणाः कणादेन महर्षिणोक्ताः ।
त्वया पुनःपण्डितदानशौण्ड गुणाश्रयं द्रव्यमपि व्यधायि ॥

यद्यपि शौण्डशब्दो मद्यपे रूढस्तथापि लक्षणया प्रवीणोऽपि भण्यते । दुर्व्यसनो वा ॥

पानशौण्डः श्रियं नेता नात्यन्तीनत्वमुन्मनाः ॥ इति मुख्यार्थोऽपि समासभाक् ॥ अस्त्रव्याडः ॥ आचारनिपुणः ॥ वाक्चपलः ॥ रणपण्डितः ॥

---

(१) प्रणवविदिता इति पा० ।

ते नालिकेरान्तरपः पिबन्तः । न चैतत् षष्ठीसमासेन सिध्यतीति शक्यं प्रतिपत्तुमर्थभेदात् । न ह्यर्णवेऽन्तर् अर्णवस्यान्तरिति चैकोऽर्थः । किं चाव्ययत्वात्षष्ठीसमासप्रतिषेधः ॥ श्रीभोजस्त्वन्तरशब्दं पपाठ ॥ शास्त्रप्रवीणः । शाकटायनस्तु । अर्थप्रवीणः । अर्थविषये निपुण इत्याह ॥ लोकसंवीतः ॥ सेवाकुशलः ॥ अक्षकितवः ॥ जिनवचनाधीनः । अधीनशब्दोऽस्मादेव गणपाठात् तस्याधीन इति ज्ञापकाद्वा खप्रत्ययान्तो बोद्धव्यः ॥ अथवा । अधिगत इनम् । अधिगत इनोऽनेनेति वा । अधीनः । यथा लोकाधीनः ॥ अक्षधूर्त्तः ॥ विबुधप्रधानम् ॥ कार्य्येसव्यः । कार्य्यविषयेऽनिपुण इत्यर्थः ॥ कर्मेध्यानः । कर्मसु युक्त इत्यर्थः ॥ पृथिवीप्रवण (१) ॥ पृथिवीविदितः ॥ त्वचिसारः ॥ मध्येगुरुः ॥ कायायसः । कायविषय औदरिक इत्यर्थ ॥ काम्पिल्यसिद्धः ॥ चक्रबन्धः ॥ हस्तकटकः ॥ अवसानविरसः ॥ शिरःशेखरः ॥ छायाशुष्कः ॥ कुम्भीपक्वः ॥ आकृतिगणोऽयम् ।

तेन व्यवहारपटुः । आतपरमणीय इत्यादयो द्रष्टव्याः ॥ १०१ ॥

इति शौण्डादिः ॥

ङ्यन्तात्पात्रात्समितबहुलौ गेहगोष्ठात्प्रगल्भ–
क्ष्वेडिन्नर्दिन्विजितिपटवः पण्डितव्याडशूराः ।
गर्भाच्छूरः सुहितसहितस्तृप्तदृप्तौ च धीरः–
पिण्डीशूरो व्रणकृमिरथो कूपमण्डूकयुक्तः ॥ १०२ ॥

पात्रेसमितादय सप्तमीतत्पुरुषा निपात्यन्ते । क्षेपे गम्यमाने पात्रेसमितादयोऽय(२)मित्यनेनायमेव निपातितः समासो भवति नान्यः । ङ्यन्तादिति यथासम्भवं सर्वत्र सम्बध्यते ॥ पात्रेसमिता । अपचितक्षीरा धेनुर्या सा पात्रसंगतिमात्रपर्यवसितव्यापारा सत्येवमुच्यते । तद्वदन्योऽपि यः फलविकलव्या-

(१) पृथिवीप्रणव इति पा० ।

(२) पात्रेसमितादयोऽयमित्याकारकं सूत्रं पाणिनीयव्याकरणे नोपलभ्यते । पाणिनीयाष्टके तु–पात्रेसम्मितादयश्चेत्याकारकं सूत्रमस्ति । तेनानुमीयते तादृशं सूत्रमन्यव्याकरणस्यमादृत्तम् । एवमन्यत्रापि यत्रयत्र सूत्रभेद उपलभ्यते तत्र तत्रान्यव्याकरणसूत्राणि धृतानीति बोध्यम् । इति–भी० शा०

पाराडम्बरः स तदुपमानात्तथा वाच्यो यथा षण्ढा खरकुटी चैत्र इति ॥ पात्रे बाहुल्येन संघटनात् क्षीरादिफलविकला । पात्रेबहुला । शेषार्थः पूर्ववत् ॥ अथवा । पात्र एव समिता मिलिताः । पात्र एव बहुलाः प्रचुराः । नान्यत्र कार्य्ये, पात्रशब्देन साहचर्य्याद्भोजनं लक्ष्यते ॥ गेह एव प्रगल्भः । गेहेप्रगल्भः ॥ एवं गोष्ठेप्रगल्भः ॥ गेह एव क्ष्वेडति विक्रमं दर्शयति । अन्यत्र भीरुः । गेहेक्ष्वेडी ॥ गोष्ठेक्ष्वेडी ॥ गेह एव शौर्याडम्बरं प्रकाशयन् । गेहेनर्दी । तत्तुल्यवृत्तिरन्योऽप्येवमुच्यते ॥ गोष्ठेनर्दी ॥ विजितमनेन विजिती । यद्वा । विजितमस्यास्तीति विजिती ॥ गेह एव विजयते न शत्रुमध्ये । गेहेविजिती ॥ एवं गोष्ठेविजिती ॥ एवं गेहेपटुः । गोष्ठेपटुः ॥ गेहेपण्डितः । गोष्ठेपण्डितः ॥ गेहेव्याडः । गोष्ठेव्याडः ॥ गेहेशूरः । गोष्ठेशूरः ॥ गर्भ एव शूरः । गर्भान्निःसृत्य भीरुः । गर्भेशूरः ॥ गर्भ एव सुहितो न तु बहिर्निःसृतः । गर्भेसुहितः ॥ गर्भ एव तृप्तः स्वमात्राहृतेनाहारेण ततो निःसृत्य न कदाचिदुदरपूरं कृतवानिति । गर्भेतृप्तो दरिद्रः ॥ गर्भ एव दृप्तो मातुश्चेष्टया मातुरायासनेन वा ततोऽन्यत्र निस्तेजाः । गर्भेदृप्तः ॥ अथवा गर्भेसुहितादीनामयमर्थः—योऽलीकाभिमानित्वादनुचितचेष्टः स एवमुच्यते ॥ गर्भ एव धीरो गर्भान्निःसृतश्चपलः । गर्भेधीरः ॥ पिण्ड्यां खादितव्ये वस्तुनि शूरः । कलहवर्धनादिकं कृत्वा खादितव्यं खादत्यन्यत्र कार्य्यान्तरे निर्विक्रमः । स पिण्डीशूरः ॥ व्रणमध्य एवकृमिः । व्रणकृमिः । अल्पदृश्वा ॥ कृमिशब्दः सयोगादिः संयोगविकलोऽप्यस्ति । उदुम्बरे कृमिरिव । उदुम्बरकृमिः । तस्माद्रसाद्विशिष्टं रसमन्यं न वेत्ति स एव मुच्यत इति कश्चिदाह ॥ कूपे मण्डूक इव । कूपमण्डूकः । ततोऽन्यज्जलस्थानं सरः समुद्रं वाऽधिकं न पश्यति । तद्वदन्यः पुरुषो ग्रामे नगरे वा शास्त्रे वा प्रतिबद्धः । ततोऽन्यन्न पश्यति विशिष्टं स एवमुच्यते ॥१०२॥

गेहेनन्दी गृहकलविङ्को गेहेमेह्याखनिकबकौ च ।
गेहेवादी ननु नगरश्वा ज्ञेयः कर्णेटिरिटिरयासौ ॥१०३॥

गेह एव नन्दति । गेहेनन्दी ॥ गेहेनर्तीत्यपि कश्चित् ॥ गृहे कलविङ्क इव । गृहकलविङ्कः ॥ गेह एव मेही । गेहेमेही । य आवश्यकार्थमपि बहिर्न निर्गच्छति भोजन एव च संरभते स एवमुच्यते ॥ आखनिको जलस्रोतः खातं तस्मिन् बक इव । आखनिकबकः । यत्किञ्चिदात्मीय आखनिके लभते

तद्भक्षयति नान्यत्र गच्छति तद्वदन्योऽपि य आत्मीये गृहे यत्किञ्चिदस्ति तद्भक्षयति नान्यत्र गच्छति स एवमुच्यते ॥ अपरश्चाह । आखनिरेव । आखनिकः । कुरवाद्यर्थे कः । स्वल्पखातनिम्नप्रदेशो जलाधार उच्यते तस्मिन् बकः । आखनिकबकः । स हि जलाश्रयक्षुद्रजन्तुभक्षणानुसंधानेन संकुचितात्मा बहुलक्षस्तद्वदन्योऽप्येवमुच्यते ॥ गेह एव दहनशीलो नान्यत्र । गेहेदाही ॥ नगरे श्वेव । नगरश्वा धृष्ट उच्यते ॥ टिरिटिरा चापलेनानुचितचेष्टोच्यते ॥

मत्ता छन्दः । ज्ञेया मत्ता मभसगयुक्ता ॥ १०३ ॥

**कर्णेचुरचुरा कूपकच्छपावटकच्छपाः ।**
**गेहेमेली गृहात्सर्पौ नगरात्काकवायसौ ॥ १०४ ॥**

कर्णेचुरचुरा चापलेनानुचितचेष्टोच्यते । टिरिटिरीति गत्यनुकरणम् । चुरुचुरिति वाक्यानुकरणम् । तत्करोतीति णयन्तादप्रत्ययो निपातनसामर्थ्याद्वाऽनो न भवति ॥ शाकटायनस्तु कर्णेटिरिटिरिः कर्णेचुरुचुरुरित्याह । अन्यैश्च व्याख्या । कर्णे किमपि जल्पित्वा जीवति । नास्य विक्रम इति क्षेपः । टिरिटिरिचुरुचुरित्यनुकरणशब्दौ तदाकारिणि व्यवह्रियेते ॥ कूपकच्छपावटकच्छपौ कूपमण्डूकवत् ॥ गेह एव मिलनशीलो नान्यत्र । गेहेमेली ॥ गृह एवसर्पः । गृहसर्पः । दुष्ट इत्यर्थः । नगरे काक इव । नगरकाकः । नगरे वायस इव । नगरवायसः । स्वार्थनिष्ठः परवञ्चनानिपुण उच्यते ॥ अथवा । नगरकाको न क्वचित्तिष्ठति सर्वमेव नगरं परिभ्रमति तद्वत्तत्रान्यत्र वाऽनवस्थितः पुरुष उच्यते ॥१०४॥

**मातरिपुरुषोदुम्बरमशकौ गेहेविचित्यपि प्रोक्तः ।**
**श्रमणाप्रव्रजिताथो कुलटा पटुना च मृदुनापि ॥ १०५ ॥**

मातरिपुरुषः । यः सदाचारं भिनत्ति सएवमुच्यते । यद्वा । मातरि पौरुषमवलम्बमानो मातरिपुरुषः । तत्तुल्यवृत्तिरन्योऽप्येवमुच्यते ॥ पितरिशूर इत्यपि भोजः । उदुम्बरे मशक इव । उदुम्बरमशकः । अल्पदृश्वा ॥ अथवा । उदुम्बरमशकोऽल्पप्राणः सुकुमारश्च । तादृशो यः स उदुम्बरमशकः । विचितमनेन । विचिती । गेह एव विचिती । गेहेविचिती । अयमर्थः—गेहे स्थित्वेदं युक्तमिदमयुक्तमिति विचिनोति निरूपयति बुद्धिमत्तां प्रकाशयति न समासद्ये कार्य्ये वा स एवमुच्यते । एतेषां यथासम्भवं गणपाठसामर्थ्यात्

ममस्या अलुक् ॥ आकृतिगणोऽयम् । तेन उदपानमण्डूक इत्यादयोऽनुसर्त्तव्याः ॥ इति पात्रेसमितादिः ॥

कुमारशब्दः श्रमणादिभिर्विशेष्यैः सह समस्यते । समासस्तु कर्मधारयः । श्राम्यतीति श्रमणा । कुमारी चासौ श्रमणा च । कुमारश्रमणा ॥ कुमारप्रव्रजिता । कुमारकुलटा । कुमारश्चासौ पटुश्च । कुमारपटुः ॥ कुमारमृदुः ॥१०५॥

तापसीनिपुणादासीगर्भिण्यध्यापकाः स्मृताः ।
कुशलः पण्डितश्चात्र चपलश्चाभिरूपकः ॥१०६॥

कुमारतापसी ॥ कुमारनिपुणा ॥ कुमारदासी ॥ कुमारगर्भिणी ॥ कुमाराध्यापकः ॥ कुमारकुशलः॥ कुमारपण्डितः ॥ कुमारचपलः ॥ कुमाराभिरूपकः ॥

लिङ्गग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति न्यायात् कुमारशब्दः श्रमणादिभिः स्त्रीलिङ्गैः स्त्रीलिङ्ग एव समस्यते । पट्वादिभिस्त्वभिधेयलिङ्गैस्तल्लिङ्गः । तेन कुमारपट्वी । कुमारमृद्वी । इत्यादि सिद्धं भवति ॥ १०६ ॥

इति श्रमणादिः ॥

किंशुकः किंवदन्ती स्यात् किंकिरातश्च किंनरः ।
किंपुरुषोऽथ किंदासः किंजल्काद्या बुधैर्मताः ॥ १०७ ॥

किंशुकाद्यस्तत्पुरुषसञ्ज्ञायां विषये साधवो भवन्ति किंशुकः=पलाशः । किंवदन्ती=जनश्रुतिः ॥ किंकिरातः=कुरण्टकः ॥ किंनरः=मयुः ॥ किंपुरुषः स एव ॥ किंदासः=राजर्षिः ॥ किंजल्कः=पुष्परेणुः ॥

आद्यशब्दादन्येऽपि द्रष्टव्याः । अयं च गणः श्रीभोजदेवाभिप्रायेण ॥१०७॥

इति किंशुकादिः ॥

व्याघ्रः क्रुञ्चामहिषरुरवः कुञ्जरेन्दू वराहः—
सिंहो वज्रं वृषभकलशौ चन्दनं पुण्डरीकः ।
चन्द्रः कुम्भर्षभकिसलयं पल्लवस्त्वृक्षपद्मौ—
हस्तिश्वानावृषितरुवृका बिम्बमप्यत्र लक्ष्यम् ॥१०८॥

सुबन्तं पदं केनचिद्गुणेन परार्थे प्रयुक्तैर्व्याघ्रादिभिः सह गौणैर्व्याघ्रैरित्यनेन समस्यते । समासः कर्मधारयसञ्ज्ञो भवति । व्याघ्र इव=व्याघ्रः ।

पुरुषश्चासौ व्याघ्रश्च=पुरुषव्याघ्रः ॥ स्त्रीकुम्भा ॥ पुरुषमहिषः ॥ पुरुषरुरुः ॥ पुरुषकुञ्जरः ॥ वदनेन्दुः ॥ पुरुषवराहः ॥ पुरुषसिंहः ॥ वाग्वज्रः ॥ पुरुषवृषभः ॥कुचकलशौ । मुनिचन्दनः॥ मुखपुण्डरीकम् ॥ मुखचन्द्रः ॥ स्तनकुम्भौ ॥ पुरुषर्षभः ॥ करकिसलयम् ॥ पाणिपल्लवः ॥ पुरुषर्क्षः । पाणिपद्मम् । पुरुषहस्ती ॥ वानरश्वा ॥ राजानऋषय इव=राजर्षयः । वैरं तरुरिव समूलत्वात् । वैरतरुः ।

बहुमूलस्य मूलं हि महद्वैरतरोः स्त्रियः ।

पुरुष वृकः ॥ ओष्ठो लौहित्याद्बिम्बमिव ।

ओष्ठेन रामो रामौष्ठविम्बचुम्बनचुञ्चुना ॥

आकृतिगणोऽयम् । तेन पुरुषवृषइत्यादयोऽपि भवन्ति ॥ १०८ ॥

इति व्याघ्रादिः ॥

श्रेणिः पूगो निधननिपुणब्राह्मणाः पण्डितोऽथो-
मन्त्रो मुण्डो निचयचपलक्षत्रियाध्यापकाश्च ।
इन्द्रो देवः कृपणविशिपौ निर्धनोकौ पटुर्वा-
राशिर्भूतश्रमणकुशलाः कुन्दुमः स्याद्वदान्यः ॥१०९॥

श्रेणीत्यादयः शब्दा अच्व्यन्ताः कृतादिभिः सह वा समस्यन्ते । समासः कर्मधारयो भवति ॥ अश्रेणयः श्रेणयः कृताः=श्रेणीकृताः पुरुषाः ॥

वणिक्पथे पूगकृतानि यत्र भ्रमागतैरम्बुभिरम्बुराशिः ॥

अनिधनरूपाः निधनरूपाः कृताः=निधनकृताः शत्रवः ॥ निपुणोदाहृताः ॥ ब्राह्मणमताः ॥ पण्डितख्याताः॥ मन्त्रसिताः ॥ मुण्डसंभाविताः ॥ निचयोच्चारिताः ॥ चपलापाकृताः ॥ क्षत्रियमताः ॥ अध्यापकोदिताः । अधीतेऽध्यापक इति शकटाङ्गजः ॥ इन्द्रावधारिताः ॥ देवाम्नाताः । वेदेति रत्नमतिः ॥ कृपणाख्याताः ॥ विशिप गृहम् । अविशिपं विशिपं कृतम्= विशिपकृतम् । भोजस्तु विशिष्ट इत्याह । वामनो गण इत्यपि ॥ निर्धनोपकृताः ॥ ककेः राशिस्थानम् । किलिञ्जा इत्यपरे । ककावकल्पिताः ॥ पटूक्ताः ॥ राशिकल्पिताः ॥ भूतनिराकृताः ॥ श्रमणविश्रुताः ॥ कुशलाख्याताः ॥ कुं भूमिं दुनोति=कुन्दु =उन्दुरः । तं मीनाति । हिनस्ति । कुन्दुमो=

मार्जारः। कुन्दुमावकल्पिताः। अपरे तु कन्दुमेति पठन्ति। कन्दुः पाकस्थानम्। तस्मिन्मिनोतीति कन्दुमः। अकन्दुमाः कन्दुमाः कृताः कन्दुमकृताः शालयः। कुङ्कुमेति रत्नमतिः। वदान्योदीरिताः॥

कृतादयस्तु सर्वैरपि व्याघ्रादिभिः सम्बन्धमनुभवन्ति। अश्रेणयः श्रेणयो विहिताः। श्रेणिविहिताः। श्रेणिनिरूपिताः। श्रेण्यासीना इत्यादयो भवन्ति। यत्र सामर्थ्यं नास्ति तत्रेति शब्दाध्याहारो द्रष्टव्यः। अनिर्धना निर्धना इत्युपकृताः। अचपलाश्चपला इत्यपाकृताः। अभूता भूता इति निराकृता इति। आकृतिगणोऽयम्। तेन तूलकृता इत्यादयोऽपि द्रष्टव्याः॥ १०९॥

इति श्रेण्यादिः॥

कृतादयस्तु यथायोगं व्याख्याताः। ते च—

कृतमितभूतोदाहृतविश्रुतकलितावधारितोपकृताः।
आस्थितनिराकृतोक्ताः संभावितमतविकल्पितासीना
अवकल्पितो निरूपितविहितोपाकृतसमाज्ञाताः।
आम्नातोदितदृष्टावज्ञातोदीरिताख्याताः॥१११॥

इति कृतादिः॥

वृन्दारको वराहश्च नागकुञ्जरपुङ्गवाः।
वृषभव्याघ्रशार्दूलहंससिंहर्षभादयः॥११२॥

गौश्चासौ वृन्दारकश्च। गोवृन्दारकः। नृवराहः। पुंनागः। अश्वकुञ्जरः। मुनिपुङ्गवः। रघुवृषभः। नरव्याघ्रः। राजशार्दूलः। राजहंसः। पुरुषसिंहः। भरतर्षभः॥ आदिग्रहणात्। नवतमालनिभस्य नभस्तरोरित्यादयोऽपि भवन्ति॥११२॥ इति वृन्दारकादिः॥

मतल्लिकोद्घमिश्राः स्युः प्रकाण्डस्थलभित्तयः।
हस्तपाशतटाः पादः पालीमचर्चिकादयः॥११३॥

अश्वमतल्लिका। गोमतल्लिका। यथा—

अभ्याजतोऽभ्यागततूर्णतर्णकां—निर्याणहस्तस्य पुरो दुधुक्षतः।
वर्गाद्गवां हुंकृतिचारुनिर्यतीम्—अरिर्मधोरैक्षत गोमतल्लिकाम्।

साध्वीं गामपश्यदित्यर्थः । पुरुषोद्वाः । आर्य्यमिश्राः । गोप्रकाण्डम् । वक्षःस्थलम् । अंसभित्तिः । केशहस्तः । केशपाशः । स्तनतटम् । तातपादाः । कपोलपाली । गोमचर्चिका । एतआविष्टलिङ्गत्वान्मतल्लिकादयोऽन्यलिङ्गेपि जातिशब्दे स्वलिङ्गोपादाना एव समानाधिकरणा भवन्ति । प्रशंसावचनत्वं चैषां समास एवेति वाक्यं न भवति । आदिग्रहणात् तमस्काण्डः । उरःकवाटः । कुमारीतल्लजकादयो भवन्ति ॥११३॥

इति मतल्लिकादिः ॥

खसूचिखेटौ कितवोऽथ चौरमूर्खब्रुवास्तस्करदुर्दुरूटौ ।
धूर्तौ विटः स्याद्धतकश्च भीरुश्चेलश्च जाल्मापसदौ च धृष्टः ११४

कुत्सितवाचि पदमेतैः खसूच्यादिभिः सह समस्यते । तत्पुरुषश्च समासः । वैयाकरणश्चासौ खसूची च । वैयाकरणखसूची ॥ यः पदपदार्थनिर्णयं कर्त्तुमुचितं पृष्टः सन् निष्प्रतिभत्वात् खम् आकाशं सूचयति स एवमुच्यते । शाकटायनस्तु पृषोदरादित्वात् षत्वे खषूच्याह । वामनप्रभृतयस्तु खसूचिरित्याहुः । मुनिखेटः । याज्ञिककितवः । कविचौरः । पाठकमूर्खः । ब्राह्मणब्रुवः=जातिमात्रोपजीवी । रक्षकतस्करः । मीमांसकदुर्दुरूटः । मीमांसाध्ययनेन शौचाचारादिलक्षणं फलमनवाप्य वेदविप्लावनमद्यपानाद्यनुष्ठाननिरतो नास्तिको जातइत्यर्थः । मुनिधूर्त्तः । मुनिविटः । शिरस्तुण्डमुण्डनदण्डादिमुनिवेषधारणाद्वेश्यागमनमद्यपानाद्यनाचारप्रवृत्त एवमुच्यते । राक्षसहतकः । क्षत्रियभीरुः । ब्राह्मणचेलः । ब्राह्मणजाल्मः । तापसापसदः । ग्राम्यधृष्टः ॥

आकृतिगणोऽयम् । तेन काण्डीरकाण्डस्पृष्टच्छान्दसमठरकृत्यादयो द्रष्टव्याः ॥ एतच्च गणत्रयं श्रीभोजदेवाभिप्रायेण द्रष्टव्यम् । अन्यवैयाकरणमतेन मृग्याण्येतानि ॥११४॥ इति खसूच्यादिः ॥

मयूरव्यंसकश्छात्रव्यंसकः प्रेहिवाणिजा ।
कम्बोजमुण्डो यवनमुण्डोऽथ प्रेहिस्वागता तथा ॥११५॥

मयूरव्यंसकादयः समासा मयूरव्यंसकादयोऽयमित्यनेन कर्मधारयसंज्ञा भवन्ति ॥ विगता अंसा यस्य । व्यंसकः । रमणीयाकारदेहनेपथ्योपेतत्वाद्(१)

(१) देहवेषनैपुण्योपलम्भात्—इति पाठान्तरम् ।

मयूरवन्मयूरः पुमान् । स चासौ व्यंसकश्च बाहुसाध्यव्यापारपुरुषकारविकलः कश्चिदेवं प्रतिक्षिप्यते ॥ यद्वा । व्यंसयति च्छलयतीति व्यंसकः । स चासौ स च यो लुब्धकानां मयूरो गृहीतशिक्षोऽन्यान्मयूरांश्छलयति वञ्चयति स विप्रलम्भक उच्यते । छत्त्रवद्व्यंसकः । छत्त्रव्यंसकः । छत्त्रं हि प्रसारितं सत् सुन्दराकारमाभाति स्वयं तु स्थातुमशक्तमन्येन प्रयत्नवता धार्यते । एवमन्योऽपि यः सदा परावष्टम्भबलस्थितिः सुन्दराकारोऽपि स एवमुच्यते । छात्त्रवद्व्यंसकः । छात्त्रव्यंसकः । छात्त्रो हि यथा लब्धभिक्षामात्रवृत्तिकृतसंतोषो निर्व्यापारतया कार्यतो व्यंसकस्तद्वदन्योऽप्येवमुच्यते । छात्त्ररूपेण वञ्चको वा लोकस्य । छात्त्रव्यंसकः । कम्बोजइव मुण्डः । कम्बोजमुण्डः । यवन इव मुण्डः । यवनमुण्डः । दीक्षितेन मुण्डितव्यम् । कम्बोजा यवनाश्च मुण्डा भवन्ति । एवमिमौ वृथा मुण्डावित्येकोऽर्थः । प्रेहि म्रियस्व वाणिजेति यस्यां सा प्रेहिवाणिजा । प्रपूर्व इणमरणे । यथा प्रेतः ॥ अन्येत्वाहुः । प्रेहि । आदूरेणागच्छेत्यर्थः । स्त्रीलिङ्गत्वादाङ्निपातनादेवाकारइति केचित् । प्रेहि स्वागतमस्याम् । प्रेहिस्वागता ॥ ११५ ॥

एह्यपेहि क्रियापूर्वा वाणिजा स्वागतापि च ।
द्वितीया विघसाचापि प्रघसा प्रकसा तथा ॥११६॥

एहि वाणिजेति यस्यां तिथौ क्रियायां वा सा । एहिवाणिजा । केचिद् आयान्ति गच्छन्ति वाणिजा यस्यामिति विगृह्य निपातनादेहिभावः । अपेहि । अपसर वाणिजेति यस्यां सा । अपेहिवाणिजा । एवम् एहिस्वागता । अपेहिस्वागता । एहिद्वितीया । अपेहिद्वितीया । एहिविघसा । अपेहिविघसा । एहिप्रघसा । अपेहिप्रघसा । एहिप्रकसा । अपेहिप्रकसा । अपेहिप्रकसं दूरमिति यस्याम् । अपेहिप्रकसा । इति तु शाकटायनः ॥११६॥

स्नात्वाकालकपीत्वास्थिरकाकिञ्चननिपत्यरोहिण्यः ।
आहरपूर्वाश्चेलावसनावनितास्तथा वितता ॥११७॥

स्नात्वा कालीभूतः कृष्णीभूतः । स्नात्वाकालकः । पीत्वा स्थिरीभूतः । पीत्वास्थिरकः । न भवति किञ्चन क्वचित् किञ्चिदुपयुज्यत इत्यकिञ्चनं निष्प्रयोजनम् । निपातनान्मुगागमः । नास्य वा किञ्चनास्तीति । अकिञ्चनम् । अकिंचनः ।

अकिंचनः सन् प्रभवः स संपदामकिञ्चना ।

न किञ्चनं नास्य वा किञ्चनमस्तीति विग्रहेण किञ्चनशब्दोऽनव्ययोऽप्यस्तीति चन्द्रदुर्गाभिप्रायो लक्ष्यते ॥ निपत्य भूमौ पतिता रोहिणी लोहिनीरक्ता भवति या सा निपत्यरोहिणी । आहर चेलमिति यस्यां सा । आहरचेला । एवम् आहरवसना । आहर वनितामिति यस्यां क्रियायां सा । आहरवनिता । आहर विततं विस्तीर्णमिति यस्यां सा । आहरवितता । विततं जालमानाय इत्येके ॥ ११७ ॥

एहीडं पचलवणा प्रोहकपर्दा निकुच्यकर्णिश्च ।
उद्धमचूडैहियवं भुक्त्वासुहितोद्धरावसृजे ॥११८॥

इडा स्त्री । यथा । महतीइला । महेला ॥ एहि आगच्छ इडे स्त्रीति यस्मिन् कर्मणि तत् एहीडं विवाहादिकर्म । शास्त्राध्यायादिको वा ग्रन्थप्रविभागः । अन्यपदार्थत्वेपि शब्दशक्तेर्नपुंसकत्वमेव । पच लवणमिति यस्यां क्रियायां सा पचलवणा । प्रोहापनय कपर्दं केशकलापं वराटकं वेति यस्यां सा प्रोहकपर्दा । निकुच्य कर्णौ धावति । निकुच्यकर्णिः । उद्धमोत्क्षिप चूडामिति यस्यां सा । उद्धमचूडा । अभिभवनं निर्भयता वा वर्त्तत इत्यर्थः । एहि यवेति यस्मिन् कर्मणि तद् एहियवम् । अन्यस्तु । एहि यवैरिति यस्मिन् कर्मणीत्याह । भुक्त्वासुहितः । यो यत्किञ्चिदशित्वा तृप्तो भवति सएवमुच्यते । उद्धर कोष्ठाद्धान्यमन्यद्वा । अवसृज देहीति यस्यां सा । उद्धरावसृजा ॥११८॥

उच्चावचप्रोहकटोच्चनीचनिश्चप्रचाः कृन्द्धिविचक्षणा च ।
विचप्रचा चाचपराचयुक्ताऽकुतोभयाचोपचकादिशीकाः ॥११९॥

उच्चं च तदवचं च । उदक् चावाक् चेति वा । उच्चावचम् । यथा—

भिन्नेषु रत्नकिरणैः किरणेष्विवेन्दो-
रुच्चावचैरुपगतेषु सहस्रसंख्याम् ॥

उच्चितं चावचितं च । उच्चावचमित्यन्ये । प्रोह कटमिति यस्यां सा प्रोहकटा । प्रोहणं वीरणादेः कटादिभावाय विरचना ॥ उच्चैश्च नीचैश्च यत्तद्—उच्चनीचम् । उच्चं च नीचं चेति वा । निश्चितं च प्रचितं च । निश्चप्रचम् । निश्चितं च प्रचितं च यस्यां क्रियायां सा निश्चप्रचा । निष्कुषितं च निस्त्वचं च । निश्चत्वचमिति केचित् ॥ कृती वेष्टने । कृन्द्धि विशिष्टं चक्षणमिति यस्यां

सा कन्द्विविचक्षणा। शाकटायनस्तु। कन्द्विविक्षिणीहीति यस्यां सा कन्द्विविक्षिणा। कर्पासविषया क्रिया। निपातनाद्धि लोपो विकरणस्य ह्रस्वत्वं चेत्याह। विकृतं च प्रकृतं च यस्यां क्रियायां सा विचप्रचा। आचितं च पराचितं च। आचपराचम्॥ अवाक् च परस्ताच्च। आचपराचम्। नास्ति कुतोऽपि कस्मादपि भयं यत्र। अकुतोभयम्।

अकुतोभयसञ्चाराः षट् कर्माणि प्रकुर्वते।

आचितं चोपचितं च। आचोपचम्॥ आगच्छ चोपगच्छ च यस्मिन् कर्मणि तद् आचोपचमित्यन्ये। कां दिशं व्रजामीति कांदिशीकः। गणपाठसामर्थ्यादीकण् प्रत्ययः॥ ११९॥

उद्वपनिवपाथोद्धमविधमाहोपुरुषिकेहपञ्चम्यः।

अहमहमिकायदृच्छोत्पचनिपचाः प्रोष्यपापीयान्॥१२०॥

उद्वप निवपेति यस्यां सा। उद्वपनिवपा। उद्धम विधमेति यस्यां सा उद्धमविधमा। अहो पुरुषोऽहमित्यस्य भावः। आहोपुरुषिका। मनोज्ञादित्वादकञि॥ इह पञ्चमीति यस्यां क्रियायां सा। इहपञ्चमी। इह पञ्चमीशब्दसम्पर्कात्प्रकरणमधिकारो वा। इहपञ्चमीत्यन्ये। अहं शक्तोऽहं शक्त इत्यस्ति यस्यां सा। अहमहमिका। स्वार्थिको मत्वर्थीयो वा काट्। अहमूर्पूर्वम् अहंपूर्वं प्रवर्त्तइति विगृह्य तद्भावोऽहमहमिका। पृषोदरादित्वाद्वृद्ध्यभावादिरिति सुधाकरः। या ऋच्छाभिप्रायः। यदृच्छा। स्वभावाद् यथेच्छमित्यर्थे वृत्तिः। यथा–यदृच्छया सूयति यस्तपस्यते। उत्पच निपचेति यस्यां क्रियायां सा। उत्पचनिपचा। आख्यातमाख्यातेन सातत्यइति सातत्ये समासः। असातत्यार्थएव पाठः। अन्ये तु। उत्पच। आख्यातोपसर्गसमुदायो नाख्यातग्रहणेन गृह्यते। पापं विद्यते यस्य स पापी। बहूनां पापिनां मध्येऽतिशयेन पापी। पापीयान्। प्रोष्य वियुक्तो भूत्वा पापीयान् विरूपकः। यथा–

राघवः प्रोष्यपापीयाञ्जहीहि तमकिंचनम्॥ १२०॥

आख्यातेनाख्यातं सातत्येऽन्यक्रियापदस्यार्थे।

कर्त्तारञ्च ब्रूते हि कर्मणा बहुलमाभीक्ष्ण्ये॥१२१॥

आख्यातं तिङन्तमाख्यातेन तिङन्तेन सह समस्यते। अन्यस्य क्रियापदस्यार्थे। अश्नीत पिबतेति सततं वाचो भवन्ति यस्यां भृत्यजनाह्वादानक्रि-

यायां सा। अश्नीतपिबता। अत्रैपामाख्यातप्रतिरूपकाणामव्ययानामन्यपदार्थे स्त्रीलिङ्गता। अर्शआदित्वाद्वादन्तता। एवं खादतमोदता। गणपाठसामर्थ्यादतङ्। खादाचामायां को नाम कस्य न सहायः। पचतभृज्जतेत्यादि॥ ह्यन्तं क्रियापदं कर्मणा ह्यन्तस्यैवाप्येन बहुलं समस्यत आभीक्ष्ण्ये गम्यमाने। स च समासः कर्त्तारमाचष्टे। जहि जोडं देवदत्त यो वक्ताभीक्ष्णं सातत्येन ब्रवीति स वक्ता जहिजोडः। एवम्। उज्जहिजोडमित्यादि॥ पचौदनमिति बहुलवचनान्न भवति॥१२१॥

एहिरेयाहिराभिन्द्धिलवणोत्पत्यपाकलाः।
स्यादहंपूर्विका प्रोहकर्दमाथोद्धुरोत्सृजा॥१२२॥

एहि आगच्छ रे। याहि गच्छ रे। इति यस्यां क्रियायां सा एहिरेयाहिरा। गणपाठादात्वम्। भिन्द्धि लवणमिति यस्यां सा भिन्द्धिलवणा। उत्पत्य। आकाशे भूत्वा। या पाकला पाण्डुर्भवति सा। उत्पत्यपाकला। अत्र परकालक्रियाया अभावे क्त्वाप्रत्ययोऽपि। अनेनैव सूत्रेणैवं पूर्वेष्वपि॥ अहंपूर्वम् अहंपूर्वमिति यस्यां सा। अहंपूर्विका। काटौ पूर्ववत्।

माहंपूर्विकयाहि मे विदधतां सिंहासनाध्यासनम्॥

प्रोहापनय। कर्दममिति यस्यां सा प्रोहकर्दमा। उद्धुर किमपि द्रव्यमुत्सृजेति यस्यां सा। उद्धुरोत्सृजा॥ १२२॥

उत्पतनिपता श्यामा निषण्णपूर्वोन्मृजावमृजा।
ज्ञेया त्वहंप्रथमिका प्रोह्यपदीहद्वितीये च॥ १२३॥

उत्पत निपतेति यस्यां सा। उत्पतनिपता। निषण्णा सती श्यामा जाता निषण्णश्यामा। निषद्यश्यामेति श्रीभोजः। अत्र विशेषणसमासे पूर्वपदानियमः स्यात्। उन्मृड्ढि अवमृड्ढीति यस्यां क्रियायां सा। उन्मृजावमृजा। अतएव निपातनादनयोरिहैव साधुत्वम्। अहं प्रथमो यस्यां सा। अहंप्रथमिका। प्रोह्य पादौ धावति। प्रोह्यपदि। इह द्वितीयेति यस्यां क्रियायां सा। इहद्वितीया। शाकटायनस्तु। अद्यपञ्चमी। अद्यद्वितीयेत्याह। वामनप्रभृतिभिरयमिति वचनात्परमो मयूरव्यंसकः समासान्तरं न भवतीत्युक्तम्। भोजस्तु न मानेन समास इति वचनादयमन्येन सह समस्यतएवेत्याह। मयूरव्यंसकप्रिय इति॥

आकृतिगणोयम् । तेन शाकपार्थिवघण्टामाथच्छत्रभारविप्रभृतयो वेदितव्याः ॥ १२३ ॥

इति मयूरव्यंसकादिः ॥

दधिपयसी मधुसर्पिःसर्पिर्मधुरामलक्ष्मणा ज्ञेयाः ।
आद्यवसाने श्रद्धामेधे ऋक्सामवाङ्मनसे ॥१२४॥

न दधिपयआदीत्यादिना योगेन समाहारे प्राप्ते प्रतिषेधादितरेतरयोग एव भवति । दधिपयसी । मधुसर्पिषी । सर्पिर्मधुनी । रामलक्ष्मणौ । आद्यवसाने । श्रद्धामेधे । ऋक्सामे । वाङ्मनसे । यथा—

अतीतः पन्थानं तव च महिमा वाङ्मनसयो—
रतद्व्यावृत्यायं चकितमभिधत्ते श्रुतिरपि ॥

अस्मादेव गणपाठादेतयोः समासान्तः ॥१२४॥

मेधादीक्षाश्रुतश्रद्धाध्ययनेभ्यस्तपः परम् ।
प्रवर्ग्योपसदौ स्कन्दविशाखौ हरिवासवौ ॥१२५॥

मेधातपसी । दीक्षातपसी । श्रुततपसी । श्रद्धातपसी । अध्ययनतपसी । शेषं स्पष्टम् ॥ १२५ ॥

सूर्य्याचन्द्रमसौ सोमरुद्रौ नारदपर्वतौ ।
शुक्लकृष्णौ पितापुत्रौ ज्ञेयौ भीमार्जुनौ तथा ॥१२६॥
मित्रावरुणौ मातापितरावथ कम्बलाश्वतरौ ।
सोलूखलमुसलाविह सपरिज्याकौशिकौ च गणे ॥ १२७॥

सहोलूखलमुसलाभ्यां वर्त्तते सह परिज्याकौशिकाभ्यां च । उलूखलमुसले ॥ परिज्याकौशिकौ ॥१२७॥

नरनारायणशिववैश्रवणा ब्रह्मप्रजापती चापि ।
अग्नीषोमाविध्माबर्हियाज्यानुवाक्याद्याः ॥ १२८ ॥

एषोऽपि स्पष्टः । आद्यशब्दः प्रकारे । तेन येषां लोक इतरेतरयोग एव द्वन्द्वो दृश्यते तेषामिह ग्रहणं भवति । यथा—चन्द्रार्काविति ॥ १२८ ॥

इति दधिपय आदिः ॥

गवाश्वाजाविकं कुब्जवामनं तु गवाविकम् ।
दर्भशरं श्वचण्डालं स्त्रीकुमारं तृणोलपम् ॥ १२९ ॥

पूर्वपदेत्यादिना सूत्रेण गवाश्वादीनां समाहार एव द्वन्द्वो भवति ॥ गौश्च अश्वश्च । गवाश्वम् ॥ अजा च अविकश्च । अजाविकम् ॥ अजश्च अविका चेति वा । कुब्जश्च वामनश्च कुब्जवामनम् ॥ अन्ये तु कुब्जाश्च स्त्रियो वामनाश्च स्त्रियः । अतएव वचनात्पुंभावे कुब्जवामनमित्याहुः । गौश्च अविकश्च । गवाविकम् ॥ दर्भश्च शरश्च । दर्भशरम् ॥ श्वा च चण्डालश्च श्वचण्डालम् ॥ शाश्वतिकवैराभावे समाहारः । चण्डालपरिगृहीतानामेव शुना सहैकत्रावस्थानम् ॥ स्त्रियश्च कुमाराश्च । स्त्रीकुमारम् ॥ अन्ये तु स्त्रियश्च कुमार्यश्च । उत्तरपदस्यातएव निपातनाद् ईकारनिवृत्तौ स्त्रीकुमारमित्याहुः । तृणानि च । उलपाश्च । तृणोलपम् ॥ १२९ ॥

दासीदासाजैडकदासीमाणवकपुत्रपौत्राणि ।
कुब्जकिरातोष्ट्रखरे मूत्रपुरीषं यकृन्मेदः ॥ १३० ॥

दासी च दासश्च । दासीदासम् ॥ अजश्च अजा च वा । एडकश्च । अजैडकम् ॥ दास्यश्च माणवकश्च । दासीमाणवकम् ॥

अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः ।
नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः ॥

स्वार्थिकश्च कः । अन्ये दासीमाणवमित्येव पठन्ति । पुत्रश्च पौत्रश्च । पुत्रपौत्रम् ॥ कुब्जश्च किरातश्च । कुब्जकिरातम् ॥ कुब्जाश्च कैरातकाश्च । कुब्जकैरातकम् ॥ किराता जनपदः । तत्र भवाः कैरातका इति शाकटायनः । विश्रान्तन्यासस्तु किरात एव कैरातो म्लेच्छइत्याह । उष्ट्रश्च खरश्च । उष्ट्रखरम् ॥ मूत्रं च पुरीषं च । मूत्रपुरीषम् ॥ यकृच्च मेदश्च । यकृन्मेदः ॥ १३० ॥

अर्जुनपुरुषं शाटीपट्टिकम् उष्ट्रशशमूत्रशकृती च ।
भागवतीभागवतं तृणकाष्ठकुटीकुटे चापि ॥ १३१ ॥

अर्जुनश्च पुरुषश्च । अर्जुनपुरुषम् ॥ अर्जुनपुरुष इति (१) शाकटायनः ।

---

(१) अर्जुनश्च शिरीषश्चार्जुनशिरीषम् ॥ द्वावपि वृक्षविशेषवाचिनौ । अर्जुनः पार्थः पुरुषो वासुदेवः—अर्जुनपुरुषम् । यद्वा अर्जुनः सप्तच्छदः पुरुषः पुन्नागः । इत्यधिकं पुस्तकान्तरे ।

शाटी च पट्टिका च । शाटीपट्टिकम् ॥ शाटीप्रच्छदमिति भोजः । उष्ट्रश्च शशश्च । उष्ट्रशशम् ॥ मूत्रं च शकृच्च । मूत्रशकृत् ॥ भगवान् देवताऽस्याः । भगवत इयं वा । भागवती । भागवती च भागवतश्च । भागवतीभागवतम् । तृणं च काष्ठं च । तृणकाष्ठम् ॥ कुटी च कुटश्च । कुटीकुटम् (१) ॥ कश्चित् कुडी बाला । कुडो बालः ॥ कुडी च कुडश्च । कुडीकुडमित्याह ॥ १३१ ॥

मांसशोणितशब्दोपि दर्भपूतीकसंयुतः ।
बालवृद्धं बुधैर्ज्ञेयमुपाध्यायश्च याजकात् ॥ १३२ ॥

मांसं च शोणितं च । मांसशोणितम् ॥ दर्भश्च पूतीकश्च । दर्भपूतीकम् ॥ वामनस्तु दर्भपूतिकमित्याह (२)॥ बालश्च वृद्धश्च । बालवृद्धम् ॥ याजकश्च उपाध्यायश्च । याजकोपाध्यायम् ॥

गवाश्वप्रभृतिषु यथोच्चारितरूपग्रहणादिह न भवति । गोऽश्वौ । गोऽश्वम् ॥ नियतश्चायं गणः ॥ १३२ ॥

इति गवाश्वादिः ॥

हस्ती महेला गणिका कुसूलङ्कटोलगण्डोलकटोलकाश्च ।
गण्डोलकाजौ च कपोतगण्डौ कण्डोलकण्डोलकजालयुक्तौ १३३

पादस्याहस्त्यादेर्लुगित्यनेन हस्त्यादेर्वर्जितत्वाल्लुक् समासान्तो न भवति । हस्तिन इव पादावस्य असौ हस्तिपादः ॥ महेलापादः । गणिकापादः । कुसूलपादः । कटोलपादः । गण्डोलपादः । कटोलकपादः । गण्डोलकपादः । अजपादः । कपोतपादः । गण्डस्येव पादावस्य । गण्डपादः ॥ कण्डोलमिव पादावस्य । कण्डोलपादः ॥ कण्डोलक इव पादावस्य । कण्डोलकपादः ॥ गण्डोलगण्डोलकशब्दावपि वामनः । जालपादः ॥१३३॥

इति हस्त्यादिः ॥

---

(१) कुटी कुम्भदासी कुटः कुम्भः । यद्वा कुटी पर्णशाला कुटो गृहम् । इत्यधिकं क्वचित् । (२) दर्भश्च पूतीकं च दर्भपूतीकम् । वामनस्तु दर्भपूतीकमित्याह । पूतिका वन्नौषधिविशेषो या सोमवल्लीप्रतिनिधित्वेनोपादीयत इत्यधिकं पुस्तकान्तरे ॥

कुम्भस्थूणाशतविकलशीविष्णुगोधैकदासी—
द्रोणीसूचीमुनिशुचिशकृत्कृष्णजालार्द्रनञ्त्रेः ।
सूत्राष्टभ्यां कुणिगुणनिरः सूकरद्वेः षषश्च-
ङ्यन्तं पादं सुविहितपदादेशमेनं विदन्तु ॥१३४॥

कुम्भाविव पादावस्याः। कुम्भपदी॥ स्थूणापदी । शतं पादा यस्याः। शतपदी॥ खर्जूरकजन्तु(१)। विगतौ पादौ यस्याः। विपदी॥ कलशीव पादावस्याः। कलशीपदी॥ विष्णोरिव पादावस्याः। विष्णुपदी॥ एवं गोधापदी। एकः पादो यस्याः। एकपदी॥ केचिन्न पठन्ति। एकपादित्यपि हि स्त्रियां दृश्यते। अन्ये तु व्यवस्थितवानुवृत्तेरिहैकस्मिन्नेवदे विकल्पं वर्णयन्ति। दासीपदी। द्रोणीपदी। सूचीपदी। मुनिपदी। शुची पवित्रौ पादौ यस्याः। शुचिपदी। शकृत्पादौ यस्याः। शकृत्पदी॥ कृष्णौ पादौ यस्याः। कृष्णपदी॥ जालमिव पादौ यस्याः। जालपदी॥ आर्द्रौ पादौ यस्याः। आर्द्रपदी॥ अविद्यमानौ पादौ यस्याः। अपदी॥ त्रिपदी। यथा—त्रिपदीच्छेदनामपि। सूत्रमिव पादावस्याः। सूत्रपदी। अष्टौ पादा अस्याः। अष्टापदी॥ सञ्ज्ञायामष्टन इत्यात्वे। कुणी पादावस्याः। कुणिपदी। गुणस्तन्तुः। तद्वत्पादावस्याः गुणपदी। निर्गतौ पादावस्याः। निष्पदी॥ सूकरस्येव पादावस्याः। सूकरपदी॥ द्वौ पादावस्याः। द्विपदी॥ छन्दोविशेषजातिः॥ षट् पादा यस्याः। षट्पदी॥ ङ्यन्त इति पाद इत्यनेन ङीप्रत्ययान्तं सुविहितपदादेशमिति कुम्भपद्यादिरित्यनेन पदादेशे कृते व्यसुद्‌शिणिक्येऽपदस्य पादः पदित्यनेन सुविहितः पदादेशो यस्य तमिति। उपमानसङ्ख्यापूर्वपदस्येह पाठो नित्यत्वार्थः। कुम्भपदादिशब्दानां प्रवृत्तिनिमित्ताभावेपि रूढितः शतपुष्पादिशब्दवत्स्वाभिधेये प्रवृत्तिर्द्रष्टव्या। यथा—त्रिपादः काष्ठमयोपकरणविशेषः। नहि तस्यापि त्रयएव पादाः किन्तु पादचतुष्टयसद्भावेऽपि तादृग्व्यपदेशो यादृक् पादत्रये सति। आकृतिगणश्चायम्। तेन। शितिपदी। अशीतिपदी। शाक्यपदी। इत्यादयो द्रष्टव्याः॥ १३४॥

इति कुम्भपद्यादिः॥

---

(१) शतपदी—ओषधिविशेषो जन्तुविशेषो वेति पा०।

शरद्विपाशौ हिमवत्कियत्सदो यद्दृग्विदो द्यौर्विश्नोमनस्त्यदः ।
दिक्पथ्युपानच्चतुरस्तदाऽनडुज्जरा जरोऽक्षि प्रतिसंपरानुतः ॥१३५॥

शरदादिभ्योऽव्ययीभावादित्यनेन शरदादिभ्यष्टच् समासान्तो भवति । शरदः समीपम् । उपशरदम् ॥ विपाशो नद्याः समीपम् । उपविपाशम् ॥ हिमवत आ आहिमवतम् । कियन्तं कियन्तं प्रति । प्रतिकियतम् ॥ सदः सदः प्रति । प्रतिसदम् ॥ यंयं प्रति । प्रतियदम् ॥ दृशंदृशं प्रति । प्रतिदृशम् ॥ विदंविदं प्रति । प्रतिविदम् ॥ द्यौरित्यनेन दिव्शब्दो द्योशब्दश्च संगृहीतः । दिवंदिवं प्रति । प्रतिदिवम् ॥ द्यांद्यां प्रति । प्रतिद्यवम् ॥ विशंविशं प्रति । प्रतिविशम् ॥ अनसः समीपम् । उपानसम् ॥ मनो मनः प्रति । प्रतिमनसम् ॥ त्यंत्यं प्रति । प्रतित्यदम् ॥ दिशंदिशं प्रति । प्रतिदिशम् ॥ यथा—प्रतिदिशं क्रियते कलभैरवः । पन्थानंपन्थानं प्रति । प्रतिपथम् ॥ अनुपथम् । ऋक्पूरब्धूःपथादित्यनेनैव समासान्तस्य सिद्धत्वादस्य पाठो न संगतः प्रतिभाति परं वृद्धवैयाकरणमतानुरोधेन पठितः । उपानहः समीपम् । उपोपानहम् ॥ चतुर्णां समीपम् । उपचतुरम् । उपतदम् । अनड्वाहमनड्वाहं प्रति । प्रत्यनडुहम् । जराजर इति जराशब्दोऽत्र पठ्यते । तस्य च स्थाने जरसादेशः । जरायाः समीपम् । उपजरसम् । अक्ष्यक्षि प्रति । प्रत्यक्षम् । एवं समीपमक्ष्णः । समक्षम् । परोक्षम् । भोजस्तु परसमानार्थः परः शब्दोऽव्ययम् । अक्ष्णोः परम् । परोक्षम् । अव्ययेऽव्ययीभावः । कथं प्रत्यक्षोऽर्थः परोक्षः काल इत्यादेरव्ययीभावस्य सत्त्ववचनताऽर्श आदित्वादतो भविष्यतीत्याह(१) ॥ अन्वक्षम् ॥

आकृतिगणोऽयम् । तेन । हिरुक् । इत्यस्यानतिक्रमो यथाहिरुकमित्यादयो वेदितव्याः ॥ १३५ ॥

इति शरदादिः ॥

उरः सर्पिर्मधूपानद्दधि शालिः पयः पुमान् ।
अनड्वान्नौस्तथा लक्ष्मीर्नञ्पूर्वान्नित्यमर्थतः ॥१३६॥

ऋन्नित्याद्युर आदिभ्यंइत्यनेनोरःप्रभृतिभ्यः शब्देभ्यः कप् भवति । व्यूढोरस्कः । बहुसर्पिष्कः । प्रियमधुकः । भारवेस्तु—

---

(१) अर्श आदित्वादच् भविष्यतीत्याहेति पा० ॥

प्रियमधुरसनानि षट्पदाली–मलिनयतिस्म विनीलगन्धनानि ॥

इति चिन्त्यम् । प्रथमं लीढमधवः पिबन्ति कटुभेषजम् ॥ इत्यादि च ।
अवमुक्तोपानत्कः । प्रियदधिकः ॥

रक्षतु वः क्षिप्तकरः क्षोभितदधिभाण्डगलितदधिकस्य ॥

वामनवृत्तौ प्रियदध्न्य इति चिन्त्यम् । सम्पन्ना शालयो यस्य । सम्पन्नशालिकः ॥ प्रियं पयो यस्य । प्रियपयस्कः । प्रियपुंस्कः ॥ प्रियानडुत्कः । प्रियनौकः ॥ प्रियलक्ष्मीकः ॥ पय आदीनामेकवचनान्तानां पाठाद्वचनान्तरे विकल्पः । द्वे वहूनि वा पयांसि यस्य स द्विपयः । द्विपयस्कः ॥ वहुपयाः । वहुपयस्कइत्यादि । यथा–

क्षीणपयस्युपेयुषि भिदां जलधरपटले ।
समुद्रमध्ये गतनौः प्लवमाना इवाम्भसि ॥

नात्र नावो विपत्तिमात्रविवक्षा किं तर्हि कृत्स्नानां नावां निवृत्तिः ।

अकृशनकुशलक्ष्मीश्चेतसा शंसितं सः ॥

अत्र वह्व्यो लक्ष्म्यः शोभा विवक्षिताः । केचिल्लक्ष्मीदरीशब्दौ प्रातिपदिकौ पठन्ति नित्याद्दइत्येव सिद्धे तुल्ययोगेऽपि कवर्थम् । सलक्ष्मीको विनाशितः । सदरीकः खातः । अत्र लक्ष्म्या सह पुरुषो विनाशितः । दर्या सह पर्वतः खात इति तुल्ययोगः । लक्ष्मीपाठ ऋन्नित्याद्दोऽयं विधिर्न भवति । वहुतन्त्री । वहुतन्त्रीक इत्येके ॥ नञ्पूर्वादिति । न विद्यतेऽर्थो यस्य सोऽनर्थको नीचव्यापारः श्लोको वा । नञ्पूर्वादिति किम् । व्यर्थो व्यर्थकः । सनञ्पूर्वात्क्षणादुदीचामिति गणसूत्रमत्र वामनो मन्यते । सह क्षणेन वर्त्तते । सक्षणकः । अविद्यमानः क्षणो यस्य सोऽक्षणकः । प्राचां सक्षणः । अक्षणः ॥ १३६ ॥

इत्युर आदिः ॥

## ज्ञेयो द्विदण्डिसंहतपुच्छी द्विमुसलिनिकुच्यकर्णी च ।
## आच्यपदिप्रोह्यपदी अन्तेवास्येकपदिसपदी ॥१३७॥

द्विदण्डीत्यादयः समुदाया इच्समासान्ता निपात्यन्ते । द्वौ दण्डा यस्मिन्प्रहरणे । द्विदण्डि प्रहरति ॥ संहतानि पुच्छान्यस्मिन्सरणे । संहतपुच्छि धावति । द्वे मुसले यत्र प्रहरणे । द्विमुसलि प्रहरति । निकुच्य कर्णौ धावति । निकुच्यकर्णि । आच्य पादौ शेते । आच्यपदि शेते । अन्ये तु ।

आच्यौ पादावस्मिञ्छयने। अतएव वचनाद् अञ्चतेर्घ्यणि नलोपं प्रतिपन्नाः। प्रोष्ठ प्रेर्य पादौ। प्रोष्ठपदि हस्तिनं वाहयति ॥ मतान्तरं प्राग्वद्वेदितव्यम्। अन्ते वासोऽस्मिन्निति। अन्तेवासि तिष्ठति। अन्तेवासी गुरोरित्यन्यएव शब्दः। अन्ते वसति तच्छीलइति णिनन्तः। एकः पादोऽस्मिन्गमने। एकपदि। समानौ पादावस्मिन्। सपदि गच्छति ॥ १३७ ॥

अञ्जलिदन्तात्पाणेः कर्णाद्बाहोश्च हस्ततश्चापि।
उभयोभध्वनिपूर्वादिज्विज्ञेयः परो गणतः ॥१३८॥

उभयोभशब्दपूर्वेभ्योऽञ्जल्यादिशब्देभ्य इच् परो वेदितव्यः। उभावञ्जली यत्र पाने। उभयाञ्जलि॥ उभाञ्जलि पिबति। उभौ दन्तावस्मिन्खादने। उभयादन्ति। उभादन्ति खादति। उभयापाणि। उभापाणि। उभयाकर्णि। उभाकर्णि शृणोति। उभयाबाहु। उभाबाहु प्रहरति॥ अत्र निपातनादिज्लोपः। प्रत्ययलोपलक्षणेनाव्ययीभावसञ्ज्ञा। यदिह लक्षणेनानुपपन्नं तत्सर्वं निपातनात्सिद्धम्। उभयाहस्ति। उभाहस्ति। उभौ हस्तिनौ यत्र सङ्ग्रामादिविधाने तदुभयाहस्तीत्यजितदेवाचार्य्यः। क्रियाविशेषणत्वाच्चान्यत्र न भवति। द्वौ दण्डावस्यां शालायाम्। द्विदण्डा। द्विमुसला। केचिद् द्वौ दण्डौ यस्मिन्सङ्ग्रामे। उभौ कर्णावस्य प्रासादस्य। उभाकर्णीत्यादौ क्रियाया अन्यत्राप्यन्यपदार्थे प्रतिपन्नाः। स्वद्विवचनं विनाप्युभशब्दस्य वृत्तौ प्रयोगो गणपाठात् ॥१३८॥

इति द्विदण्डयादिः ॥

प्रियाकान्तामनोज्ञास्वाकल्याणीभक्तिदुर्भगाः।
सचिवावामनाक्षान्ताचपलानिचितासमाः ॥१३९॥
सुभगा दुहिता बाल्या वामाथ तनया तथा।
कुक्कुटाण्डमृगक्षीरकाकशावादयो मताः ॥१४०॥

पुंवत्कर्मधारयेत्यादिना प्रियादिषूत्तरपदेषु पुंवत्त्वं न भवति॥ कल्याणी प्रिया यस्य कल्याणीप्रियः। दर्शनीयाकान्तः। भव्यामनोज्ञः। कल्याणीस्वः। प्रियाकल्याणीकः। वाग्देवताभक्तिः। कथं दृढभक्तिः। दृढं भक्तिरस्येति नपुंसकमत्र पूर्वपदम्। भोजस्तु भक्तौ च कर्मसाधनायामित्यनेन सूत्रेण भवानीभक्तिरित्यादि भवति भावसाधनायां तु स्थिरभक्तिर्दृढभक्तिर्भवान्येत्यादि

भवतीत्याह । कल्याणीदुर्भगः । प्रियासचिवः ॥ प्रियावामनः। प्रियाक्षान्तः । प्रियारक्षान्त इत्यपि कश्चित् । प्रियाचपलः। प्रियानिचितः । दर्शनीयासमः ॥१३९॥

कल्याणीसुभगः । कल्याणीदुहितृकः । कल्याणी वाल्या यस्य । कल्याणीबाल्यः । भोजस्तु कल्याणीबालइत्याह । प्रियावामः । कल्याणीतनयः ॥

अस्वार्थे इत्येव । कल्याणप्रिया । कल्याणमनोज्ञा । इत्यादि । भद्रेश्वराचार्य्यस्तु—

किन्नु स्वा दुर्भगा कान्ता रक्षान्ता निचिता समा ।
सचिवा चपला भक्तिर्बाल्येति स्वादयो दश ॥

इति स्वादौ वेत्यनेन विकल्पेन पुंवद्भावं मन्यते ॥

इति प्रियादिः ॥

कुक्कुट्यादयोऽण्डादिषु वेत्यनेन कुक्कुट्यादयः शब्दाः स्त्रीलिङ्गा अण्डादिषूत्तरपदेषु पुंवद्वा भवन्ति। कुक्कुट्या अण्डम्। कुक्कुटाण्डम् ॥ कुक्कुट्यण्डम्। मृगक्षीरम् । मृगीक्षीरम् । काकशावः । काकीशावः । आदिशब्दस्य व्यवस्थावाचित्वात् । मयूराण्डम्। मयूर्यण्डम्। काकाण्डम्। काक्यण्डम्। मृगपदम् । मृगीपदम् । मृगीव चपला । मृगचपला । मृगीचपला ॥ हंसगद्गदा । हंसीगद्गदा । इत्यादयो भवन्ति। अयं विकल्पो भोजदेवाभिप्रायेण शाकटायनस्तु नित्यमिच्छति ॥ १४० ॥

इति कुक्कुटाण्डादिः ॥

**कोटरमिश्रकसिध्रकसारिकपुरगा गणे समाख्याताः ।**
**अञ्जनभञ्जनकिंशुकलोहितखञ्जा नलः शाल्वः ॥१४१॥**

सञ्ज्ञायां गिरिवनेऽञ्जनकोटरादेरित्यनेनैतेषां शब्दानामग्दीर्घो भवति । कोटराणां वनम् । कोटरावणम् । मिश्रकावणम् ॥ सिध्रकावणम् । सारिकावणम् । पुरगावणम् । इति कोटरादिः पञ्चको गणः ॥

अञ्जनेनोपलक्षितो गिरिः । अञ्जनागिरिः । भञ्जनस्य राज्ञो गिरिः । भञ्जनागिरिः । शाकटायनस्तु भाञ्जनागिरिरित्याह ॥ किंशुकागिरिः । लोहितवर्णो गिरिः। लोहितागिरिः । खञ्जस्य गिरिः। खञ्जागिरिः । नलस्य गिरिः । नलागिरिः ।शाल्वा नाम जनपदो राजानश्च। तेषां गिरिः। शाल्वागिरिः ॥ १४१ ॥

किंशुलकशाल्वपिङ्गलकुक्कुटयुक्तः शराहिवंशकुशाः ।
ऋषिकपिहनुमुनिधूमा वार्दः पद्मं शुचिर्मृगो वेटः ॥१४२॥

किंशुलको राजा । तस्य गिरिः । किंशुलकागिरिः ॥ किंशुलकः शिलापुष्पमिति केचित् । शल्वानां गिरिः । शल्वागिरिः । पिङ्गलागिरिः । कुगिति शब्दं कुर्वन्तोऽटन्तीति कुक्कुटाः । तेषां गिरिः । कुक्कुटागिरिः ॥

इत्यञ्जनादिः ॥

शराद्यनजिरादिबह्वचो मतावित्यनेन शरादीनामजिरादिवर्जितस्य बह्वचो मतौ सञ्ज्ञायां विषयेऽणूदीर्घो भवति । शरावती नाम नदी । अहीवती । वंशावती । कुशावती । ऋषीवती । कपीवती । हनूमान् । वसन्तकालो हनुमानिवागतः । इत्यादौ दीर्घत्वं विनापि सञ्ज्ञा प्रतीयते शब्दशक्तिस्वाभाव्यात् । हनुहनूशब्दावित्यन्ये (१) । मुनीवती । धूमावती । वार्दीवान्नाम पर्वतः । पद्मावती । शुचीवती । मृगावती । वेटावान् पर्वतः । आकृतिगणोऽयम् । तेन । भोगावती । वातावतीत्यादि ॥ १४२ ॥

इति शरादिः ॥

अजिरस्थविरौ खदिरो मलयालङ्कारचक्रवाकाश्च ।
खपुरः शशाङ्कपुलिने हिरण्यकारण्डवकरीराः ॥ १४३ ॥

अजिरवती । स्थविरवती । खदिरवती । मलयवती । अलङ्कारवती । चक्रवाकवती । खानि पृणन्ति । खपुराः पूगाः सन्त्यस्यामिति । खपुरवती । शशाङ्कवती । पुलिनवती । हिरण्यवती । कारण्डववती । करीरवान् पर्वतः(२) । चातुरर्थिको मतुः । चत्वारोऽपि गणाः सञ्ज्ञायां वेदितव्याः । कोटराणां वनं कोटरवनम् । अञ्जनस्य गिरिरञ्जनगिरिः । शरवतीतूणः ॥ १४३ ॥

इत्यजिरादिः ॥

---

(१) हनु हनू इति द्विरूपं शब्दद्वयमेकार्थमित्यन्ये । इति पा० ।

(२) अजिरवती, खदिरवती, कारण्डववती, हंसवती, पुनिलवती, चक्रवाकवती । एता अपि पुरीविशेषस्य नदीविशेषस्य सञ्ज्ञा एव । वर्द्धमानस्तु अजिरस्थविरौ० इति पठित्वा काशिकाद्यपेक्षयाऽधिकं सप्तकमूरीचकारेत्यधिकं क्वचित् ॥

पृषोदराश्वत्थनखाः पलाशकपित्थदूणाशपिशाचदूढ्याः ।
विडौजसोलूकमृगौ गभस्तिबृहस्पतिद्वापरकांदिशीकाः ॥१४४॥

पृषोदरादीनि यथोपदिष्टमित्यनेन पृषोदरादयः शब्दा अविहितलोपागमवर्णविकाराः शिष्टैः प्रयुज्यमानाः साधवो भवन्ति । पृषत(१) उदरम् । पृषोदरम् । पृषद् उदरे यस्य स पृषोदरो देवताविशेषः । पृषच्छब्दो घृतसंमिश्रदध्यादिहविष्यवृत्तिः । यद्वा । हूयमानपृषद्विधानसहचरितो ग्रन्थोऽप्यभेदोपचारात् पृषच्छब्दवाच्यः ॥ अश्वइव तिष्ठति अश्वत्थः । पिप्पलः । न खनतीति नखः । पलमश्नातीति पलाशः । कपिरिव तिष्ठतीति कपित्थः । कपयस्तिष्ठन्त्यस्मिन्निति वा कपित्थः । कपिरिव लम्बतेऽधश्च पततीति कपित्थः । कृच्छ्रेण नाश्यते निन्दितो वा नाश इति दूणाशः । दूर उत्वम् । उत्तरपदे टुत्वं च । पिशितमशित्वा चन्दतीति पिशाचः । दुष्टु ध्यायतीति दूढ्यः । वेवेष्टीति विड् व्यापकम् ओजो यस्य । विडौजाः पाकशासनः । ऊर्ध्वौ कर्णावस्येति । उलूकः ॥

मृदूकुर्वन्ति गच्छन्तो मृगास्तेन प्रकीर्त्तिताः ॥

गां बभस्ति दीपयतीति गभस्तिः । बृहतां पतिः बृहस्पतिः । तकारस्य सकारे । द्वाभ्यां कृतत्रेताभ्यां परम् । द्वौ परौ मुख्यावत्रेत्युभयकोटिस्पृक्त्वात् । द्वापर युगं संशयश्च । कां दिशं व्रजामीति कांदिशीकः (२)॥ १४४ ॥

पृषोद्वानबलीवर्ददूडाभवानमन्तराः ।
परःसहस्रदूडाशषोढातस्करषोडशाः ॥ १४५ ॥

पृषत उद्वानं शुष्कम् । पृषोद्वानम् । उत्पूर्वाद्वातेष्टनप्रत्यये । उद्वानमिति शाकटायनः । बलं वर्धयतीति बलीवर्दः । कृच्छ्रेण दभ्यते निन्दितो वा दाभः । दूडाभः । उत्वं टुत्वमनुनासिकलोपश्च । पाणिनिभोजौ तु दूडभ इत्याहतुः । वनानामन्तराणि । वनान्तराणि । वनान्तरेषु भवाः । वानमन्तरा

(१) पृषत्—उदरं यस्य । पृषतो हरिणस्योदर पृषोदरम् । पृषत उदरमिवोदर यस्येति वा विग्रहः । पृषच्छब्दो घृतमिश्रदध्यादिहविष्यवाची तदुदरे यस्य स पृषोदरो देवविशेष इति वर्द्धमानः ॥

(२) कां दिशं यातीति कां दिशीको भयद्रुतः ॥

देवाः । सहस्रात्परे परःसहस्राः । कृच्छ्रेण दाश्यते निन्दितो वा दाश इति दूडाशः । षड्भिः प्रकारैः षोढा । उत्वे टुत्वे च । तत्करोतीति तस्करः । षट् च दश च षोडश । षष उत्वे दस्य टुत्वे ॥ १४५ ॥

अवटकुलटे प्रायश्चित्तं परःशतधूर्जटी—
पुरुषमहिषावश्वत्थामा बिडालबलाहकौ ।
भ्रमरवडवासीमन्ताश्च श्मशानमनीषिते—
मुसलकितवौ प्रायश्चित्तिः सृगालवनस्पती ॥१४६॥

अवागटन्त्यस्मिन्निति अवटः । कुलान्यटतीति कुलटा । प्रायस्य पापस्य चित्तम् । प्रायश्चित्तम् । अतिचारशोधनम् । आलोचनादि । शतात्परे परःशताः । भोजस्तु परशब्दसमानार्थं परः शब्दमाह । धूर्गङ्गा जटास्वस्य । धूर्जटिः । महेश्वरः । पूः शरीरम् । तत्र शेते । पुरुषः (१)। मह्यां शेते । महिषः । अश्व इव तिष्ठति अश्वत्थामा द्रोणपुत्रः । यथा—

अश्वत्थामा हत इति किल व्याहृतं सत्यवाचा ॥

बिलं दारयतीति बिडालः । ललोपो टुत्वं रस्य लत्वं च । यथा—बिभ्युर्बिडालेक्षणभीषणाभ्यः । वारिणो वाहकः । बलाहको मेघः । यथा ममैव—

मतिमतां मधुरं कवितामृतं—ददति मन्त्रिललामबलाहके ।
विदधती निखिलार्थविवेचनं—जयति कल्पलता चिरदीधितिः ॥

भ्रमन् रौतीति भ्रमरः । अश्वस्याम्बा । वडवा । अल्लोपे डत्वमनुनासिकलोपश्च । सीम्नोऽन्तः । सीमन्तः । केशविन्यासः । शवानां शयनम् । श्मशानम् । मनसइष्टम् । मनीषितम् । यथा—मनीषितं द्यौरपि येन दुग्धा । यथा वा ममैव—

दूरादपि रिपुलक्ष्यो मनीषितं यन्त्रयन्ति सावेगाः ।
अब्धिसिवेतरभूभृन्निरुद्धगतयोऽपि कूलिन्यः ॥

---

(१) पुरुषो जीवात्मा नरो वा ॥

पुरि ब्रह्माण्डे शेते पुरुषः । अन्येषामिति दीर्घः पूरुषः । इत्थं परमेश्वरस्यापीमे नाम्नी इति । भी० श० ॥

मनस ईष्टे । मनीषी । णिनि मनसौऽन्त्याजादिलोपः । शकारस्य षकारः । स्मृत्यर्थदयीशामित्यनेन षष्ठी । इति शाकटायनः । मुहुः स्वनं लातीति मुसलम् । किं तवास्तीति कितवः । प्रायस्य चित्तिः । प्रायश्चित्तिः । अतिचारशोधनम् । असृजयालीयते । असृग्गिलति । असृगालेढीति वा । सृगालः । वनस्य पतिः । वनस्पतिः । अपुष्पो वृक्षो न्यग्रोधादिः । सर्वोऽपि हरितकायो वनस्पतिरिति केचित् ॥ १४६ ॥

आशीविषपुरोडाशषड्ढानिर्ल्वयनीस्वराः ।
हेरम्बारग्वधावाढ्यषोडहाड्वलिमन्मथाः ॥ १४७ ॥

आशवस्य विषमिति आशीविषः । आशुविषयोर्बहुव्रीहावाशुशब्दस्य आशीभावः । आशिषि दंष्ट्रायां विषमस्येति वा । तथा च । शाश्वतकोशे—दंष्ट्राशीरनिलाशिनाम् । अजयेऽपि—

आशीरिष्टस्याशंसायां दंष्ट्रायामनिलाशिनाम् ।
आशीस्तालुगता दंष्ट्रा तया विद्धो न जीवति ॥

तस्यां विषमस्य । आशीविषः । इत्येके । पुरो दाश्यतइति पुरोडाशः । पिष्टपिण्डः । यथा । पुरोडाशभुजामिष्टमिष्टं कर्त्तुमलन्तराम् ॥ षड्भिः प्रकारैः षड्ढा ॥ नितरां लूयते स्वशरीराद्बहिः क्रियते सरीसृपैरिति निर्ल्वयनी । भुजङ्गमुक्ता त्वक् । स्वयं राजन्त इति स्वराः ॥ प्रत्यूहे रम्बते शब्दायते । हेरम्बो गणपतिः । आराद् रोगान् हन्तीति आरग्वधः । आध्यायन्ति जनास्तमिति आढ्यः । घञर्थे कः । षड् दन्ता अस्य षोडन् । षोडती । वाग्वादस्यापत्यम् । अत इञि । वाड्वलिः । यूनां मनो मथ्नातीति मन्मथः ॥१४७॥

उलूखलोदूखलकुञ्जरालुग् मृणालजीमूतमयूरसिंहाः ।
शकन्धुकर्कन्धुदधित्थवृस्यो महित्थपारापतमेखलाश्च ॥१४८॥

ऊर्ध्वं खं विलं वास्यास्तीति । उलूखलम् । उदूखलम् । यत्र व्रीह्यादयः कुट्यन्ते । ऊर्ध्वं ख लातीति वा । उदूखलम् । कौ पृथिव्यां जीर्यतीति कुञ्जरः । लुप्यतेऽपनीयत इति लुक् नाम लोपः । यथा । प्रत्ययलुकां चानाम् । मृदनालीयते । मृणालः । जीवनं जलं तस्य मूतः । पुटबन्धः । जीमूतः । मह्यां रौतीति मयूरः । हिनस्तीति सिंहः । शकस्यान्धुः । शकन्धुः । कर्कस्यान्धुः ।

कर्कन्धुः—बदरी । दधि तिष्ठतीति—दधित्थः । ब्रुवन्तः सीदन्त्यस्यामिति । बृसी । मुनीनामासनम् (१) । मह्यां तिष्ठतीति महित्थः । पारे पततीति पारापतः । मेहनस्य खस्य माला । मेखला ॥ १४८ ॥

दिवः स्थाने दिवोऽचि स्याद् दिव् च दीर्घे पुनः परे ।
उकारोकारयोरुच्च पश्चातोर्धादिके तलुक् ॥ १४९ ॥

दिवः स्थाने दिवोऽचि स्यादिति । दिवाधीश्वरः । दिवाङ्गना । दिवौकसः । दीर्घेऽचि पुनर्न केवलं दिवः स्थाने दिवो भवति दिव् च । दिवीश्वरः । दिवेश्वरः । दिवूढा । दिवोढा । दिवूतिः । दिवोतिः । उकारोकारयोरुच्चेति । द्यूद्यानम् । दिवोद्यानम् । यथा—

उद्यद्यूद्यानवाप्यां बहुलतमतमः पङ्कपूरं विदार्य्य ॥ दिवोद्गतिः । द्यूद्गतिः । द्यूहा । दिवूहा । दिवोहा । ऊकारे रूपत्रयम् ॥ पश्चातोऽर्धादिके तलुक् । पश्चाच्छब्दस्यार्धादावुत्तरपदेऽन्त्यतकारस्य लुग्भवति । पश्चार्धम् । पश्चिमार्धमित्यर्थः । यथा—

पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।

पश्चानुपूर्वी । पश्चाभिमुखः । पश्चिमाभिमुखइत्यर्थः । आदिग्रहणात् ॥ कलिं विन्दति । कलविङ्कः । कृतकेन शलतीति कृकलाशः(२)। ऊरू अश्नुते । नारायणस्योरुप्रभवत्वात् । उर्वशी ॥ तथा च—

ऊरूद्भवा नरसखस्य मुनेः सुरस्त्री । यथा—

दधत्युरोजद्वयमुर्वशीतलं—भुवो गतेव स्वयमुर्वशी तलम् ।
बभौ मुखेनाप्रतिमेन काचन—श्रियाधिकां तां प्रति मेनका चन ॥

चीत्करोति खल्लं च भवति । चिखल्लः । द्वौ प्रवेशनिर्गमौ रातीति द्वारम् । इत्यादयो द्रष्टव्याः । अत्र च—

येषामुणादिशास्त्रेण व्युत्पत्तिर्न प्रकल्प्यते ।
द्वित्र्यादिपदसंपर्कात्सा तेषां स्यान्निरुक्तितः ॥ १ ॥
समासशेषभूतं स्यान्निरुक्तपदसाधनम् ।
द्वित्र्यादिपदसंपर्काल्लोपागमविकारजम् ॥ २ ॥

---

(१) बृहन्तोऽस्यां सीदन्त्युपविशन्तीति बृसी ऋषीणामासनम् । इति पा० ।
(२) कृकं शिरोग्रीवं लासयति कृकलासः । कृकिलास इत्यपि पाठः क्वचित् ॥

उणादिशास्त्रे मयूरमहिषप्रभृतीनां व्युत्पादितानामपि पुनरत्र व्युत्पादनमनेकधापि सञ्ज्ञाशब्दानां व्युत्पत्तिर्भवतीति प्रदर्शनार्थम् ॥ १४९ ॥

इति पृषोदरादिः ॥

**पारस्करो देशविशेषवर्त्ती कारस्करो राजतरौ गिरौ च ।**
**नद्यां रथस्पा प्रमितौ तु किष्कुः प्रतिष्कशः प्रष्ठसहायदूते १५०**

पारस्करादयः शब्दाः सषान्तपूर्वपदाः पारस्करादयो नाम्नीत्यनेन साधवो वेदितव्याः । देशविशेषादिष्वर्थेषु । पारं करोतीति पारस्करो देशः । पारस्करं नाम आनर्तेषु जनपदे नगरमित्येके । अन्यत्र । पारकरः । करं करोतीति करस्करः(१)। राजवृक्षो गिरिश्च । रथं पाति पिबतीति वा । रथस्पा नाम नदी । रथपाऽन्या । किं करोतीति करोतेर्डुप्रत्यये किमो मकारस्य षादेशे च । किष्कुः । प्रमाणं हस्तो वितस्तिर्वा । प्रतिकशतीति प्रतिष्कशः। अग्रेसरः सहायो दूतो वा । प्रतिगन्तर्यर्थेऽपि कश्चिन्मन्यते ।

ग्राममद्य प्रवेक्ष्यामि भव मे त्वं प्रतिष्कशः ।

अतोऽन्यत्र । प्रतिगतः कशाम् । प्रतिकशोऽश्वः ॥ १५० ॥

**स्तः प्रस्कण्वहरिश्चन्द्रावृषावाश्चर्यमद्भुते ।**
**वर्चस्केऽवस्करो ज्ञेयो रथाङ्गे स्यादपस्करः ॥१५१॥**

प्रकृष्टः कण्वः । प्रस्कण्वः । ऋषिः । हरिश्चन्द्रोऽस्येति हरिश्चन्द्रो नाम ऋषिः। कश्चिद् राजन्यप्याह। आचर्यत इति। आश्चर्य्यम्—अद्भुतम्। अन्यत्र। आचर्यं व्रतम् । अवकीर्यत इति । अवस्करः । वर्चस्कम् । अन्नमलमित्यर्थः । अन्नमलविसर्जनदेशोऽपि तत्सम्बन्धाद् अवस्करः । अन्यो यः कश्चिदवकीर्यते सोऽवकरः ॥ अपकीर्य्यत इति अपस्करो रथावयवः । अपकरोऽन्यः ॥ १५१ ॥

**कास्तीराजस्तुन्दास्कथानि नगरे गिरौ तु किष्किन्धः ।**
**मस्करिमस्करकारस्करास्तु मुनिवेणुवृक्षेषु ॥ १५२ ॥**

अल्पं तीरं कास्तीरम् । अजस्य तुन्दम् । अजस्तुन्दम् । आहृताः कथा अस्मिन्निति आस्कथं नाम नगरम् । अन्यत्र कातीरम् । अजतुन्दम् । आकथम् । किंकिं दधातीति किष्किन्धः पर्वतः । माकरणशीलः । मस्करी

(१) कारस्करोराजवृक्षो गिरिश्चेति पाठान्तरम् ।

परिव्राजकः। सह्येवमाह। मा कृषत कर्माणि शान्तिर्वः श्रेयसीति ॥ माक्रियते प्रतिषिध्यतेऽनेनेति मस्करो दण्डः। येन हस्तिनः शमं नीयन्ते दम्यन्ते स वेणुर्मस्कर इत्यन्ये। कारं करोतीति कारस्करः। वृक्षः ॥ १५२ ॥

आस्पदं स्यात्प्रतिष्ठायां क्रियाभीक्ष्ण्येऽपरस्पराः।
आयुधे किष्कुरुः प्रोक्तः स्यात्कुस्तुम्बुरुरौषधे ॥ १५३ ॥

पूजितं पदम्। आस्पदम्। अन्यत्र। आ ईषत् पदम्। आपदम्। अपरे च परे च। अपरस्पराः सार्था व्रजन्ति। सातत्येन यान्तीत्यर्थः। कस्य कुरुः। किष्कुरुः। आयुधम्। कुत्सितं तुम्बरु। कुस्तुम्बुरुः। धान्यकम्। यथाकथञ्चिद्विग्रहः। कुस्तुम्बुरोः फलानि कुस्तुम्बुरूणि ॥ १५३ ॥

कन्दरा पूश्च किष्किन्धा कृतान्नमथ शष्कुली।
गोष्पदं स्यात्प्रमाणादौ विकिरो विष्किरः खगे ॥ १५४ ॥

किंकिं दधातीति किष्किन्धा। गुहा नगरी च। शष्कुली। भक्ष्यविशेषः। गवां पदम्। गोष्पदम्। गोष्पदपूरं वृष्टो देवः। अत्र गोपदमन्यस्येयत्तां परिच्छेत्तुमुपादीयमानं प्रमाणं भवति। आदिग्रहणात् सेवितासेवित परिग्रहः। तत्र सेवितो गोष्पदो देशः। यत्र गावः पद्यन्ते स गोभिः सेवितो ग्रामसमीपादिदेश उच्यते ॥

असेविते। अगोष्पदेष्वरण्येषु विश्वासमुपजग्मिवान् ॥

विकिरति चञ्च्वा विक्षिपतीति विकिरो विष्किरश्च पक्षी। उभयोरुपादानं विकल्पितसकारप्रतिपत्त्यर्थमिति ॥ १५४ ॥

इति पारस्करादिः ॥

नभ्राण्नागनपान्नमेरुनकुला नासत्यनक्रौ तथा—
नाराचो नखनान्तरीयकयुतौ नक्षत्रनाकाविमौ ॥
नारङ्गश्च नपुंसकेन कलितः स्यान्नाचिकेतस्तथा—
नग्नो नास्तिकनापितावपि नभो ज्ञेयो नवेदा गणे ॥ १५५ ॥

नभ्राडादिषु शब्देषु नभ्राडादिषु नञ्प्रकृत्येत्यनेन नञ्प्रकृत्या तिष्ठति। न भ्राजतइति। नभ्राट्। क्विबन्तः। न अगः। नागः। न पातीति नपात्।

शत्रन्तः । न मीयतेऽसाविति नमेरुः । गणा नमेरुप्रसवावतंसाः । नास्य कुल-मस्तीति नकुलः । सत्सु साधुः । सत्यः । न असत्यः । नासत्यः । नञसत्याः । नासत्याः साधवः। केचित्तु । न असतः साधून्। नासत्यावश्विनीकुमाराविंत्याहुः । न क्रामति नक्रः । न अरमञ्चति नाराचः । यथा ममैव क्रियागुप्तके—

उद्यत्तीव्रानङ्गनाराचविद्धः—स्वप्राणेभ्यो वल्लभं त्वामदृष्ट्वा ।
वेगादेषा चक्रवाकी वराकी—तीरात्तीरे प्रातरेव प्रयाति ॥

नास्य खमस्तीति नखः । नखरी गन्धद्रव्यं च । अनन्तरेण भवतीति नान्तरीयकम् ॥ न क्षीयते न क्षरति वा । नक्षत्रम् । त्रन्यत्वम् अन्त्यलोपो वा निपातनात् ॥ नास्त्यस्मिन्नकं दुःखमिति नाकः । न अविद्यमानो विरिञ्चो यत्र वा । न अरं गच्छति स्वयमिति नारङ्गः । न स्त्री न पुमान् नपुंसकः । अतएव निपातनात् स्त्रीपुंसयोः पुंसक आदेशः । न न चिकेत्ति नाचिकेतो नाम राजा । अस्मादेव निपातनात् कि कितज्ञान इत्यस्माच् शप्रत्ययो गुण-श्च भवति । न विद्यन्ते ग्नाः स्त्रियश्छन्दांसि वा यस्य । नग्नः । नास्तीति मतिरस्य । नास्तिकः(१)। न आप्यतेऽसाविति नापितः । न बभस्ति । नभः । न वेत्ति । नवेदाः । अनुनि ॥

आकृतिगणत्वात् । न विद्यते भागोऽस्य नभागः । पद्भ्यां न गच्छति । पन्नगः । न नन्दति वधूमिति ननान्दा । तनुं न पातयति देहधर्तृत्वात् । तनूनपात् । इत्यादयो द्रष्टव्याः । अयं च गणश्चन्द्रदुर्गाद्यभिप्रायेण ॥१५५॥

इति नभ्राडादिः ॥

**पक्षज्योतिर्जनपदपत्नीकरमानबन्धुगन्धाः स्युः ।**
**देशो रात्रिः पिण्डो नाभिः कुक्षिस्तथा वेणी ॥१५६॥**

समानस्य पक्षादिष्वित्यनेन समानस्य सभावो भवति । पक्षस्य समानः। पक्षोऽस्येति वा । सपक्षः । सज्योतिः । सजनपदः । समानः पतिरस्याः । सपत्नी । सकरः समानं मानं यस्य समानः सबन्धुः ॥

सागन्ध्यं दधदपि कामसङ्गनानाम् ॥

सदेशः । सरात्रिः । सपिण्डः । सनाभिः ।

भ्रूयुग्मस्य सनाभिमन्मथधनुर्ज्यौर्वलासितस्याञ्चलः ॥

(१) नास्ति परलोकमतिरस्येति पाठान्तरम् ।

सकुक्षिः । सवेणी । कश्चिल्लोहितशब्दमप्यधीते । तीर्थशब्दस्तु न पठितो मतान्तरस्याभ्युपगतत्वात् ॥१५६॥ इति पक्षादिः ॥

**रूपं वर्णो नामस्थाने जातीयधर्मवचनानि ।**
**गोत्रं वयोऽपि लक्ष्यं चन्द्रादिमते तु रूपादौ ॥१५७॥**

रूपादिषूत्तरपदेषु रूपादौ वेत्यनेन समानस्य सभावो वा भवति ॥ समानं रूपं सरूपम् । समानं रूपं यस्य वा । सरूपः । समानरूपः । एवं सवर्णः । समानवर्णः । सनाम । सनामा । सस्थानम् । सस्थानः । समाना जातिरस्येति जातेरीय इतीयप्रत्यये । सजातीयः । समानजातीयः । सधर्मा । सधर्मः । समानधर्मः । समानधर्मा ।

उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा ।
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥

सवचनम् । सवचनः ॥ सगोत्रम् । सगोत्रः ॥ सवयः । सवयाः । आदिग्रहणाद् भोजादेः परिग्रहः । शाकटायनवामनाचार्यौ तु सभावं नित्यं सामान्येनाहतुः ॥ १५७ ॥ इति रूपादिः ॥

**सुषामदुःषामनिषेधदुष्ठवो दुःषन्धिदुःषेधसुषेधसुष्ठवः ।**
**नीषेचिकादुन्दुभिषेचनान्तिषन्निःषामनिःषन्धिसुषन्ध्यपष्ठवः॥१५८॥**

सुषामादीनां प्राग्वत् ष इत्यनेन सुषामादीनां सकारस्य षत्वं भवति । शोभनं साम प्रियवचनं यस्याः । सा सुषाम्णी यथा—भट्टिकाव्ये ।

सुषाम्णीं सर्वतेजः सुतन्वीं ज्योतिष्टमां शुभाम् ।
निष्टपन्तीमिवात्मानं ज्योतिःसात्कुर्वतीं वनम् ॥

शोभनं साम । सुषाम । शोभनं सामास्येति वा सुषामा । ब्राह्मणः सौम्यो वा । दुष्टं साम । दुःषाम । दुष्टं सामाऽस्येति वा । दुःषामा । नितरां सेधः । निषेधः । दुष्ठु निन्दितम् । सुञ्सूसास्तुस्तुभस्थासेनसेधतिसिचसञ्जस्वञ्जामित्यनेनैव दुष्ठुशब्दस्य षत्वे सिद्धे इह पाठः षत्वस्यानित्यत्वज्ञापनार्थः । तेन सुस्थितम् । दुःस्थितमिति सिद्धम् । यदा तु दुःशब्दो निन्दायामनुपसर्गस्तदा विधानार्थम् । दुष्टः सन्धिः । दुःषन्धिः । दुष्टः सन्धिरस्येति वा । दुःषन्धिः । निन्दितः सेधः । दुष्टः सेधोऽस्येति वा । दुःषेधः । शोभनः सेधः शोभनः सेधोऽस्येति वा । सुषेधः । सुष्ठु शोभनम् । सिञ्चतीति सेचिका ।

नावः सेचिका । नौषेचिका । काचिस्स्त्री । वामनस्तु । नावं स्यति । नौषा । नौषिकेत्याह (१)॥ अपरे तु नौषेचनमिति टनान्तं पठन्ति । षिचक्षरणे इत्यस्य टनप्रत्यये । सेचनम् । दुन्दुभ्याः सेचन दुन्दुभिसेचनम् । षिवुतन्तुसन्ताने । केवृषेवृइत्यस्य वा टनप्रत्यये । सेवनम् । दुन्दुभेः सेवनं दुन्दुभिषेवणमिति शाकटायनः । अन्तिके सीदति । अन्तिषत् । कादेर्बहुलमित्यनेन कलोपः । साम्नो निर्गतः । निर्गत सामास्येति वा । निःषामा । निर्गतः सन्धिः । निर्गतः सन्धिरस्येति वा । निःषन्धिः । शोभनः सन्धिः । शोभनः सन्धिरस्येति वा । सुषन्धिः । यथा त्रिभुवनमाणिक्यचरिते—

सुवृत्तमप्युज्ज्वलवर्णरूपं सुषन्धिमूरुद्वयसर्गबन्धम् ।
विधाय तस्याः स कविः पुराणो रुरोध वाचः प्रसरं कवीनाम् ॥

अपतिष्ठतीति । अपष्ठुरङ्कुशः प्रतिकूलं च ॥१५८॥

**परमेष्ठी निःषेधः सव्येष्ठातामतश्च सव्येष्ठा ।**
**सुषमा सुषीमदिविषत्प्रतिष्णिकागौरिषक्थाश्च ॥१५९॥**

परमे स्थाने तिष्ठतीति परमेष्ठी । पितामहः । निर्गतः सेधः निर्गतः सेधोऽस्येति वा । निःषेधः । सव्ये स्थाने तिष्ठतीति सव्येष्ठाता । सारथिः । सव्ये तिष्ठतीति सव्येष्ठा । सव्यादेश्चोणादिरूढात्परेत्यनेन ऋप्रत्ययः । कश्चिद् अकारान्तमपि दर्शयति । सुष्ठु समा । सुषमा । प्रकृष्टा कान्तिः । शोभना सीमा यस्य । सुषीमो नागः । दिवि सीदन्ति । दिविषदो देवाः । हलतः सप्तम्या इत्यनेन सप्तम्या अलुक् । प्रतिस्नान्त्यस्यामिति प्रतिष्णिका । द्रोणी । गौर्याःसक्थीव सक्थ्यस्येति गौरिषक्थः(२)। ङ्याप्त्वे च ह्रस्वश्च बहुलमित्यनेन ह्रस्वत्वे कस्यचिदिदं नाम ॥

आकृतिगणोऽयम् । तेन जलाषाहम् । भीरुष्ठानम् । अग्निष्टुत् । इत्यादयोऽपि भवन्ति ॥ १५९ ॥

इति सुषामादिः ॥

---

(१) नावः सेचनं नौषेचनम् । वर्द्धमानस्तु नौषेचिका पपाठ । अन्ये पुनर्नावं स्यतीति नौषिका क्षेपणीदण्डइत्याहुः ।

(२) गौरपक्थः । कस्यचिन्मुनेः सञ्ज्ञेवेति ।

गिरेर्नदी नखो नद्धो नितम्बो वक्रतो नदी ।
नितम्बस्तूर्य्यमाणस्तु माषो नार्गयणावपि ॥१६०॥

गिरिनद्यादीनामित्यनेन गिरिनद्यादीनामुत्तरपदनकारस्य णत्वं वा भवति । गिरेर्नदी । गिरिनदी । गिरिणदी । एवं गिरिणखः । गिरिनखः । गिरिणा गिरौ वा नद्धः । गिरिणद्धः । गिरिनद्धः । गिरिनितम्बः । गिरिणितम्बः । वक्रनदी । वक्रणदी । वक्रो नितम्बो यस्याः । वक्रनितम्बा । वक्रणितम्बा । तूर्यस्य मानमिव मानमस्य । तूर्यमाणः । तूर्यमानः । माषेणोनः । माषोनः । माषोणः । ऋचामयनम् । ऋगयनम् । ऋगयनस्य बोद्धाऽध्येता वा वेत्त्यधीत इत्यनेनाणि । अथवा । ऋगयनस्य व्याख्यानं तत्र भवो वा । ऋगयनेभ्योऽणित्यणि । आर्गयणम् । आर्गयनम् । गिरिनद्यादयः प्रयोगतोऽनुसर्त्तव्याः ॥ १६० ॥ इति गिरिनद्यादिः ॥

क्षुभ्नातृप्नू नन्दननर्त्तननृनमननिवासनृत्तानि ।
नन्दी निवेशनगरे गहनाग्नी सर्वनामनटौ ॥१६१॥

क्षुभ्नादीनां शब्दानां नकारस्य न क्षुभ्नादेरित्यनेन णत्वं न भवति । क्षुभ्नाति । क्षुभ्नीतः । क्षुभ्नन्ति । क्षुभ्नन् । क्षुभ्नानः । क्षुभ्नता । यथा । भट्टिकाव्ये—

रोषभीममुखेनैवं क्षुभ्नतोक्ते प्लवंगमः ।
प्रोचे सानुनयं वाक्यं रावणं स्वार्थसिद्धये ॥

क्षुभ्नता कलुषीभवतेत्यर्थः । तृप्नोति । तृप्नुतः । तृप्नुवन्ति । तृप्नु । इत्यतएव गणपाठाच्छ्नुः । हरेर्नन्दनम् । हरिनन्दनम् । इन्द्रोद्यानम् । परितो नर्त्तनम् । परिनर्त्तनम् । नृत्तप्रयोगः । नुर्नमनम् । नृनमनम् । नृनमनो नाम कश्चिद्यस्य नार्नमनिः पुत्रः । स्वरूपपदमेतत् । केचित्तु नॄन्नमयति । नृनम इत्युदाहरन्ति । शराणां निवासः । शरनिवासो देशः । परितो नृत्तम् । परिनृत्तम् । कुमारान्नन्दयतीत्येवं शीलः । कुमारनन्दी । शराणां निवेशः । शरनिवेशः । तूणीरः । हरिनगरम् । परितो गहनम् परिगहनम् । शबराणामग्निः । शबराग्निः । हरिः शक्रस्तस्याग्निः । हर्यग्निः । विद्युत् । सर्वेषां नाम । सर्वनाम । सूत्रप्रधानो नटः । सूत्रनटः । परिनटो नाम कश्चिद्विप्रः ॥ १६१ ॥

ज्ञेयौ निवेशनानूपौ नदनो नरवाहनः ।
स्वर्भानुर्नंदनद्यौ च क्षुभ्नादौ स्यान्नृतेर्यङि ॥१६२॥

शराणां निवेशनम् । शरनिवेशनम् । शरधिः । अनूपान्निष्क्रान्तः । निरनूपः । दर्भानूपं नाम स्थानम् । भेर्या नदनमिव नदनं शब्दनमस्य । भेरी नदनो नाम कश्चित् । नरो वाहनमस्य नरवाहनः । वाहणं वाह्यादित्यनेन नरस्यावाह्यासत्वं नास्ति । प्राक्स्थाद्यन्तेऽपूनामित्यनेन न प्राप्तिः । स्वर्भानुः सैंहिकेयः । ऋयनगन्यादेरित्यनेन णत्वप्राप्तिः । केचिद् अन्तःपूर्वपदात्सञ्ज्ञायामित्यनेन णत्वमिच्छन्ति। चारवो नदा यस्मिन् ग्रामे नगरे वा स चारुनदः । सुराणां नदी । सुरनदी । नृतेर्नकारस्य यङि परे णत्वं न भवति । नरीनृत्यते । नर्नर्त्ति । नरिनर्त्ति । नरीनर्त्ति । नर्नृतीति । यङीति किम् । हरिरिव नृत्यतीति । हरिणर्त्ती नाम कश्चित् ॥

अग्न्यादिक्षुभ्नाद्योरेकत्वं प्रतिपन्नाः । सामान्येन विशेषाभावात् ॥ आकृतिगणोऽयम् । तेन चतुर्हायनं कर्मैत्यादयो द्रष्टव्याः ॥ १६२ ॥

इति क्षुभ्नादिः ॥

इति श्रीगोविन्दसूरिशिष्यपण्डितश्रीवर्द्धमानविरचितस्वीयगणरत्नमहोदधिग्रन्थवृत्तौ समासप्रक्रियानिर्णयो नाम द्वितीयोऽध्यायः समाप्तः ॥



# अथ तृतीयोऽध्यायः ॥

ब्रह्मा कलापितैतलिशिलालिलाङ्गलिशिखण्डिजाजलिनः ।
सूकरसद्मा कुथुमी सुपर्वणा पीठसर्पी च ॥१६३॥

ब्रह्मादीनामित्यनेन ब्रह्मन्नित्येवमादीनामेवाणि परेऽन्त्याजादेर्लुग्भवति । ब्रह्मणोऽपत्यम् । ब्राह्मो नारदः । ब्रह्मण इदम् । ब्राह्ममस्त्रम् । ब्राह्मो मन्त्रः । ब्राह्मोषधिः । शाकटायनादयस्तु जातावभिधेयायामनपत्य एवाण्यन्त्याजादेर्लुचमिच्छन्ति नापत्ये । तेन ब्रह्मणोऽपत्यम् । ब्राह्मणः । कलापिना-प्रोक्तमधीयानाः । कालापाः । तैतली । आचार्य्यः । तत्कृतो ग्रन्थोपि तच्छब्देनोच्यते । तमधीयते तैतलाः । एवं लाङ्गलाः । जाजलाः । शिलालिनइमे । शैलालाः । एवं शैखण्डाः । सौकरसद्माः । कौथुमाः । सौपर्वाः । पैठसर्पाः ॥ चशब्दस्यानुक्तसमुच्चयार्थत्वात् तेन सा ब्रह्मचाराः । दाण्डम् । चाक्रम् । इत्यादयो भवन्ति ॥१६३॥ इति ब्रह्मादिः ॥

अनुशतिकपरस्त्रीसर्वलोकासिहत्याः—
कुरुकतशातकुम्भागारवेणवस्यहत्याः ।
अनुरहदनुहोडावंस्यहेतीहलोकाव्-
अभिगमपरलोकौ सर्वभूमिप्रयोगौ ॥१६४॥

परस्य चानुशतिकादीनामित्यनेनानुशतिकादीनामेव शब्दानां परपदस्य पूर्वपदस्याचामादेरचः स्थानेऽणादौ ञिणति पर आरैज् भवति । शतेन क्रीतः । शतिकः । अनुगतः शतिकेन । अनुशतिकः । तस्येदम् । आनुशातिकम् । परस्य स्त्री । परस्त्री । तस्या अपत्यम् । पारस्त्रैणेयः । सर्वलोके विदितः । सार्वलौकिकः । यथा—भट्टिकाव्ये ।

भवन्तं कार्त्तवीर्यो यो हीनसन्धिमचीकरत् ।
जिगाय तस्य हन्तारं स रामः सार्वलौकिकम् ॥

असिहत्यायां भवम् । आसिहात्यम् । कुरुकतस्यापत्यम् । कौरुकात्यः । शतकुम्भो नाम पर्वतः । तत्र भवं शातकौम्भं सुवर्णम् । केचिच्चादृष्टव्याकरणा लक्ष्यमेव केवलमनुसरन्तः शातकुम्भमित्याहुः । अतएव भोजः शतकुम्भस्य

विकारः शातकौम्भमित्याह । अगारवेणूनामिदम् । आगारवैणवम् । वामनस्त्वङ्गारवेणोरपत्यम् । आङ्गारवैणवमित्याह (१) । अधेनुशब्दमपि केचित्पठन्ति (२) । अस्यहत्याशब्दोऽस्मिन्नस्तीति विमुक्तादित्वादण् । आस्यहात्यः । भोजस्त्वस्यहत्यशब्दं पठति । असिहत्य इत्यन्यः ॥ अनुरहतोऽपत्यम् । आनुराहतिः । अनुहोडः शकटविशेषः । तेन चरति । आनुहोडिकः । अस्यहेतिः प्रहरणमस्य । आस्यहेतिकः । गणपाठसामर्थ्यात्पदसमुदायादपि ठण् विभक्तेश्चालुक् । असहेत्वेति केचित् । इह लोके भवम् । ऐहलौकिकम् । अयं लोकः, इहलोकः । प्रथमान्तादपि हप्रत्ययोऽस्मादेव गणपाठाद्व्यधिकरणसमासो वा । अभिगममर्हति । आभिगामिकः । परलोके भवम् । पारलौकिकम् । सर्वभूम्यां विदितः सार्वभौमः । प्रयोगमर्हति प्रयोगे भवं वा । प्रायौगिकम् । वामनस्तु संयोगं प्रायौगिकमित्याह ॥ १६४ ॥

सुखशयनसर्वपुरुषावनुसंवत्सरयुतानुसंवरणम् ।
सूत्रनडचतुर्विद्याकुरुपञ्चालाधिदेवाश्च ॥१६५॥

सुखशयनं पृच्छन्ति । सौखशायनिकाः । यथा—

भृग्वादीननुगृह्णन्तं सौखशायनिकानृषीन् ।

सर्वपुरुषाणामिदम् । सार्वपौरुषम् । अनुसंवत्सरं दीयते । आनुसांवत्सरिकम् । कालात्कार्यं च भववदित्यतिदेशात् । कथाकालाट्ठञिति ठञ् । अनुसंवरणेन दीयते आनुसांवरणम् । व्युष्टादित्वादण् । सूत्रप्रधानो नडः सूत्रनडः । तस्यापत्यं सौत्रनाडिः । कश्चित् सूत्रनट इत्याह । चतस्र एव विद्याः । चातुर्वैद्यम् । कुरवश्च पञ्चालाश्च तेषु भवः । कौरुपाञ्चालः । बहुत्व इत्यनेनाकञ् न भवति तत्र देशव्यक्तेर्विवक्षितत्वात् । अत्र तु देशसमुदायः । देवमधिकृत्य भवम् । आधिदैविकं दुःखम् ॥१६५॥

बध्योगोदकशुद्धौ पुष्करसत्सङ्क्रमाधिभूताः स्युः ।
प्रतिभूरजातशत्रुः परिमण्डलराजपुरुषौ च ॥ १६६ ॥

(१) अङ्गारवेणुर्वंशजातिविशेषः । आङ्गारवैणवं पात्रविशेषः ।

(२) केचित्तु—अगारधेनुशब्दमत्राधीयाना अगारधेनोरपत्यमागारधैनवो यस्य इत्याहुः ।

(३) वध्योगस्य ऋषेरपत्यं विदादित्वादञि । वाध्यौगः । उदकशुद्धस्यापत्यम् । औदकशौद्धिः । पुष्करसदोऽपत्यम् । पौष्करसादिः। सङ्क्रममर्हन्ति । साङ्क्रामिकाः ।

तिलाश्चम्पकसम्पर्कात्प्राप्नुवन्त्यधिवासताम् ।

रसो न भक्ष्यस्तद्गन्धः सर्वे साङ्क्रामिका गुणाः ॥

यथा चानर्घ्यराघवे । कश्चित्साङ्क्रामिकोऽपि विशेषो नैसर्गिकमतिशेते । अधिभूते भवम् । आधिभौतिकं सुखम् । प्रतिभुवो भावः कर्म वा । प्रातिभाव्यम् । अजातशत्रोरियम् । आजातशात्रवी । यथा—

उपेयिवांसि कर्त्तारः पुरमाजातशात्रवीम् ।

परिमण्डलस्य भावः कर्म वा । पारिमाण्डल्यम् । राजपुरुषस्य भावः कर्म वा । राजपौरुष्यम् ॥१६६॥

एषोऽपि स्यात्सर्ववेदः सहण्यो द्वारस्वः श्वोव्यलकसस्वस्तयः स्वः । स्वग्रामश्वस्वादुमृद्द्वारपालाः श्वादंष्ट्रा स्वाध्याययुक्तः स्वरश्च ॥१६७॥

एषोऽपीति न केवलं प्रतिभूपरिमण्डलराजपुरुषशब्दा ण्यडन्ता एवात्र गणे द्रष्टव्याः । सर्ववेदशब्दोऽपीति । सहण्य इति ण्यटा ण्येन च सह वर्त्तत इत्यर्थः । सर्ववेदाएव । सार्ववैद्यम् । ण्यइति किम् । प्रातिभवम् । पारिमण्डलम्। राजपुरुषायणिः । सार्ववेदिकम्। आकृतिगणश्चायम्। तेन वैतुलीक्यं मानैपादिरित्यादयो भवन्ति । इत्यनुशतिकादिः ॥

द्वार इति द्वारादेरित्यनेन द्वारादीनां शब्दानां यकारवकाराभ्यामुत्तरस्याचामादेरचः स्थान आरिज् न भवति। तयोस्तु य्वोष्टैज् भवति ॥ द्वारे नियुक्तः । दौवारिकः । स्वर्भवः । सौवः । श्वो भवम् । शौवस्तिकम् । व्यलकसेऽत्यन्ताधमभक्ष्ये भवः । वैयलकसो व्याधिः । यद्वा । व्यलकसो नाम देशो ग्रामादिर्वा । स्वस्तीत्याह । सौवस्तिकः । स्वस्येदम् । सौवम् । स्वग्रामे भवः । सौवग्रामिकः । शुनो विकारः । शौवनं मांसम् । शौवः सङ्कोचः ।

---

(३) उं शंभुं गच्छत्यभियाति—उगः कन्दर्पः । वध्यो निग्राह्य उगो येन स वध्योगो नामर्षिरित्यधिकं क्वचित् ॥

स्वादुमृदइदम्। सौवादुमृदम्। कच्छादिदर्शनादण्। स्वाद्वी चासौ मृच्च सास्मिन्देशेऽस्तीति। सौवादुमृदो देशः। पाणिन्यादयस्तु सौवादुमृदवमित्याहुः। द्वारपालस्यापत्यम्। दौवारपालिः। केचिद् द्वारपालशब्दं रेवत्यादिष्वधीयाना दौवारपालिक इत्युदाहरन्ति। श्वादंष्ट्रायां भवः। शौवादंष्ट्रो मणिः। शुनोदन्तादाविति दीर्घत्वम्। स्वाध्यायेन चरति। सौवाध्यायिकः। स्वरमधिकृत्य कृतो ग्रन्थः। सौवरः। द्वारपालादीनामुपादानं सुखार्थम्। यतो द्वारादेः केवलस्य तदादेश्च परिग्रहः। आकृतिगणोऽयम्। तेन स्फ्यो यज्ञायुधं तेन कृतः। स्फैयकृतो नामर्षिः। स्फ्यकृदित्यपि सङ्गृहीतः॥ १६७॥

इति द्वारादिः॥

स्वागतस्वध्वरव्यङ्गा व्यवहारो व्यडस्तथा।
व्यायामस्वपतिस्वङ्गस्वजनाश्चात्र कीर्त्तिताः॥ १६८॥

पदान्तय्वोः स्वागतादेष्टैच इत्यनेन स्वागतादिशब्दानां टैजागमो न भवति॥ स्वागतमित्याह। स्वागतिकः। शोभनोऽध्वरः स्वध्वरः। स्वध्वरेण चरति। स्वाध्वरिकः। व्यक्तान्यङ्गानि यस्यासौ व्यङ्गः। व्यङ्गस्यापत्यं व्याङ्गिः। व्यवहारेण चरति। व्यावहारिकः। व्यडो नामर्षिः। तस्यापत्यं व्याडिः। व्यायामः प्रयोजनमस्य व्यायामिकः। स्वपतौ साधुः। स्वापतेयः। स्वङ्गस्यापत्यं स्वाङ्गिः। स्वजनाः प्रयोजनमस्य। स्वाजनिकः। येषां टैजागमो न दृश्यते तेऽत्र द्रष्टव्याः॥ १६८॥ इति स्वागतादिः॥

पैलोदश्वी राहवी रावणिश्च दैवस्थानी राणिराहक्षिती च।
औदभृज्जिः सात्यकिश्चौदमेघिः सात्यंकामिः पैङ्गलोदायनिश्च १६९

पैलाद्यविप्रतौल्वल्यादिरित्यनेन पैलादेर्विहितस्यापत्यप्रत्ययस्य श्लुग् भवति। पीलाया अपत्यं पैलः। पीलामण्डूकाद्वेत्यण्। पैलस्यापत्यमिति द्रुघोऽण इति फिञ् तस्य श्लुक्। पैलः पिता। पैलः पुत्रः। उदञ्चोऽपत्यम्। बाह्वादित्वादिञ्। औदञ्चिः पिता। औदञ्चिः पुत्रः। राहोरत्यम्। राहविः पिता। राहविः पुत्रः। रवणस्यापत्यम्। रावणिः पिता। रावणिः पुत्रः। देवस्थानस्यापत्यम्। दैवस्थानिः पिता। दैवस्थानिः पुत्रः। रणस्यापत्यं राणिः पिता। राणिः पुत्रः। रहेण क्षितो हिंसितो रहक्षितः। तस्यापत्यम्।

राहक्षितिः पिता । राहक्षितिः पुत्रः । उदके भृज्जतीति । मूलविभुजादित्वात्के । उदभृज्जः । तस्यापत्यम् । औदभृज्जिः पिता । औदभृज्जिः पुत्रः । सत्यएव सत्यकः । तस्यापत्यं सात्यकिः पिता । सात्यकिः पुत्रः । उदमेघस्यापत्यम्–औदमेघिः पिता । औदमेघिः पुत्रः । सत्ये कामोऽस्य सत्यंकामः । अतएव निपातनान्मुक् । सत्यमिति निपातो वा शपथपर्यायः । तस्यापत्यं सात्यंकामिः पिता । सात्यंकामिः पुत्रः । पिङ्गलोदायनस्यापत्यं पैङ्गलोदायनिः पिता । पैङ्गलोदायनिः पुत्रः । शाकटायनस्तु पैङ्गलोदयनिरित्याह ॥ १६९ ॥

शालङ्क्यौदकशुद्धी भौलिङ्ग्यौदव्रजी तथौदन्यिः ।
औद्वाहमानियुक्तौदमज्जिरपि चौज्जिहानिः स्यात् ॥१७०॥

शलङ्कोरपत्यम् । शालङ्किः पिता । शालङ्किः पुत्रः । उदकशुद्धस्यापत्यम् । औदकशुद्धिः पिता । औदकशुद्धिः पुत्रः । औदशुद्धिरिति भोजः । भूलिङ्गस्यापत्यम् । भौलिङ्गिः पिता । भौलिङ्गिः पुत्रः । उदव्रजस्यापत्यम् । औदव्रजिः पिता । औदव्रजिः पुत्रः । उदन्यस्यापत्यम् । औदन्यिः पिता । औदन्यिः पुत्रः । तिकादिषु पठ्यमानस्याप्यस्यातएव पाठात् फिञ् विज्ञायते । तेन रूपद्वयम् । औदन्यिः । औदन्यायनिः । उद्वाहमानस्यापत्यम् । औद्वाहमानिः पिता । औद्वाहमानिः पुत्रः । उदमज्जस्यापत्यम् औदमज्जिः पिता । औदमज्जिः पुत्रः । उज्जिहानस्यापत्यम् । औज्जिहानिः पिता । औज्जिहानिः पुत्रः । कश्चिद् औज्जहानिरिति मन्यते । एभ्य इञन्तेभ्यः फकः श्लुक् ॥ १७० ॥ इति पैलादिः ॥

तौल्वलिवैरकिधारणिपौष्पि बैल्वकिबान्धकिरावणिवैङ्कि ।
आसुरिनैमिषिनैवकियुक्तं दैवतिवार्कलिवैहतिभिश्च ॥ १७१ ॥

तौल्वल्यादेः पर्युदासादपत्यस्यापत्यादित्यनेन प्राप्ता श्लुग् न भवति । तुल्वलो नामर्षिः । तस्यापत्यं तौल्वलिः । तदपत्यं तौल्वलायनः । तैल्वलिरित्यन्यः । वीरकस्यापत्यम् । वैरकिः पिता । वैरकायणः पुत्रः । वैराकिरिति शाकटायनः । धरणस्यापत्यम् । धारणिः पिता । धारणायनः पुत्रः । पुष्पो नाम कश्चित् । तस्यापत्यम् । पौष्पिः पिता । पौष्पायणः पुत्रः । बिल्वकस्यापत्यम् । बैल्वकिः पिता । बैल्वकायनः पुत्रः । बन्धकस्यापत्यम् ।

बान्धकिः पिता । बान्धकायनः पुत्रः । रवणस्यापत्यम् । रावणिः पिता । रावणायनः पुत्रः । शाकटायनस्तु रावणिरित्याह । विङ्कस्यापत्यम् । वैङ्किः पिता । वैङ्कायनः पुत्रः । न सुरोऽसुरः । तस्यापत्यम् । आसुरिः पिता । आसुरायणः पुत्रः । निमिषस्यापत्यम् । नैमिषिःपिता । नैमिषायणः पुत्रः । नैमिशिरिति शाकटायनः । निवकस्यापत्यम् । नैवकिः पिता । नैवकायनः पुत्रः । देवतस्यापत्यम् । दैवतिः पिता । दैवतायनः पुत्रः । दैवोतिरिति शाकटायनः । वृकलाया अपत्यम् । वार्कलिः पिता । वार्कलायनः पुत्रः । दोधकं छन्दः । भौतु भगौगिति दोधकमेतत् ॥ १७१ ॥

पौष्करसादिवैकर्ण्याहिंसिकारेणुपालयः ।
आसिबन्धकिवैशीतिदैवयज्ञासिनासयः ॥ १७२ ॥

पुष्करसदोऽपत्यम् । पौष्करसादिः पिता । पौष्करसादायनः पुत्रः । विभूषितौ कर्णौ यस्य । विकर्णः । तस्यापत्यम् । वैकर्णिः पिता । वैकर्णायनः पुत्रः । न विद्यते हिंसाऽस्य । अहिंसः । तस्यापत्यम् । आहिंसिः पिता । आहिंसायनः पुत्रः । करेणुं पालयतीति करेणुपालः । तस्यापत्यम् । कारेणुपालिः पिता । कारेणुपालायनः पुत्रः । असिना युक्तो बन्धः । असिबन्धः । असिबन्ध एवासिबन्धकः । तस्यापत्यम् । आसिबन्धकिः पिता । आसिबन्धकायनः पुत्रः । अस्यतीति । असः । तस्यापत्यम् । आसिः पिता । आसायनः पुत्रः । बध्यतेस्म बद्धः । बद्धएव बद्धकः । तस्यापत्यम् । बाद्धकिः पिता । बाद्धकायनः पुत्र इति शाकटायनः । विशीतस्यापत्यम् । वैशीतिः पिता । वैशीतायनः पुत्रः । देवानां यज्ञो देवयज्ञः । तस्यापत्यम् । दैवयज्ञिः पिता । दैवयज्ञायनः पुत्रः । असिरिव नासाऽस्येति असिनासः । तस्यापत्यम् । आसिनासिः पिता । आसिनासायनः पुत्रः ॥ १७२ ॥

दालीपिरानुतिश्च प्रादोहन्यानुराहती चापि ।
चाफट्टकिनैमिश्रिप्राडाहातिदैवमतयोऽपि ॥ १७३ ॥

दिलीपस्यापत्यम् । दालीपिः पिता । दालीपायनः पुत्रः । निपातनादात्वम् । अपरे दलीप इति प्रकृत्यन्तरमाहुः । चन्द्रादयस्तु दैलीपिरित्याहुः । आनुतिः पिता । आनुतायनः पुत्रः । प्रदोहनस्यापत्यम् । प्रादोहनिः पिता ।

प्रादोहनायनः पुत्रः । अनुरहतोऽपत्यम् आनुराहतिः पिता । आनुराहतायनः पुत्रः। चफट्टकशब्दोऽनुकरणम्। तदुच्चारणात्पुरुषोपि चफट्टकः। तस्यापत्यम्। चाफट्टकिः पिता। चाफट्टकायनः पुत्रः। कुर्वादावस्य क्षत्रियस्य ग्रहणम्। इह तु ब्राह्मणवाचिनस्तेनेञ् सिद्धः। निश्चयेन मिश्रो निमिश्रः। तस्यापत्यम् । नैमिश्रिः पिता । नैमिश्रायणः पुत्रः । पृच्छत्याहन्ति च । प्राडाहतः । तस्यापत्यम्। प्राडाहतिः पिता। प्राडाहतायनः पुत्रः। प्राटाहतिरित्यपि वामनः। देवमतस्यापत्यम्। दैवमतिः पिता। दैवमतायनःपुत्रः ॥१७३॥

इति तौल्वल्यादिः ॥

प्रज्ञश्रोत्रपिशाचचोरमरुतो रक्षश्चरित्रोशिजः—
प्रत्यक्षासुरशत्रुसंतपनसत्साधारणानुष्टुभः ।
चण्डालाशनिगोरजेतृजगतीसत्वद्(१)हितादेवता—
श्चक्षुर्व्याकृतबन्धुयोधमधवो विद्यामनोजुह्वतः ॥ १७४ ॥

प्रज्ञादेरणित्यनेन प्रज्ञादेः शब्दगणादण् वा भवति स्वार्थे । प्रज्ञएव प्राज्ञः ॥ प्राज्ञी स्त्री। प्रज्ञाज्योत्स्नेत्यादिना णप्रत्यये सिद्धम्। प्राज्ञः। प्राज्ञी तु न सिध्यति । णप्रत्यये हि प्राज्ञा स्यात् । अर्थभेदश्च । तथा च । वृद्धा पलिक्नी प्राज्ञी तु प्रज्ञा प्राज्ञा तु धीमती ॥ श्रोत्रमेव श्रौत्रम् ।

तं कूजत्क्रौञ्चसंहृष्यच्चाक्षुषश्रौत्रमानसः ॥

वामनाद्यास्तु श्रोत्रं शरीरं चेदित्यर्थनियममाहुः । पिशाच एव पैशाचः । एवं चौरः । मारुतो देवो वायुश्च । राक्षसः । चरित्रमेव चारित्रम् । उशिक् कान्तः स एव । औशिजः । यथा—

चीर्णसांतपनैर्वैद्यवैदतैर्जोहुतव्रतम् ।
कार्ष्णाजिनौशिजैर्विप्रैः प्रात्यक्षमिव दैवतम् ॥

प्रत्यक्षा एव प्रात्यक्षाः पदार्थाः। असुर एव आसुरः। शत्रुरेव शात्रवः। सन्तपनमेव सान्तपनम् ॥ सन्नेव सान्तः । अण् प्रत्ययसन्नियोगेन निपातनान्नुगागमः । साधारणी साधारणा वा भूमिः । अनुष्टुबेव आनुष्टुभम् ॥ केचिद् आनुष्टुभादीनां छन्दो नाम्नां पुंलिङ्गतामाहुः। चण्डम्—उग्रकर्म अलति पर्याप्नोति । चण्डालः । स एव चाण्डालः । तथा च—

---

(१) शश्वदिति पा० ।

चण्डालप्लवमातङ्गदिवाकीर्त्तिजनङ्गमाः ।

निषादश्वपचावन्तेवासिचाण्डालपुक्कसाः ॥

अशनिरेव आशनः । वज्रम् । गौरएव गौरः । सितः पीतोऽरुणश्च वर्णः । जेतेव । जैत्रं धनुः । जैत्री शरश्रेणिः । जगत्येव जागतम् ॥ सत्वानेव सात्वतः (१)। चन्द्रस्तु सत्वन्निति नान्तं कृतवलोप पठन् सत्वानेव सात्वन इत्याह । द्वयोर्भावो द्विता । द्वितैव द्वैतम् ॥ यथा—

निदानं निर्द्वैतं प्रियजनसदृक्षं व्यवसितिः ॥

देवतैव दैवतम् । चक्षुरेव चाचक्षुम् , व्याकृतमेव वैयाकृतम् । बन्धुरेव बान्धवः । स्त्रियामणन्तस्यासामर्थ्यान्न वृत्तिः । शुद्धप्रकृतिस्तु वर्त्ततएव । यथा—बन्धुरियं ब्राह्मणी । एवं सर्वत्र । योधएव यौधः । मधुरेव माधवः । विद्यैव वैद्यम् । नपुंसकत्वमेव । कश्चिद् विद्यासम्बन्धात्पुरुषोऽपि विद्या । सएव वैद्य इत्याह । मन एव मानसम् । जुहूदेव जौहूतः ॥१७४॥

**निगमवणिजौ गन्धर्वश्चाग्रहायणपीडतौ—**

**प्रकृतविदतौ क्रुङ् रक्षोघ्नो विघातचिकीर्षितौ ।**

**ततवसुकराग्नीध्रं विश्वानरो वरिवस्कृतो—**

**नुषुकविकृते विड्वानुष्णिक्चरश्च कुतूहलम् ॥ १७५ ॥**

नितरां गम्यन्ते पदार्था अनेनेति निगमः। निगम एव नैगमः । नयः। वणिगेव वाणिजः । वाणिजी स्त्री ।

यस्यैते व्याधवार्कैरयसङ्कुले वित्तवत्तमाः ।

रात्रावपि महारण्ये व्रजं व्रजन्ति वाणिजाः ॥

गन्तव्यं गच्छन्तीत्यर्थः । गन्धर्व एव गान्धर्वः । अग्रहायण एव आग्रहायणः । मार्गशीर्षः । पीडन्नेव पैडतः । प्रकृतमेव प्राकृतम् । विदन्नेव वैदतः। विद्वान् । क्रुङ्ङेव क्रौञ्चः । रक्षांसि हन्तीति रक्षोघ्नः । रक्षोघ्न एव राक्षोघ्नः। विहननं विघातः । विघात एव वैघातः । चिकीर्षितमेव चैकीर्षितम् । चिकीर्षन्नेव चैकीर्षत इति भोजः ।

इदपीडतमैधावसाधुसाधारणद्वये । लङ्केशयौधायेचास्मै हिताग्रचैकीर्षितक्रिया:॥

---

(१) शश्वदेव शाश्वत इति पा० ।

तनोति कुलम् । ततः । तत एव तातः जनकः । वसुरेव वासवः । सुरपतिः । करएव कारः । राजदेयो भागः । अग्निमिन्द्धे । अग्नीत् । तस्य शरणम् । आग्नीध्रम् । ततोऽणि प्रत्यये । आग्नीध्री शाला । आग्नीध्रा वा शाला । विश्वानर एव वैश्वानरः॥ वरिवस्कृत एव वारिवस्कृतः। अनुषुवतीत्यनुषूः। तं कायतीत्यनुषुकः। केऽणेति ह्रस्वत्वे। अनुषुक एव आनुषुकः। विकृतमेव वैकृतम् । विकृतिरेव वैकृतमिति नन्दी ॥

पञ्चो वैयाकृतैः सूक्तैर्जागतानुष्टुभौष्णिहैः ।
राक्षसासुरपैशाचवैकृतानां निवर्त्तकम् ॥

विद्वानेव वैदुषः । उष्णिगेव औष्णिहम् । चरएव चारः । कुतूहलमेव कौतूहलम् ॥१७५॥

नन्दामात्यडहालसंप्रतिवजाः कर्षापणत्रिष्टुभौ—
गायत्रीरवणोपचेयककुदैकाग्र्याटरूषास्तथा ।
संनाय्याग्रयणौ विधेयकुतुकागारह्दिदत्पङ्क्तयः—
सत्वन्तुप्रतिभावियातसहसा वार्त्ता विदन्तोऽपि च ॥१७६॥

नन्दति वृद्धिं यातीति नन्दा । नन्दैव नान्दी । अमात्य एव आमात्यः । डहाल एव डाहालः । सम्प्रत्येव साम्प्रतम् । वजतीति वजः । स एव वाजः । कर्षापण एव कार्षापणः । त्रिष्टुबेव त्रैष्टुभम् । गायत्र्येव गायत्रम् । छन्दसां पूर्वम् । रवण एव रावणः । उपचेयएव । औपचेयः । ककुदमेव काकुदम् । शब्दशक्तिस्वाभाव्यात्स्वार्थिकाणप्रत्ययान्तस्यापि काकुदशब्दस्यार्थभेदो द्रष्टव्यः । एकमग्र्यं पुरोगतं ध्येयमस्य एकाग्र्यः । सएव ऐकाग्र्यः । अनन्यवृत्तिः । अटन् रूषतीति । अटरूषः । सएव आटरूषः सिंहास्यः । यथा—

वासकः सिंहपर्णी च वृषो वासाथ सिंहका ।
आटरूषः सिंहमुखी भिषङ्मातादरूषकः ॥

सन्नाय्यमेव । सांनाय्यम् ॥ अग्रयणमेव आग्रयणः॥ चन्द्रस्तु । अग्रेऽयनस्य । अग्रयणम् । राजदन्तादित्वात् प्राङ्निपाते शकन्ध्वादित्वादकारलोपे च । अग्रयणमेव आग्रयणमित्याह ॥ आग्रायणीत्यन्यः (१) । विधेयएव वैधेयो

(१) आग्रयणमेवेति श्रीभोज इति पा०

मूर्खः। विधाया भोजनस्यापत्यमिव वैधेय इत्यन्ये ॥ कुतुकमेव कौतुकम् । अगारमेव आगारम् । द्वौ दन्तावस्य द्विदन् । वयसि दन्तस्य दत् । दत्रादेशे । द्विदन्नेव द्वैदतो बालः । पङ्क्तिरेव पाङ्क्तम् । सत्वन्तुरेव सात्वन्तवः । प्रतिभैव प्रातिभम् ॥

प्रातिभं त्रिसरकेण गतानां वक्रवाक्यरचनारमणीयः ।
गूढसूचितरहस्यसहास्यः सुभ्रुवा प्रववृते परिहासः ॥

वियातएव वैयातो धृष्टः । सहसैव साहसम् । अविचार कृतं कर्म ॥ अन्यस्तु । साहसं तु दमो दण्डः । सहसि बले भवं साहसमित्याह ॥ वार्त्तैव वार्त्तम् । यथा—

हरिराकुमारमखिलाभिधानवित्–स्वजनस्य वार्त्तमयमन्वयुङ्क्त सः ॥

विगता दन्ता अस्य विदन्तः । विदन्तएव वैदन्तः बालादिः ॥ १७६ ॥

वयश्चतुष्प्राश्यदशार्हयुक्तः परिप्लवः पुष्पकसंयुतश्च ।
कृष्णः कुरङ्गेऽनिमिषे विसारी स्यादौषधं भेषजएव कामम् ॥१७७॥

वयएव वायसः काकः । वय-शब्दः सामान्येन पक्षिवाच्यपि विशेषे वर्त्तते शब्दशक्तिस्वाभाव्यात् । एवं वसुशब्दोऽपि द्रष्टव्यः । प्राश्नन्ति प्राश्नुवते वा तदिति प्राश्यम् । चतुर्भिः प्राश्यं चतुष्प्राश्यम् । तदेव चातुष्प्राश्यम् । दश नामान्यर्हति । दशार्हः । सएव दाशार्हः केशवः । परिप्लवते परिप्लवः । सएव पारिप्लवः । चञ्चलः । पुष्पप्रकृति (१) पुष्पकम् । पौष्पकम् । कुसुमाञ्जनम् । कृष्णएव कार्ष्णः कुरङ्गः। अन्योगवादिः कृष्णः। वैसारिणः। मत्स्यः। अन्यो विसारी। देवदत्तादिः। ओषधिरेव । औषधम् । त्रिफलादि। अन्यत्रौषधयः । क्षेत्ररूढाः शङ्खपुष्पीप्रभृतयः । आकृतिगणश्चायम् । तेनान्येऽपि प्रयोगा द्रष्टव्याः ॥१७७॥ इति प्रज्ञादिः ॥

अनन्तसोमेतिहसर्ववेदाः सुखैकभावौ मणिकान्यभावौ ।
समीपसेनावसथद्विभावा मालोपमाभेषजसर्वविद्याः ॥१७८॥

यथोऽनन्तादेरित्यनेनानन्तादेः शब्दगणात्स्वार्थे यथप्रत्ययो भवति । न अन्तोऽनन्तः । अनन्त एव आनन्त्यम् ॥ न विद्यतेऽन्तो यस्य । अनन्तः

(१) पुष्पप्रतिकृतिरिति पा० ।

कालः । अनन्ता पृथ्वी । अनन्तं व्योम । आनन्त्यः काल इत्यादि । सोम एव सौम्यः । यथा—

तेनाथ नाथदुरुदाहरणातपेन—सौम्यापि नाम परुषत्वमपि प्रपन्ना ।
जज्वाल तीक्ष्णविशदासहसोद्गिरन्ती—वागर्चिषस्तपनकान्तशिलेव सीता ॥

सौम्यम्। सोमइवाह्लादकत्वात् सोम्य इत्यपि शाखादेराकृतिगणत्वात्। यथा— अपेतयुद्धाभिनिवेशसौम्यो—हरिर्हरिप्रस्थमथप्रतस्थे ॥

इतिहेत्येव । ऐतिह्यम् । इतिहेति निपातसमुदाय उपदेशपारंपर्ये वर्त्तते । इतिह स्नोपाध्यायः कथयति । इतिह वटे यक्षः प्रतिवसति । सर्वेवेदाएव सार्ववैद्यम्। सुखमेव सौख्यम् । एको भावो यस्य एकभावः। एकस्य वा भावः । एकभावः । स एव ऐकभाव्यम् । मणिप्रकारो मणिकः । मणिक एव माणिक्यम् । रत्नविशेषः । अन्यो भावो यस्यासावन्यभावः । अन्यस्य वा भावोऽन्यभावः । अन्यभावएव आन्यभाव्यम् । यथा । आन्यभाव्यं तु कालशब्दव्यवायात् (१) । समीपमेव सामीप्यम् । सहेनेन वर्त्तते सेना । सेनैव सैन्यम् । एत्य वसन्त्यस्मिन्निति आवसथो गृहम् । आवसथ एव आवसथ्यम् । द्वयोर्भावो द्विभावः । द्विभावएव द्वैभाव्यम् । मालैव माल्यम् । स्रक् । उपमैव । औपम्यम् । भिषजइदम् । भेषजम् । यद्वा भिषज्यतीति भेषजः । करणस्यापि कर्त्तृत्वे पचाद्यचि यलोपे च निपातनादेत् । भेषजमेव भैषज्यम् । सर्वविद्या एव सार्ववैद्यम् । यथा—सर्ववैद्यविदयाधृतचातुर्वैद्यवैद्य इव तं विरहार्त्तम् ॥ १७८ ॥

**सर्वलोकचतुर्विद्याचतुराश्रमषड्गुणाः ।**
**भावशब्दस्वरा विद्यालोककालास्त्रितः परे ॥ १७९ ॥**

सर्वलोकाएव सार्वलौक्यम्। चतस्र एव विद्याः चातुर्वैद्यम् । अथवा । चत्वारएव वेदाः । चातुर्वैद्यम् (२) । उभयत्राप्यनुशतिकादिदर्शनादुभयपदादावैच् । चत्वार एवाश्रमा ब्रह्मचारिगृहस्थवानप्रस्थयतिलक्षणाः । चातुराश्रम्यम् । षड्गुणा एव सन्धिविग्रहयानासनद्वैधीभावसंश्रयलक्षणाः । षाड्गुण्यम् । यथा—अषडक्षीणषाड्गुण्यमन्त्रीमकरकेतनः ॥

---

(१) महाभाष्ये—अष्टडणित्यस्य व्याख्याने ।

(२) चतुरो वेदानधीते चतुर्वेदः स एव चातुर्वैद्य इत्यधिकम् ।

त्रयो भावाः । त्रयाणां वा भावाः त्रिभावाः । त्रिभावाएव त्रैभाव्यम् । त्रय एव शब्दाः त्रैशब्द्यम् । तथाहि—पञ्चसु कपालेषु संस्कृत इत्येकः । पञ्चकपाल इत्यपरः । पञ्चकपाल्यां संस्कृतस्तृतीयः । पाञ्चकपालमित्यवधानान्नास्ति चतुर्थः शब्द इति । त्रय एव स्वरा उदात्तानुदात्तस्वरितलक्षणाः । त्रैस्वर्य्यम् । तिस्रएव विद्या आन्वीक्षिकीत्रयीवार्त्तालक्षणाः । त्रैविद्यम् । द्विविद्य इत्यप्यन्यः । कश्चित् तिस्रएव विद्याः । त्रय एव वेदा इति वा । त्रैविद्यमित्याह । त्रयएव लोकाः त्रैलोक्यम् । त्रयएव काला वर्त्तमानभूतभविष्यल्लक्षणाः । त्रैकाल्यम् । त्रितइति त्रिशब्दादित्यर्थः ॥ १७९ ॥

हासप्रधानकवयः समानसन्निधितदर्थसमयुक्ताः ।
अथ चतुरो वर्णयुगौ शीलं शकटाङ्गजः प्राह ॥१८०॥

हासएव हास्यम् । यथा—गूढसूचितरहस्यसहास्यः सुभ्रुवां प्रववृते परिहासः । प्रधानमेव प्राधान्यम् ॥ कविरेव काव्यः । दैत्यगुरुः । कुर्वादिभ्यो ण्ये सति काव्य इति च । समानमेव सामान्यम् । सन्निधिरेव सान्निध्यम् । सोऽर्थोऽस्येति तदर्थः । तदर्थ एव तादर्थ्यम् । तच्छब्देन प्रकृत्यर्थो निर्दिश्यते । सममेव साम्यम् । चत्वारएव वर्णाः चातुर्वर्ण्यम् । विप्रक्षत्रियविट्शूद्राः । चातुर्युग्यम् । शाकटायनस्तु षण्प्रत्ययमानयञ्शीलमेव शैलीयमाचार्य्यस्येत्याह ॥ जिनेन्द्रबुद्धिरनन्तरशब्दमप्यत्राधीते । तथा च तेन । अनृष्यानन्तर्य्ये विदादिभ्योऽञित्यत्र नह्ययं भावे ष्यञ् विहितः किंतर्हि स्वार्थएव चातुर्वर्ण्यवदिति दर्शितम् ॥ आकृतिगणश्चायम् ॥ तेनान्येऽपि वेदितव्याः ॥ १८० ॥

इत्यनन्तादिः ॥

आदिमध्यमुखान्ताग्रप्रमाणपार्श्वयत्तदः ।
सर्वविश्वोभयैकान्यवक्षःपूर्वेदमः स्वरः ॥१८१॥

आद्यादेरित्यनेनाद्यादिभ्यः सम्भवद्विभक्त्यन्तेभ्यो यथासम्भवं तस्प्रत्ययो भवति । आदौ । आदितः । मध्ये मध्याद्वा । मध्यतः । एवं मुखे । मुखतः । अन्ततः । अग्रतः । प्रमाणेन प्रमाणाद्वा । प्रमाणतः । पार्श्वेन । पार्श्वतोऽर्कं निषेवेत । येन यस्मिन् वा । यतः । एवं ततः । सर्वतः । विश्वतः । उभयतः । एकतः । अन्यतः । वक्षस्तः । पूर्वतः । इतः । यथा—प्रयुक्तमप्यस्त्रमितो वृथा स्यात् ॥ स्वरेण । स्वरतः ॥

आकृतिगणश्चायम् । तेन वर्णतः । शब्दतः । अर्थतः । अभिधानत इत्यादयो द्रष्टव्याः । का पुनरत्र संभवन्ती विभक्तिः । तथाहि । याप्येपाशवित्यत्र प्रयुक्तम् । शरीरतः कृशः । शरीरेण कृशइत्ययं तत्रार्थः । तेन तृतीयान्तादनेन तसिः । तथा दुष्टः शब्दः स्वरतो वर्णतो वेत्यस्य विवरणे भर्तृहरिः । आद्यादित्वात्तसिः । स्वरवर्णाभ्यां दुष्टइति तत्रापि तृतीयान्तादेव । एवंभूतविषयमेवैतल्लक्षणमिष्ट्युपसख्यानानां नियतविषयत्वात् । नच सर्वविषयोऽयमिति स्मृतिरस्ति नापि सर्वविषयत्वे प्राक्सूत्रप्रपञ्चस्यानेकलक्षणस्यापादानादिग्रहणस्यात्र फलमस्ति सुबन्तात्तसित्युच्यमाने सर्वस्य संग्रहात् । तस्मादाद्यादिभ्य इत्येतस्य सामान्यलक्षणत्वासंभवाद् यावदुदाहृतमिह शास्त्रे प्रमाणतयोपगतैः शिष्टैस्तावानेव विषयो नापरः । एवं च यएते तर्कग्रन्थेषु हेतुपञ्चम्यर्थे किंसर्वनामबहुभ्योऽन्यत्र तसन्ताः प्रयोगाः । तेषु यत्रापादानपञ्चमी सम्भवति तत्र साधुत्वम् । येषु तु न संभवति ते कालदृष्टाएवापशब्दाः । न च तत्राद्भुतं बाहुल्येन तर्कग्रन्थेषु शब्दानां लक्षणविकलानामेव दर्शनात् । यस्त्वयं वेदविदामलंकारभूतो वेदाङ्गत्वात्प्रमाणितशब्दशास्त्रः सर्वज्ञंमन्य उपमीयते तेन कथमेतत्प्रयुक्तम् । नहि स्मरणतो यत्प्राक्तत्प्रत्यक्षमितीरितं वचनं राजकीयं वा वैदिकं वापि विद्यतइति तत्र हि दिग्योगलक्षणा दिक्शब्द इत्यनेनोपपदविभक्तिः पञ्चमी केन तस्यास्तसिः स्यात् । अन्ये तु हेतुपञ्चम्यन्तादपि तसमिच्छन्ति । यथा—प्रमाणाद्धेतोः । प्रमाणतः । तथा च सार्वविभक्तिकस्तसिति तार्किकाः शतशो व्यवहरन्ति ॥१८१॥ इत्याद्यादिः ॥

स्थूलश्चञ्चत्पत्रमूलाणुमाषाश्चञ्चश्चित्रं गन्धहस्तेषुचूर्णाः ।
पानं वर्णो मूलमुद्रार्धपादाः पिष्टः शूलं पल्लवः सूत्रपत्रे ॥१८२॥

स्थूलादेरित्यनेन स्थूलादिभ्यः शब्देभ्यः प्रकारवत्यर्थे को भवति जातीयरोऽपवादः । स्थूलत्वविशेषयुक्तः पटः । स्थूलकः । तत्र स्थूलसदृशः स्थूलकः । स्थूलसामान्यस्य वायं भेदः स्थूलकः । चञ्चतीति चञ्चत् । चञ्चत्प्रकरः । चञ्चत्कः । चञ्चता गत्वरेण सदृशः । चञ्चत्कः । बृहता सदृशः बृहत्कः । मणिर्मण्डूकः खद्योतो वा । खद्योतस्तावदुन्मेषनिमेषाभ्यां चञ्चन्निवेत्युपमीयते मण्डूकोऽपि । श्वासप्रबन्धेन गत्वरइति मणिः स्पन्दमानप्रभत्वात्तथोत्प्रेक्ष्यते । तथाल्पोऽपि

प्रविकाशिप्रभत्वान्महानिव य उपलक्ष्यते तत्र मणौ बृहत्कशब्दो लोके प्रयुज्यते। तदाह॥ चञ्चत्प्रकारश्चञ्चत्को बृहत्कइति चापरे।
मणिमण्डूकखद्योतान्सादृश्येन प्रचक्षते॥
तन्नोन्मेषनिमेषाभ्यां खद्योत उपमीयते।
श्वासप्रबन्धैर्मण्डूकः स्पन्दमानप्रभो मणिः॥
प्रविकाशिप्रभोऽल्पोऽपि महान्य उपलभ्यते।
बृहत्क इति तत्रैव मणौ शब्दः प्रयुज्यते॥

पत्रमूले प्रकारोऽस्य पत्रमूलकः॥ अणुः प्रकारोऽस्य अणुकः। पटः। द्व्यणुकादिः पदार्थो गवाक्षाद्यन्तरप्रविष्टरविकिरणप्रकाशितो रेणुर्वेत्यन्यः सुवर्णस्य षोडशांशो माषः। स प्रकारोऽस्य माषकम्। हिरण्यम्। भोजस्तु। अणोर्माषेषु। माषात्परिमाण इति सूत्रद्वये। अणुका माषाः। माषकः सुवर्णपरिमाणमित्याह। चञ्चतीति चञ्चुः। चञ्चुः प्रकारोऽस्य चञ्चुकः। चित्रप्रकारः चित्रकः। द्वीपी। गन्धप्रधानः। पाषाणो गन्धः। गन्धः प्रकारोऽस्य गन्धकः। हस्तप्रकारः। हस्तकः। पताकत्रिपताकादिनृत्ताभिनयविषयप्रसिद्धः। इषुप्रकारः—इषुकः। बाणविशेषः। इषुप्रकारोऽस्याः। इषुका। गोलिका। चूर्णप्रकारः चूर्णकः। तालीशादिस्तांबूलाङ्गं वा। पानप्रकारः पानकम्। द्राक्षाशर्करादिनिर्मापितम्। वर्णप्रकारः वर्णिका। गैरकादिः। परीक्षार्थं सुवर्णादिमात्रा वा। मूलप्रकारः मूलकः। शाकविशेषः। स्त्रीत्वविवक्षायां मूलिका। शङ्खपुष्प्यादिः। मुद्राप्रकारः मुद्रिका। अङ्गुल्याभरणम्। अर्धप्रकारः अर्धिका। पादप्रकारः पादिका। पिष्टप्रकारः पिष्टका। माषादिद्विदलधान्यचूर्णः॥ शूलप्रकारः शूलिका। पल्लवप्रकारः पल्लविका। चणकादिपत्रं संस्कारयोग्यं भक्ष्यम्। सूत्रप्रकारः सूत्रिका॥ पत्रप्रकारः पत्रकम्। तमालपत्रमेव। लिखितलघुभूर्जखण्डवाचि तु ह्रस्वाल्पविवक्षायां कप्रत्यये सिद्धम्। यथासंभवं सर्वत्र प्रकारे विवक्षिते शब्दशक्तिस्वाभाव्यात्स्त्रीत्वमेव॥ १८२॥

हरितध्रुववात्येक्षुमठमण्डपसंकलाः।
वात्यकालावदातास्तु सुरायामुदितास्त्रयः॥ १८३॥

हरितप्रकारः हरितकम्। अश्वादीनां यवादिघासः। ध्रुवप्रकारः ध्रुवकः। तिर्यादिगणनेऽविचलितोऽङ्कसङ्घातः। वात्यप्रकारः वात्यकः।

अवदातात् सुरायां वास्यकालाभ्यां सामान्येन कप्रत्ययइति यन्मतं तदपि स्वीकृतम् । इक्षुप्रकारः इक्षुकः (१) । मठप्रकारः मठिका । नानादेशागतानां द्रव्यरक्षास्थानम् । मण्डपप्रकारः मण्डपिका । शुल्कादायगृहीतस्थानम् । संकलाप्रकारः संकलिका । वाटशब्देन विशिष्टं भाजनमुच्यते । तत्र साधुः । वास्या । तत्प्रकारवती वास्या सुरा भाजनपातिला वर्णोत्कर्षवती वाटिका(२) ॥ एवं कालिकावदातिकार्थो (३)ज्ञेयः ॥ १८३ ॥

तिलकालधान्यकालास्तिलमणिपुण्ड्रं बृहन्महच्चन्द्राः ।
एरण्डमधु कुमार्याः पुत्रश्वशुरौ च सञ्ज्ञायाम् ॥१८४॥

तिलकालयोः प्रकारः तिलकालकः(४) । धान्यप्रकारः—धान्यकम् । कालप्रकारः कालकः । तिलप्रकारः तिलकः । मणिप्रकारः मणिकः। मणिः प्रकारोऽस्येति मणिकः । मणिरिव यो रत्नभूतः प्रधानं मनोज्ञश्च स मणिक इत्यन्ये । पुण्ड्रकः—इक्षुविशेषः । बृहत्कः । ग्राम्यसमाजे श्रेष्ठः । महत्कः । चन्द्रकः । एरण्डकः । इक्षुविशेषः । मधुकः(५) । कुमारीपुत्रकः । कुमारीश्वशुरकः । यथा— प्रतिवसति कुमारीपुत्रका वा कुमारी—श्वशुरकसदृशी वा ग्राम्यदेशे समृद्धिः । मणिकमधुकभासं पुण्ड्रकैरण्डकेक्षु, स्तवकितककुभस्तां तद्भुवोऽस्मै शशंसुः ॥

---

(१) इक्षुक एरण्ड इत्यधिकमेकत्र । (२) पादार्थमुदकं पाद्यं तत्प्रकारा पाद्यिका सुरा । यथा प्रियातिथेः सत्काराय पाद्यं प्रदीयते । तथा कदाचित् केनचित् सुरापि । ततः सा पाद्यसदृशी पाद्यिकाशब्देन व्यपदिश्यते । गणरत्नमहोदधौ तु वास्यकालावदातास्तु सुरायामुचितास्त्रय इति पठित्वा वाटशब्देन विशिष्टं भाजनमुच्यते तत्र साधुर्वास्यो द्रवद्रव्यविशेषः । तत्प्रकारा वास्यिका सुरा भाजनपातिनी वर्णोत्कर्षवतीत्युक्तमिति संस्करणकर्त्रा ज्यूलियसएग्जेलिङ्गितिनाम्ना साहबेन टिप्पण्यामिदमुक्तम् ॥

(३) कालः श्यामलः प्रकारोऽस्य इति कालिका । अवदातो धवलः । प्रकारोऽस्या इत्यवदातिका सुरेवेत्यधिकं क्वचित् ॥ (४) शरीरे कृष्णविन्दुरूपं चिह्नम् ॥ (५) यत्तु एरण्डमधुकुमार्योः पुत्रः श्वशुरश्च संज्ञायामिति पठित्वा वर्द्धमानेनोक्तम् । एरण्डक इक्षुविशेषः । मधुकं नालिकेरासवम् । इति टिप्पण्यामुपलभ्यते ॥

कुमारीपुत्रः प्रकारोऽस्य कुमारीपुत्रकः । यथा कुमारीपुत्रः कश्चित्स-भायां प्रविशंल्लज्जते तथान्योऽपि य एवंविधः स कुमारीपुत्रकः । कुमारी-श्वशुरः प्रकारोऽस्य कुमारीश्वशुरकः । यस्य पुत्रः कुमार्या सह दृष्टः स कुमारीश्वशुरः । यथा—पुत्रदोषेण स लज्जते तथान्योऽपि लज्जमानः कुमा-रीश्वशुरकइत्यन्यो व्याचष्टे (१) ॥

संज्ञायामिति गणसूत्रम् । तस्यार्थः । स्वप्रकृत्यर्थस्य प्रवृत्तिनिमित्तमन-पेक्ष्य यः शब्दः संज्ञारूपतयार्थान्तरे वर्त्तते तस्यानेन कप्रत्ययः । फलम् आम-लकादि फलकं तु काष्ठादिमयम् । शूद्रशब्दो जातौ प्रसिद्धः । शूद्रको नाम वीरः। संतानः समानजातीयप्रवाहः । संतानकः सुरतरुः । कुब्जं वक्रं काष्ठादिवस्तु । कुब्जकस्तरुविशेषः । कुरवः कुत्सितो ध्वनिः । कुरवकस्तरुविशेषः(२) । कद-म्बस्तरुः । कदम्बकं संघातः । भ्रमरः षट्पदः । भ्रमरकः क्रीडोपकरणम् । करभः क्रमेलकः । करभको धनुष्कोटिर्गृहैकदेशो वा कटकुड्यलक्षणः । नेत्रम् अक्षि । नेत्रकं मन्थानाकर्षकम् । कणो माषादिधान्यव्यक्तिरूपः । कणको लोहोपकरणम् । दण्डो यष्टिः । दण्डकश्छन्दो विशेषः कुशमार्गो वा । जम्बु-स्तरुविशेषः । जम्बुकः शृगालः । स्त्रीत्वमपि केषांचित् । कुम्भो घटो मानविशेषो वा । कुम्भिका स्तम्भाधानी । नौरन्या । नौकाऽक्षितारका । ये तु कप्रत्ययमासाद्य स्वार्थत्यागेन जात्यन्तरे किंचिदाकारसाम्याद् यवाद्यास्तेषां प्रतिच्छन्देऽनर्चादेरिति कप्रत्ययो न पुनरनेन यवको व्रीहिः (३) । न यव प्रकार एव जात्यन्तरत्वात् । एवमन्यत् । गोमूत्रम् । तद्वर्णमाच्छादनं गोमू-त्रिका । अन्या सुरा । अन्यस्तद्वर्णः सुराकोऽहिः । प्रकारः सादृश्यमिति बहुसंमतम् । सामान्यस्य भेदको विशेषः प्रकारइत्यन्येषामभिनिवेशः । यदाह—

सादृश्यमेव सर्वत्र प्रकारः कैश्चिदिष्यते ।
भेदेऽपि तु प्रकाराख्या कैश्चिदभ्युपगम्यते ॥

आकृतिगणोऽयम् ॥ १८४ ॥ इति स्थूलादिः ॥

---

(१) कुमारीश्वशुरकः । यस्य पुत्रः कुमार्या संगतः स यथा शिष्टसभां प्रवेष्टुं लज्जते तथा यो लज्जमानः । स एवं व्यपदिश्यत इत्यधिकम् ।

(२) कुरवकः—ग्रहविशेषइत्यधिकम् । (३) यव (व्रीहिषु) गोमूत्र (आच्छादने) सुरा (अहौ) कृष्ण (तिलेषु) जीर्ण (शालिषु) [ सुराप्रकारः सुरावर्णोऽहिः सुराकः । गोमूत्रिका गोमूत्रवर्णा शाटी] ॥

अर्चासु पूजनार्थासु चित्रकर्मनटध्वजे ।
चञ्चाखरकुटीदासीवध्रिका नरि काश्यपः ॥१८५॥

प्रतिच्छन्देऽनर्चादेरित्यत्रार्चादेर्वर्जनात् को न भवति ॥ अर्चासु शिवाकारः । शिवः । अर्हन् । स्कन्दः । आदित्यः । चित्रकर्मणि । दुर्योधनः । भीमः । नटे रामः । ध्वजे—गरुडः । मनुष्येऽभिधेये । क्षेत्रे सस्यरक्षणार्थं तृणमयः पुरुषश्चञ्चा । चञ्चेव चञ्चा मनुष्यः । खरकुटी नापितमुण्डनशाला । खरकुटीव खरकुटी । दासीव दासी । वध्रिका चर्ममयी वरत्रा । वध्रिकेव वध्रिका । मुख्यवल्लिङ्गसङ्ख्ये इति वचनात् पुंलिङ्गेऽप्यर्थे स्त्रीलिङ्गतैव । काश्यपइव काश्यपः (१) ॥ १८५ ॥

देवराजाजशङ्कुभ्यः करिसिन्धुशतात् पथः ।
सिद्धोष्ट्राभ्यां गतिग्रीवे वामाद्रज्जुः स्थलात्पथः ॥१८६॥

देवानां पन्थाः देवपथः । स यादृशः सद्गुणोपेतस्तरुनिकरच्छायाकलितः समतलः सजलो निरुपद्रवश्च तादृशोऽन्योपि देवपथः । एवं राजपथः (२) । अजपथः । शङ्कुपथः (३) करिपथः । सिन्धुः समुद्रो नदी वा । तत्पन्थाइव सिन्धुपथः । शतं पन्थानो यत्र शतपथः । तत्तुल्यः शतपथः । सिद्धानां गतिः सिद्धगतिः । तत्तुल्यः सिद्धगतिः । उष्ट्रस्य ग्रीवा उष्ट्रग्रीवा । तत्तुल्य उष्ट्रग्रीवा । वामा कुटिला रज्जुः । वामरज्जुः । तत्तुल्यो वामरज्जुः (४) । स्थलरूपः पन्थाः स्थलपथः । तत्तुल्यः स्थलपथः । इह पठितानामप्यन्यैः शाब्दिकैर्हस्तपुष्पमत्स्यशब्दानां(५) न युक्तः पाठः । तथाहि । हस्ताकारकाष्ठलोहाद्युपकरणं

---

(१) अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च । इवे प्रतिकृतौ लोपः कनो देवपथादिष्विति काशिकायाम् । (२) राजपथसदृशस्य सद्व्यवहारादेः संज्ञा राजपथः ।

(३) शंकुसहितः संकटः पन्थाः शङ्कुपथस्तत्सदृशस्य दुराचारादेः सञ्ज्ञा शङ्कुपथः । रथपथः । हंसपथः । वारिपथः इत्यधिकम् ॥ (४) तत्सदृशस्य खलादेः सञ्ज्ञा वामरज्जुः ॥ (५) हस्तइव हस्तः । एवमिन्द्रः । पुष्पं पुष्पतुल्या प्रतिमा । दण्ड इव दण्डः । मत्स्यइव मत्स्यः । कुण्डसिद्धयादिग्रन्थेषु कुण्डनिर्माणक्रियायां मत्स्याकारा रेखाः पतन्ति ता मत्स्यपदेन व्यवह्रियन्ते ॥

हस्तकः। पुष्पको विमानं भाजनं वा पुष्पकम्। मत्स्याकारश्चर्मचीवरादिच्छेदो मत्स्यकः। भोजोऽपि न हस्तदण्डपुष्पादिभ्य इत्यनेन कप्रत्ययस्थितिमाह। आकृतिगणश्चायम्। तेनेन्द्रप्रभृतयो द्रष्टव्याः ॥ १८६ ॥ इत्यर्चादिः ॥

अन्येषां तु मते देवपथादिः ॥

यावाभिन्नतराविवत्समणयो लान्द्रप्रवालौ वट-
ज्ञाताज्ञातपटा घटो बहुतरः स्तम्बोऽथ पूलः पुटः।
पीतप्रष्ठकुटाश्च नित्यवयसी सत्वद्दशार्हाविमौ—
भिक्षुस्तब्धपिटास्थिपुण्यबधिरा दोलाभृतौ जानु च ॥१८७॥

यावादेरित्यनेन यावादेः शब्दगणात्स्वार्थे कप्रत्ययो भवति वा। यवानां विकारो यावः। याव एव यावकः ॥

गोमूत्रयावकाहारोदस्थिकोज्जानुकद्विजे।
क्ष्मापतिः क्षौणिमाणिक्ये स वसिष्ठाश्रमेऽगमत् ॥

अलक्तक इत्यन्यः(१)। अतिशयेनाभिन्नम्। अभिन्नतरम्। अभिन्नतरमेव अभिन्नतरकम्। यथा—अभिन्नतरके नाकाद्दानकेभ्यः पराङ्मुखे।

ज्ञातके सर्वलोकानामज्ञातकविकर्मणि ॥ अविरेव। अविकः। यथा—

लूनकाविकलोमोत्थाङ्क्षेयस्कान्कन्दुकान् करे।
कुचान् हृदि वहन्तीभिः स कुमारीभिराकुले ॥

वत्स एव वत्सकः। मणिरेव मणिकः। लान्द्रमेव लान्द्रकम्। विरसं जलम्। प्रवालमेव प्रवालकम्। विद्रुमः पल्लवश्च। वटमेव वटकम्। भक्ष्यविशेषः। ज्ञात एव ज्ञातकः। अज्ञात एव अज्ञातकः। पट एव पटकः। घट एव घटकः। बहुतर एव बहुतरकः। अभिन्नतरबहुतरशब्दौ तरवन्तावुपलक्षणम्। तेन सुकरतरोपपन्नतरादयो द्रष्टव्याः। स्तम्ब एव स्तम्बकः। शाल्यादिकलापः (२)। पूल एव पूलकः तृणसंघातः। पुट एव पुटकः पत्रनिर्मितः। पीत एव पीतकः पटादिः।

---

(१) याव एव यावकः। स्तोकपक्वा यवा यावकशब्देन व्यवह्रियन्ते। अलक्तकरसो यावक इत्यन्य इत्यधिकम्।

(२) पृषोदरादित्वादनुस्वारलोपे स्तबकोऽपि स एव ॥

कृते वियातकैणानुग्रहणाणुकबुद्धिभिः । तनुकापीतकब्रह्मसूत्रैराजर्षिसूनुभिः ॥

प्रष्ठएव प्रष्ठकः । कुटएव कुटकः घटः । नित्यमेव नित्यकम् । वयएव वयस्कः । प्रज्ञाद्यणि वायसश्च । सत्त्वानेव सत्त्वकः । दशार्हएव दशार्हकः । सात्वतो दाशार्हश्च । भिक्षुरेव भिक्षुकः । स्तब्धएव स्तब्धकः ।

शीतके वोष्णके वर्तौ समाधिः स्तब्धके रहः ।

महो बृहतिकाच्छिन्नैश्छन्नोपान्ते महर्षिभिः ॥

पिटो वंशदलादिमयं भाण्डम् । स एव पिटकः । अस्थ्येव अस्थिकम् । पञ्चमधातुः । पुण्यमेव पुण्यकम् । बधिर एव बधिरकः । दोलैव दोलकः । भृतएव भृतकः कर्मकरः । जान्वेव जानुकम् ॥ १८७ ॥

**दानस्नातौ कुत्सितवेदसमाप्त्योरणुर्मतो निपुणे ।**

**लूनवियातौ च पशौ शीतोष्णमृतावनौरसे पुत्रः ॥१८८॥**

अनौरसइति कृत्रिमइत्यर्थः । कुत्सितं दानम् दानकम् । दानमन्यत् । स्नातएव स्नातकः । वेदं व्रतानि वा समाप्य यो वर्त्तते सएवमुच्यते । यत्स्मृतिः—गुरवे तु वरं दत्वा स्नायाद्वा तदनुज्ञया ।

वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥

केचित् पुण्यस्नातवेदसमाप्ताविति पठन्ति । तत्तु न हृदयहारि ॥ अणुको निपुणः । अन्यत्र । अणुर्व्रीहिः । लूनकः पशुः । वियातकः पशुः । विहानात्पशावित्यन्यः । अन्यत्र लूनो यवः । वियातो वटुः । शीनकः । उष्णक ऋतुः । अन्यत्र शीतो वायुः । उष्णः स्पर्शः । कृत्रिमः पुत्रः पुत्रकः । पुत्र एवान्यः ॥१८८॥

**आच्छादने च बृहती शून्यं रिक्ते तनुश्च सूत्रे स्यात् ।**

**क्रीडनकं च कुमार्य्याः सञ्ज्ञाशब्दस्तथेयश्च ॥१८९॥**

बृहतिका । आच्छादनविशेषः । नित्यं कः । अन्यत्र बृहती । ओपधिश्छन्दश्च । शून्यकम् । रिक्तम् । अन्यत्र शुने हितम् शून्यम् । तनुसूत्रम् तनुकम् । अन्यत्र तनुर्वत्सः । कन्दुकः । भ्रमरकः । गिरिकः । शृङ्गकम् । देवदत्तकः (१) । गुणनमेव गुणनिका । यथा—

---

(१) क्रीडोपकरणवाचकानि । यथा शालभञ्ज्येव शालभञ्जिका इत्यधिकम् ।

हेतुः परिचयस्थैर्ये वक्तुर्गुणनिकैव सा ॥

तथेयश्चेति ईयसुप्रत्ययान्तः शब्दः कप्रत्ययभाक् । श्रेयानेव श्रेयस्कः । ज्यायानेव ज्यायस्कः । भूयानेव भूयस्कः । श्रेयएव श्रेयस्कम् । भूयस्कम् । ज्यायस्कमित्यादि । आकृतिगणोऽयम् । तेन पिष्टातकादयो(१)द्रष्टव्याः ॥१८९॥

इति यावादिः ॥

शाखास्कन्दमुखाग्राणि शरणं चरणोरसि ।

जघनं शृङ्गमेघाभ्रद्रुशिरः स्कन्धमेव च ॥१९०॥

शाखाशर्कराविभ्यां यणावित्यनेन शाखादेः शर्करादेश्चेवार्थे यणौ भवतः । पुरुषस्कन्धस्य वृक्षस्कन्धस्य वा तिर्यक् प्रसृतमङ्गं शाखेत्युच्यते । यथा शाखा पार्श्वायता तथा कुलस्य यः पार्श्वायतोऽङ्गभूतः स शाखेव शाख्यः । अन्ये तु शाखायास्तुल्यः शाख्यः । यथा—शाखा वृक्षस्य शोभाकरी तथा कुलस्य शोभाकरः पुरुषः शाख्य इति तुल्यत्वमाहुः । स्कन्दः स्वामी । तत्तुल्यः स्कन्द्यः(२)। मुखमिव मुख्यः । यथा—मुखं हस्तपादादिभ्योऽवयवेभ्यः प्रथममवलोक्यते तथाऽन्योऽप्येवमुच्यते । कश्चिन्मुख्यं नालिकेरमित्याह ॥ अग्रमिव अग्र्यः । प्रधानभूतः । शीर्यते भयमस्मादिति शरणम् । आर्त्तत्राणम् । तत्तुल्यः शरण्यः परित्राता । चरणाविव चरण्यः । यथा—चरणौ शरीरस्य प्रकर्षकौ तद्वत् कुलस्य प्रकर्षकएवमुच्यते । उर इव उरस्यः । यः कार्येषूपगतेषु ससत्त्व उरः प्रयच्छति स एवमुच्यते । जघनमिव निकृष्टो यः स जघन्यः । शृङ्गमिव यः सर्वस्याप्युपरिवर्त्ती स शृङ्ग्यः । मेघइव यः सन्तापापनेता स मेघ्यः । अभ्रमिव य आच्छादकः सोऽभ्र्यः । द्रुरिव द्रव्यस् अयं राजपुत्रः । यथा—द्रुमः फलपुष्पपल्लवादिभिरर्थिनः कृतार्थयति स हि भवनमर्हतीति भव्यो भवत्यात्मवानिति द्रव्यमुच्यते (३) । क्रिया हि द्रव्यं विनयति नाद्रव्यमिति । पुरुषार्थसाधकत्वाद्धिरण्यादिकमपि द्रव्यम् ॥

---

(१) तेन पिष्टातकादयोप्यत्र द्रष्टव्या इति वर्द्धमानसूरिराह । पिष्टातः सुगन्धिचूर्णं स एव पिष्टातकः ॥

(२) स्कन्द इव यः शत्रुशोषकः स स्कन्द्य इत्यधिकम् ॥

(३) कृतार्थयति तथा स इत्यर्थः । भवमर्हति भव्यः । यथा द्रुमः फलपुष्पपल्लवादिभिः स्वाश्रितान् कृतार्थयति । एवमर्थिनः स्वसम्पदा कृतार्थयन्नात्मवान् पुरुषो द्रव्यमित्युच्यत इति पा० ॥

निर्द्रव्यो ह्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसः ।
निस्तेजाः परिभूयते परिभवान्निर्वेदमापत्स्यते ॥

शकटाङ्गजस्तु द्रुणस्तुल्यं द्रव्यं द्रुशब्दं नपुंसकमाह ॥ शिरइव शीर्षण्यः । प्रधानभूतः । शिरसः शीर्षन्नणादावित्यनेन शीर्षन्नादेशः । स्कन्धइव यो बलस्याश्रयः स स्कन्ध्यः ॥ १९० ॥ इति शाखादिः ॥

**शर्करा लोमगोपुच्छगोलोमानि कपालिका ।**
**नराची शतपत्रं च पुण्डरीककपाटिके ॥१९१॥**

शर्करेव शार्करं दधि मधुरत्वात् । शार्करी मृत्तिका कठिनत्वात् ॥ शर्कराशब्द इक्षुविकारे सिकतास्वपि वर्त्तते । लोमेव कोमलस्पर्शत्वात् । लौमनं वस्त्रम् । गोपुच्छमिव गौपुच्छो दण्डः । गोलोमेव गौलोमनम् । ब्रह्मादीनामित्यनेन नियमितत्वादन्त्याणादिलोपाभावः । भोजेन गौलोममित्युदाहृतम् । तत्तु न संगच्छते । न लोपस्य नियमेन व्यावर्त्तितत्वात् । कुत्सितम् अज्ञातं वा कपालम् कपालिका । कपालिकेव कापालिकं कसादिपात्रम् । नरानञ्चति नराची । तत्तुल्यं नाराचम् । शतपत्रमिव शातपत्रम् । पुण्डरीकमिव पौण्डरीकम् । ह्रस्वः कपाटः कपाटिका । कपाटिकेव कापाटिकम् ॥ वामनः कपिष्ठिकेत्याह ॥ कंवाष्टिकेति शकटाङ्गजः । आकृतिगणोऽयम् । तेन सिकतानकुलादयो ज्ञातव्याः ॥ १९१ ॥ इति शर्करादिः ॥

**अङ्गुली रुरुहरी कपिबभ्रू कर्कमण्डरतरोमुनयश्च ।**
**शष्कुली कुलिशलोहितगोणी—वल्गुमण्डलखला भरुजश्च १९२**

अङ्गुल्यादेष्ठणित्यनेनाङ्गुल्यादिगणादिवार्थे ठण् भवति । वामनस्य तु लदादेष्ठगिति सूत्रम् । अङ्गुलिरिव दीर्घायते आङ्गुलिकः । आङ्गुलिकी । मणिशलाका । रुरुरिव रौरुकः । हरिरिव हारिकः । कपिरिव कापिकः । बभ्रुरिव बाभ्रुकः । कर्कइव कार्किको गौर्गवयो वा । कार्किकं यशः ॥ यथा ममैव सिद्धराजवर्णने—

प्रत्युप्तमुक्ताफलपद्मरागप्रस्पर्धिभिस्तोषितविश्वलोकैः ।
यशोऽनुरागैस्तव सिद्धनाथ चक्रे जगत्कार्किकलौहितीकम् ॥

पक्षे कर्कलोहितशब्दयोष्टीकणपि । कर्कलोहिताट्टीकण् वेति शकटाङ्गजमतं स्वीकृतम् । मण्डरइव माण्डरिकः । तरइव तारसिकः । मुनिरिव

मौनिकः । शष्कुलीव शाष्कुलिकः । कुलिशमिव कौलिशिकः । लौहितमिव लौहितिकः—स्फटिकः । स्वयमलोहित उपाश्रयवशात्तथावभासते । गोणीव गौणिकः । वल्गुरिव वाल्गुकः । मण्डलमिव माण्डलिकः । खलइव खालिकः । भरुजइव भारुजिकः । विद्वान् ॥ आकृतिगणोऽयम् । तेन उदश्विद्भरुमण्डूवादयोद्रष्टव्याः ॥ १९२ ॥ इत्यङ्गुल्यादिः ॥

विनयविशेषसमूहाः समयात्ययसम्प्रदानसङ्गतयः ।
व्यवहारसमुत्कर्षाकस्मादनुगादिसङ्ग्रामाः ॥१९३॥

विनयादेरित्यनेन विनयादेः शब्दगणाट्ठण् भवति स्वार्थे । विनयएव वैनयिकः । विशेष एव वैशेषिकः । समूहएव सामूहिकः । समयएव सामयिकः । एवम् आत्ययिकः । साम्प्रदानिकः । साङ्गतिकः । सङ्गतमेव साङ्गतिकम् । साङ्गतिक आलापः । साङ्गतिकी व्यवस्थेति वामनः । व्यावहारिकः । सामुत्कर्षिकः । आकस्मिकः । आनुगादिकः । साङ्ग्रामिकः ॥१९३॥

सपदातिसमाचाराः समायमुक्ताकथञ्चिदुपचाराः ।
निर्मितह्रस्वादेशो बुधैरुपायध्वनिः कथितः ॥१९४॥

पदातिरेव पादातिकः । समाचारएव सामाचारिकः । समायएव सामायिकः । मुच्यते शुक्तिभिः मुक्ता । मुक्तेव मौक्तिकम् । कथञ्चिदेव काथञ्चित्कम् । उपचारएव औपचारिकः । उपायएव औपयिकम् ॥

स वैनयिकवान्सामयिकस्यात्ययिकं त्यजन् ।
तमौपयिकवान्सेनां निवेश्य वहिराविशत् ॥१॥
स सामूहिकमुत्सृज्य मुनिसाङ्गतिकाय यान् ।
पिप्रिये पादयोः पृथ्व्याः पतिः प्रेम्णेव पीडितः ॥२॥
अनौपचारिकैः सामाचारिकव्यावहारिकैः ।
यान्ति वैशेषिकैः सामुत्कर्षिकं सत्सु साधवः ॥३॥
काथंचित्केन कतिचित्सोऽनुमेने तु सञ्चरान् ।
नृवीरो वीरसेनादीन्मनोमुत्साम्प्रदानिकान् ॥४॥
अथाकस्मिकमाहानुगादिको वाचिकस्य तम् ।

आकृतिगणोऽयम् । तेन त्रिवर्णप्रभृतयो द्रष्टव्याः ॥१९४॥
इति विनयादिः ॥

काकतालं च खल्वाटविल्वे चान्धकवर्त्तकम् ।
अर्धाच्च जरतीश्येनात्कपोतो घुणतोऽक्षरम् ॥१९५॥

काकतालइत्येवं प्रकारेभ्यः शब्देभ्यः काकतालीयादय इत्यनेनेवार्थे छप्रत्ययो निपात्यते । काकश्च तालश्च काकतालमिति द्वन्द्वे लक्षणया पततः काकस्य निपतता तालेन चित्रीयमाणः संयोग उच्यते । तत्तुल्यः काकतालीयः(१)। खल्वाटविल्वयोरिव खल्वाटविल्वीयः। यथा–खल्वाटः पर्यटन्नतर्कितं श्रीफलतरोरधस्तादागतो दैववशाच्च विल्वमुपरि पतितं तद्वदन्योऽप्युभयवस्तुसंयोग एवमुच्यते । अन्धकश्च वर्त्तका च अन्धकवर्त्तकम् । अन्धकस्य वर्त्तकाया उपर्यतर्कितः पादन्यास उच्यते । तत्तुल्यम् । अन्धकवर्त्तकीयम् । अर्धजरतीशब्दोऽर्धजरतीकासने वर्त्तते । तदिव यत्तद् अर्धजरतीयं कार्यम् । यथा स्त्री न तरुणी अथस्तनत्वात् कृशकेशत्वान्न जरती वक्तुं शक्यते तद्वत्सिद्धासिद्धं प्रयोजनम् ॥ श्येनकपोतयोरिव श्येनकपोतीयो दुर्योगः । यथा–कपोतोऽतर्कितमागतेन श्येनेन गृहीतस्तथाकस्मिको यो दुर्योगः स एवमुच्यते । घुणोत्किरणात्कथञ्चिन्निष्पन्नमक्षरम् । घुणाक्षरम् । तदिव यदकुशलेन दैवान्निष्पद्यते (२)तद्घुणाक्षरीयम् ॥ १९५ ॥

पुरुषः शरतो ज्ञेयो गोमयात्पायसं मतम् ।
कृपाणः स्यादजातश्च शर्करोन्मज्जनं तथा ॥१९६॥

शरश्च क्षिप्तः प्राकाराच्च पुरुष उत्थितः स तेन हतः । तत्तुल्यं शरपुरुषीयम् । गोमयपायसयोरिव गोमयपायसीयम् । यथाऽजया भूमिं खनन्त्यात्मवधाय कृपाणो दर्शितस्तत्तुल्यं वृत्तं केनचिदात्मविनाशाय कृतम् । अजा-

---

(१) काकतालीयम् । अजाकृपाणीयम् । अन्धकवर्त्तकीयम् । अतर्कितो पनतं चित्रीकरणमुच्यते । तत्कथम् । काकस्यागमनं यादृच्छिकं तालस्य पतनं च । तेन तालेन पतता काकस्य वधः कृतः । एवमेव देवदत्तस्य तत्रागमनं दस्यूनां चोपनिपातः। तैश्च तस्य वधः कृतः। तत्र यो देवदत्तस्य दस्यूनां च समागमः स काकतालसमागमसदृश इत्येक उपमार्थः । यश्च देवदत्तस्य वधः स काकतालवधसदृश इति द्वितीय उपमार्थः। तत्र प्रथमः समासार्थः । द्वितीये प्रत्यय इत्यधिकम् ॥ (२) निष्पाद्यतइति पा० ।

कृपाणीयम्। शर्करा च क्षिप्ता पुरुषस्य चोन्मज्जनं तत्तुल्यं शर्करोन्मज्जनीयम्। आकृतिगणश्चायम्। तेन तिन्दुकज्योतिषीयमित्यादयो द्रष्टव्याः ॥१९६॥

इति काकतालादिः।

पर्श्वसुरभरतरक्षोबह्लीकवयःपिशाचवसुमरुतः।
सत्वदुशीनरकर्षापणास्त्रिगर्ताशनिदशार्हाः ॥ १९७ ॥

पर्शुभ्योऽण् शस्त्रजीविसङ्घादित्यनेन पर्श्वादेर्गणादस्त्रियां स्वार्थेऽण् भवति ॥ पर्शोरपत्यं पार्शवः शस्त्रजीविसङ्घः। पार्शवौ। पर्शवः। आसुरः। आसुरौ। असुराः। भारतः। भारतौ। भरताः। भोजस्तु भार्त्तः। भार्त्तौ। भर्त्ता इत्याह। यथा—पार्शवाश्वनबाह्लीकपिशाचासुरराक्षसान्।

शिष्याः सभार्त्तत्रैगर्तान्सकार्षापणवायसान् ॥

राक्षसः। राक्षसौ। रक्षसः। रक्षांसीत्यन्यः। बाह्लीकः। बाह्लीकौ। बह्लीकाः। बह्लिक इत्यन्यः॥ वायसः। वायसौ। वयसः। पैशाचः। पैशाचौ। पिशाचाः। एवं मारुतः। सात्वतः। औशीनरः॥ कार्षापणः। त्रैगर्त्तः। आशनः। दाशार्हः॥

अस्त्रियामिति किम्। पर्शूः स्त्री। ऊङ्युतोऽरज्ज्वादेश्चेत्यूङ्। रक्षाः॥ शस्त्रजीविसंघादिति किम्। असुरः(१) ॥१९७॥ इति पर्श्वादिः॥

दामनिबैन्दवितुलभाः शात्रुंतपि सार्वसेनिकाकन्दि।
सावित्रीपुत्रौडविमौञ्जायनकाकदन्तकयः ॥१९८॥

दामनिस्यश्छ इत्यनेनैभ्य आयुधजीवसङ्घवाचिभ्यश्छो भवति। दामनयः शस्त्रजीविसंघः। दामनीयः। दामनीयौ। दामनयः। बैन्दवीयः। बैन्दवीयौ। बैन्दवयः। तुलया भान्तीति तुलभाः। शस्त्रजीविसङ्घः। पृषोदरादिः तुलभीयः। शात्रुंतपीयः। सार्वसेनीयः। काकन्दीयः। काकन्दकिरिति भोजः। सावित्रीपुत्रीयः। औडवीयः। मौञ्जायनीयः। काकदन्तकीयः ॥१९८॥

औलपिराच्युतदन्तिः शाकुन्तकिराविदन्तिरौदङ्किः।
ज्ञेयश्च वैजवापिर्बिन्दुश्चात्राच्युतन्तिश्च ॥१९९॥

---

(१) आसुरइति पा०।

औलपीयः । आच्युतदन्तीयः । शाकुन्तकीयः । आविदन्तीयः । औदङ्कीयः । औदकिरित्यन्यः । बैजवापीयः । बिन्दवः शस्त्रजीविसंघः । बिन्दवीयः । बिन्दवीयौ । बिन्दवः । अच्युतोऽन्तो यस्यासौ । अच्युतन्तः । पृषोदरादित्वात्पररूपे । आच्युतन्तीयः । मौञ्जायनशब्दो नडादिफगन्तः । तुलभबिन्दुशब्दावप्रत्ययान्तौ । शेषास्त्विञन्ताः ॥१९९॥

ब्राह्मगुप्तस्त्रिगर्तेषु कौण्डोपरथजानकी ।
दाण्डकिर्जालमानिश्च षष्ठः स्यात्क्रौष्टुकिस्तथा ॥२००॥

ब्राह्मगुप्तीयः । ब्रह्मगुप्त इति वामनः । कौण्डोपरथीयः। कुण्ठोऽतीक्ष्ण उपरथः समीपवर्त्ती रथो यस्य स कुण्ठोपरथः । तस्यापत्यं शिवाद्यण् । कौण्ठोपरथ इति शाकटायनः । जानकीयः । दाण्डकीयः । जालमानीयः । क्रौष्टुकीयः । एषां प्रथमद्वितीयौ शिवाद्यणन्तौ । अन्ये त्विञन्ताः । त्रिगर्त्तेष्विति किम् । कौण्डोपरथ्यः । कौण्डोपरथ्यौ ॥२००॥ इति दामन्यादिः ॥

कम्बोजोजवनश्चोलो मुरलः केरलः शकः ।
खसो जर्तो व्युपापेभ्यो धारयश्च मतो बुधैः(१) ॥२०१॥

कम्बोजादेः श्लुगित्यनेन कम्बोजादेर्गणाद्राष्ट्राख्यात् क्षत्रियवाचिनस्तस्यापत्यं राजा वेत्यर्थे जातस्याञादेः श्लुर्भवति ॥ कम्बोजस्यापत्यं राजा वा। कम्बोजः । एवं जवनः । चोलः । मुरलः । केरलः । शकः । खसः । जर्त्तः । चोलशकखसजर्त्तानां द्व्यचां पुरुद्वग्ग्मगधेत्यादिना कृतस्याणः श्लुक् शेषेभ्यस्त्वञः ॥

चोलकेरलनाथं तमापतन्तं विलोक्य सः ।
शकं मशकवन्मेने कम्बोजमजवन्नृपः ॥
भयोत्सृष्टविभूषाणां तेन केरलयोषिताम् ।
अलकेषु चमूरेणुश्चूर्णप्रतिनिधीकृतः ॥

विधारयः। उपधारयः । आधारयः। अपधारयः ॥२०१॥ इति कम्बोजादिः ॥

---

(१) कम्बोजश्चोलयवनौ मुरलः केरलः शकः । खसो जर्त्तो व्युपापेभ्यो धारयश्च मतो बुधैरिति कम्बोजादिसङ्ग्रहपद्यं गणरत्नमहोदधौ पठ्यतइति टिप्पण्यामुपलभ्यते ।

भर्गः करूषसुस्थालकश्मीराः केकयोरसौ ।
त्रिगर्त्तशाल्वकौरव्या भरतोशीनरौ क्वचित् ॥२०२॥

अतोऽप्राच्यभर्गादेरित्यनेन प्राच्यभर्गादिवर्जिताद्राष्ट्राख्याद्राजवाचिनः स्त्रियामतः श्लुग् भवति ॥ शूरसेनस्यापत्यं शूरसेनानां वा राज्ञी शूरसेनी । उशीनरी ॥ भर्गादिभ्यः । भार्गी । कारूषी । करूशइत्यन्यः । सौस्थाली । सुस्थल इति भोजः । कश्मलमीरयत्यपनयतीति कश्मीरः । ततोऽञ् । काश्मीरी यथा—काश्मीरीकुचकुम्भविभ्रमकरः शीतांशुरभ्युद्गतः ॥

केकयस्यापत्यं केकयानां वा राज्ञी । मित्रयुप्रलयकेकयस्येय् यादेरित्वति । आरैजियादेरिति च । कैकेयी ॥

तं कर्णमूलमागत्य रामे श्रीर्न्यस्यतामिति ।
कैकेयी शङ्कयेवाह पलितच्छद्मना जरा ॥

उरसस्यापत्यम् औरसी । उरस्इत्यन्यः । त्रिगर्त्तस्यापत्यं त्रिगर्त्तानां वा राज्ञी त्रैगर्त्ती ॥ शाल्वस्यापत्यं शाल्वाना वा राज्ञी । ह्रस्वत्वादणि नेञ्प्रत्यये शाल्वाद्वि स उच्यते । शाल्वी । कौरवी । कौरव्यशब्दः क्षत्रियसमानवचनोऽस्ति तस्मादञ् क्वचिदिति शाकटायनेन भरतोशीनरशब्दावुत्सादिषु पठ्येते । तयोरिहोपादानात्सत्यप्यणपवादे चेत्यस्मिन्नुत्साद्यञं बाधित्वाञेव भवतीति ज्ञाप्यते । तेन भरतानां राजानो भरताः । उशीनराणाम् उशीनरा इति राज्ञि श्लुक् सिद्धा । उत्साद्यञि त्वगोत्रत्वान्न स्यात् । स्त्रीणां राज्येऽनधिकाराद्राजनि प्रत्ययो न भवतीति भोजः ॥ २०२ ॥ इति भर्गादिः ॥

बाहुः स्यात्खरनादिपुष्करसदौ प्राकारमर्द्यर्जुनौ—
जङ्घाशृङ्खलतोदिविन्दुशिरसः संकर्षणोदश्वितौ ।
चूडारामसुधामलोमवृकलाजीगर्तकृष्णानडुद्—
विज्ञेयाश्च वचाकुसप्तजलडाः साम्बोप्रनाकूपणी ॥२०३॥

अद्व्वाह्वादेरिञित्यनेन बाहुशब्दप्रभृतिभ्यस्तस्यापत्यमित्यर्थे इञ् भवति ॥ बाधते परबलमिति बाहुर्नाम कश्चिदाद्यपुरुषः । तस्यापत्यं बाहविः । खरवन्नदतीति खरनादी । तस्यापत्यं खारनादिर्नृपः । पौष्करसादिर्मुनिः । प्राकार मर्दयतीति प्राकारमर्दी । तस्यापत्यं प्राकारमर्दिर्नृपः । अर्जुनस्य आर्जुनिः । जङ्घायाः जाङ्घिर्नृप. । शृङ्खलानि तुदति मोचयतीति शृङ्खलतोदी

नृपः । तस्य शार्दूलतोदिः । शार्दूलनोदीति भोजः । बिन्दोः । बैन्दविर्ऋषिः । शिरस्शब्दस्तदन्तः केवलस्यापत्यप्रत्ययासंभवात् । हस्तिशिरसोऽपत्यं हास्तिशीर्षिः । यथा—कादम्बर्याम् । श्रूयते हि पुरा किल स्थूलशिरा नाम महातपा मुनिरखिलत्रिभुवनललामभूतामप्सरसं रम्भाभिधानां शशाप । तस्यापत्यं स्थौलशीर्षिः । सङ्कर्षणस्य सांकर्षणिर्नृपः । सङ्कर्षणस्यादन्तत्वादिञि सिद्धे पाठः । शिवाद्यृषिवृष्णिकुर्वन्धकादिति विशेषवचसा प्राप्तस्याणो बाधनार्थः । एवमदन्तेषु सर्वेष्वपि द्रष्टव्यम् । उदश्वितः । औदश्वितिर्ऋषिः । चूडेव चूडा काचित् । तस्याश्चौडिर्मुनिः । रामस्य रामिः । सुधाम्नः । सौधामिर्मुनिः । लोमन्शब्दस्तदन्तः । औडुलोमिः । शारलोमिः । वृकलायाः वार्कलिः । अजीगर्तस्य आजीगर्त्तिः । एत ऋषयः । कृष्णस्य कार्ष्णिः । यथा—

कार्ष्णिः प्रत्यग्रहीदेकः सरस्वानिव निम्नगाः ॥

अनडुहः आनडुहिर्ऋषिः । वचाकोः वाचाकविः । सप्तानाम् साप्तिः । जालडायाः जालडिः । सहाम्बया वर्तते साम्बः तस्यापत्यं साम्बिः । उपवाकोः । औपवाकविः । पणिनः पाणिनिः । एत ऋषयः ॥ २०३ ॥

दुर्मित्रानुरहत्सुनामककलोदङ्कासुरा मूषिका—
पञ्चोदञ्चुकुनामसत्यकगदाः स्युः क्षेमधृत्वी सखा ।
प्रद्युम्नध्रुवकानिवाकुलहकासंसेविमध्यंदिना—
वल्मीकस्तृणबिन्दुशूरध्रुवकाउद्दालकाष्टारुणाः ॥२०४॥

दुर्मित्रायाः दौर्मित्रिः । अनुरहतः आनुराहतिः । सुनाम्नः सौनामिः । सुदामन्नित्यन्यः । कक्कलायाः कार्कलिः । उदङ्कस्य औदङ्किः । असुरस्य आसुरिः । मूषिकेव मूषिका । तस्या मौषिकिः । एतऋषयः । पञ्चानाम् पाञ्चिः । उदञ्चोऽपत्यम् औदञ्चिः । गणपाठान्नलोपाभावः । अर्चा वात्र गम्यते । अपर उदञ्चिति धातुमात्रं निर्दिशन्ति । तन्मते प्रातिपदिकाद्धातुरूपात्प्रत्ययः । यथा । उदीचोऽपत्यम् औदीचिः । केचिद् उदञ्चित्यत्रोकारमुच्चारणार्थं न मन्यन्ते तन्मते । औदञ्चविः । कुनाम्नः कौनामिर्नृपः । सत्यकस्य सात्यकिर्नृपः । गदस्य गादिर्नृपः । क्षेमधृत्विनः । क्षैमधृत्विः । सख्युः । साखिः । प्रद्युम्नस्य प्राद्युम्निः । ध्रुवकायाः ध्रौवकिः । निवाकोः । नैवाकविः ।

लहकायाः लाहकिः। लगहेत्यन्यः। एतेऋषयः। संसेविनः। सांसेविर्ऋषिः। मध्यंदिनस्यर्षेः माध्यंदिनिः। वल्मीकस्यर्षेः वाल्मीकिः। यथा—

इति राज्ञा स्वयं पृष्टौ तौ वाल्मीकिमशंसताम्।

तृणविन्दोर्मुनेः। तार्णविन्दविः। शूरस्य यदुविशेषस्य शौरिः। ध्रुवकायाः ध्रौवकिर्नृपः। उद्दालकस्यर्षेः औद्दालकिः। अष्टानाम् आष्टिः॥ अरुणस्यर्षेः आरुणिः॥ २०४॥

शर्मा देवाग्निमद्रेन्द्राद् उपविन्दुसुधावतौ।
अजधेनुर्बलाका स्यादुपबाहुयुधिष्ठिरौ॥२०५॥

दैवशर्मिः। आग्निशर्मिः। माद्रशर्मिः। ऐन्द्रशर्मिः। औपविन्दविः। सौधावतिः। स्वधावदित्यन्यः। आजधेनविः। शकटाङ्गजस्त्वजादिभ्यो धेनोर्भ्राल्लयणाद्वेति सूत्रद्वयमाह। वालाकिः। औपबाहविः। एत ऋषयः। यौधिष्ठिरिः॥ २०५॥

उत्तानपादकश्यपविदाः सुमित्राथ नगरतो मर्दी।
माषशराविच्छगलावटाकुभगलाशिवाकवो गलडा॥२०६॥

उत्तानपादस्यर्षेः औत्तानपादिः। ध्रुवः।

औत्तानपाद भद्रं ते तपसा परितोषितः।

इत्यपि दृश्यते। कश्यपस्यर्षेः काश्यपिः। गरुडाग्रजः काश्यप इत्यन्ये। विदस्यर्षेः वैदिः। शोभनानि मित्राणि यस्याः सुमित्रा। तस्याः सौमित्रिः। लक्ष्मणः। यथा— सौमित्रिणा तदनुसंसृजसे मुहूर्त्तम्॥

नगरमर्दिनः। नागरमर्दिर्नृपः। माषशराविणऋषेः। माषशराविः। छगलायाः—छागलिर्ऋषिः। वटाकोर्ऋषेः। वाटाकविः। वाटाकुरित्यन्ये। भगलाया अपत्यम् भागलिर्ऋषिः। शिवाकोर्ऋषेः। शैवाकविः। गलडायाः गालडिः॥२०६॥

डत्वे पाडिः पषो भूयः संभूयोऽम्भोऽमितौजसाम्।
सलोपउदकस्योदः कृताकारः शलङ्कु च॥२०७॥

पषाम् पाडिः। भूयसः सम्भूयसोऽम्भसोऽमितौजस उदकस्य शलङ्कोश्च ऋषेः। भौयि.। साम्भूयिः। आम्भिः। आमितौजिः। औदिः। शालङ्किः।

भूय-शब्दो भोजमतेन । केचिदत्रोदकभूयस्सम्भूयश्चिति सामान्येन पठन्ति । तन्मते । औदकिः । भौयसिः । साम्भूयसिरिति भवति । अत्र गोत्रादिभूता अगोत्रादिभूताश्च प्रत्येतव्याः साधारण्येनोपादानात् ॥ आकृतिगणोऽयम् । तेन नूनामनूअमित्राप्रभृतयो द्रष्टव्याः ॥२०७॥ इति बाह्वादिः ॥

व्यासः सुधातृवरुटौ निषादचण्डालविम्बयुक्तौ च ।

व्यासादीनामकञ्चेत्यनेन व्यासादेः शब्दगणादिञ् भवति । तत्सन्नियोगेचाकञादेशः । व्यासस्यापत्यम् वैयासकिः । एवं सौधातकिः । वारुटकिः । नैषादकिः । चाण्डालकिः । वैम्बकिः । व्याससुधात्रोरणोऽपवादः । कारुलक्षणस्येञ्ञ विधेयः । शेषाणामिञस्त्येव । केचिदत्र व्याघ्रकर्माराग्निशर्मणोऽपि पठन्ति । वैयाघ्रकिः । कार्मारकिः । आग्निशर्मकिः । यथा—

यद्वन्न वैयासकिवैम्बकी वा सौधातकिं चेह परिस्पृशन्ति ।
चाण्डालकिर्वारुटकिश्च नैषादकिश्च तद्वद्दुरितानि मा वः ॥ इति व्यासादिः ।

कुरुशूर्पणायबृहतीकाराः कारो वडभ्याश्च ॥२०८॥

कुर्वादिभ्य इत्यनेन कुर्वादेः शब्दगणाड्ण्यप्रत्ययो भवति । कुरोर्ब्राह्मणस्यापत्यम् । कौरव्यः । यथा—

कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलम् ॥

तिकादित्वात् फिञपि । कौरवायणिः । उरसादेश्चाञित्यञ् पुनराभ्यां बाधितोऽपत्ये न भवति । कौरव्यशब्दस्य क्षत्रियवचनस्य तिकादिपाठात् । कौरव्यायणिः । शौर्पणाय्यो मुनिः । वार्हतीकार्य्यः । वाडभीकार्य्यः ॥२०८॥

ज्ञेया वाग्रथकारगर्गरमुराः कैशोरिचप्पट्टकौ,
सत्यंकारचफट्टकौ च हृदिकः कापिञ्जलादिः कविः ।
दामोष्णीषिकुटार्द्रवृत्तविमतिश्यापुत्रहन्त्रेरकास् ,
तक्षाशुभ्रशकन्धुशङ्कुपितृमच्छाकीनपिण्डीपुराः ॥२०९॥

वाचः । वाच्यः । रथकारस्य राथकार्य्यः । त्रैवर्णिकेभ्यः किञ्चिन्न्यूना रथकारजातिः । तद्वचनोऽयं गृह्यते । यस्तु कारवाची तस्मादिञपि । गर्गरस्य गार्गर्य्यः । मुरस्य राज्ञः मौर्य्यः । किशोरस्यापत्यं कैशोरिः । तस्यापत्यं युवा कैशोर्य्यः । भोजस्तु किशोरस्य कैशोर्यो राजेत्याह । चप्पट्टकस्यर्पैः। चाप्पट्टक्यः।

स्वयंकारस्य सार्यंकारः । चफट्टकस्य नृपस्य चाफट्टक्यः । हार्दिक्यः । मुञ्च हार्दिक्य शङ्काम् । वृष्णिलक्षणेऽणि । कापिञ्जलादेरपत्यं गुर्वायत्तम् कापिञ्जलाद्यः । वेदकृद्रूपिः । काव्यः शुक्रः । दासोष्णीषेरपत्यं युवा दासोष्णीष्यो मुनिः । कुटस्य कौटरः । आर्द्रवृक्षस्य आर्द्रवृक्ष्यो मुनिः । विमतेः वैमत्यः । मनिरित्यन्यः । मतिमदित्यप्यन्यः । श्यापुत्र्यः । श्यावपुत्र इति भोजः । हन्तुः। हान्त्र्यः । हन्त्रिय इति वामनः । हनस्तिप्रत्यये हन्तिरित्यन्यः । एरकायाः । ऐरक्यः । ऐडकेरन्यः । तक्ष्णः । ताक्ष्ण्यः । पाठसामर्थ्यात्कारुलक्षणमिञ्ञं बाधते शिवादिपाठाच्च । ताक्ष्णः । शुभ्रस्य शौभ्र्यो राजा । शुभ्रादित्वाड्ढगपि समानविषयत्वात् । शकन्धोः शाकन्ध्यः । शाकम्भूरित्यन्यः । शाङ्क्व्यः । बहुषु शाङ्क्व्याः । शाङ्क्व्या स्त्री । गर्गादिपाठात्पौत्रादौ यञ् । शाङ्क्व्यः । बहुषु यञ्लुक् । शङ्कवः । स्त्रियां शाङ्क्व्यायनी । पितृमतः पैतृमत्यः । पितृमन्तुरित्यन्यः। तन्मते पैतृमन्तव्यः । शाकिनः शाक्यः । इनस्य ऐन्यः। पिण्डराः। पैण्डरः । पुरस्य पौर्य्यः ॥ २०९ ॥

शाकः शलाकागणकारदभ्राः, पीलाभ्रवैवाकविभर्तृमूढाः ।
शालीनकर्त्रैजनितान्तवृत्ताऽजमारकश्यावरथाश्च वेनः ॥२१०॥

शाकं शाकमिति य आह स शाकः । तस्य शाक्यः । शलाकाया शालाक्यः । गणकारस्य गाणकार्य्यः । गणकारिरित्यन्यः । दाभ्र्यो नृपः । दर्भ इति वामनः । पीलायाः । पैल्यः । आभ्र्यः । विवाकोरपत्यं वैवाकविः । तस्यापत्यं युवा वैवाकव्यः । वैवाभविरित्यन्यः । भार्त्र्यः । मौढ्यः । शालीन्यः । कार्त्र्यः । ऐज्यः । नैतान्तवृत्त्यः । आजमार्यः । अजमार इत्यन्यः। श्यावरथ्यः । वैन्यः । एते राजानः। वामनादयस्तु छन्दसि वैन्यो भाषायां तु वैनिरित्याहुः ॥२१०॥

वानुजिः कर्णकारश्च केशिनीपथिकारिणौ ।
श्याप्रथो वान्तवृक्षश्च श्यावनायश्च मङ्गुपः ॥२११॥

यनोर्जातः यनुजः । तस्यापत्यं यानुजिः । तस्यापत्यं युवा । वानुज्यः । वातकिरिति भोजः । कार्णकार्य्यः । कार्णकारिरित्यन्यः । राजा । कैशिन्याः । कैशिन्य । इन्नन्तपाठसामर्थ्यादेव स्त्रीत्वानिवृत्तिः । स्त्रीत्वनिवृत्तौ हि भोऽनड्वो हो गित्यणादावित्यनेन न लोपः स्यात् । पाथिकार्यः । पथिकार

इति भोजः। श्याप्रथ्यः । श्यावप्रथ इति कश्चित् । वान्तवृक्ष्यः । श्यावनाय्यः । माङ्कुष्यो राजा । मङ्गूष इत्यन्यः । कविविसतिपीलाशलाकैरकाकेशिनीप्रभृतीनां ढणि प्राप्ते। हृदिकाद्वृष्णिलक्षणेऽणि। अन्येषां त्विञि प्राप्ते ण्यविधिः॥ आकृतिगणोऽयम्। तेन । अविसारकषण्डाकैन्द्रजालिकूटप्रभृतयो द्रष्टव्याः॥२११॥

इति कुर्वादिः ॥

शिवः प्रोष्ठश्चण्डो जटिलकवतण्डौ बधिरकः,
पिटाकस्तृक्षाकः पिटकपरिलौ प्रोष्ठिकमुनी ।
ककुत्स्थः खञ्जारस्तृणमसुरकर्णौ जलह्रदो,
विरूपाक्षः पिष्टः कहयवडबाभूमिककुभाः ॥२१२॥

शिवाद्यृषिवृष्णिकुर्वन्धकादित्यनेनापत्यमात्रेऽण् भवति । शिवस्यापत्यम् शैवः । एवं प्रौष्ठः। चाण्डः । जाटिलकः । जटिलिकेति भोजः । वातण्डः । बाधिरकः । बधिरिकेति भोजः । पैटाकः । तार्क्षाकः । पैटकः । पारिलः । प्रौष्ठिकः । मौनः । ककुदि तिष्ठति ककुत्स्थः । तस्य काकुत्स्थः । खाञ्जारः । खञ्जेर इति भोजः । तार्णः । नडादिपाठात् तार्णायनः । मासुरकर्णः । जलह्रदइव जलह्रदः । तस्य जालह्रदः । संस्कृते द्विर्वचनाभावे संयोगपरोऽपि न गुरुः । यथा—स्पृष्टं त्वजेत्यपह्नियः खलु कीर्त्तयन्ति ॥

वैरूपाक्षः । पैष्टः । काहयः । कहूयइत्यन्यः । वडबेव वडवा । तस्या वाडवः। विदिद्युते वाडवजातवेदसः । भौमः । मङ्गलः । काकुभः ॥ २१२ ॥

गङ्गाक्रुञ्चाकोकिलायस्कलह्या, द्रुह्यः पर्णः कर्णमञ्जीरकौ च ।
रेखस्तक्षा वर्त्तनाक्षःकहोडः,सन्धिर्लेखोभूरिजम्भोर्णनाभाः२१३

गाङ्गः। शुभ्रादिषु तिकादिषु च पाठात् । गाङ्गेयः । गाङ्गायनिः । क्रौञ्चः । कौकिलः । यथा—स कौकिलश्यामवनेन कूजत्क्रौञ्चेन सिप्रोपतटेन गच्छन् ॥

यास्कः । लाह्यः । द्रौह्यः । पार्णः । कार्णः । माञ्जीरकः । मजिरकइत्यन्यः । रैखः । ताक्ष्णः । कुर्वादित्वात् ताक्षण्यः । वार्त्तनाक्षः । अन्यस्तु वर्त्तनश्चासौ ऋक्षश्च (१) वार्त्तनर्क्षइत्याह । काहोडः । सान्धः । लैखः । भौरः । जाम्भः । जम्बइत्यन्ये । और्णनाभः ॥ २१३ ॥

(१) वर्त्तनश्चासौ ऋक्षश्च वर्त्तनर्क्षस्तस्य वार्त्तनर्क्ष इतिपा० ।

दण्डो रोधः कोहितैलासपत्न्य आर्यश्वेतापर्षिकागोपिकाः स्युः।
खञ्जालश्चालेखनोब्रह्मगुप्तश्चायःस्थूणःस्यान्नभागोविपाट्च २१४

दाण्डः। रौधः। कौहितः। ऐलः। सापत्नः। आर्यश्वेतः। पार्षिकः। गौपिकः। खाञ्जालः। आलेखनः। सुलेखन इति भोजः। ब्राह्मगुप्तः। वामनस्तु नास्य पाठमङ्गीकुरुते। आयःस्थूणः। नाभागः। नाभाक इत्यन्यः। वैपाशः। कुञ्जादिपाठाद् वैपाशायन्यः॥ २१४॥

भलन्दनानभिम्लानतृणकर्णकलापिनः।
जरत्कारूः सुपिष्टश्च कुठारश्च खदूरकः॥ २१५॥

भालन्दनः। भलन्द इत्यन्यः। कलन्दन इति भोजः (१)। आनभिम्लानः। तार्णकर्णः। कालापः। जारत्कारवः। जरत्कारुशब्दादतएव ज्ञापकात् स्त्रियामूङ्। यस्तु मुनिवचनस्तत्पत्नीवचनश्च जरत्कारुशब्दस्तस्मादौत्सर्गिकोऽण्। सौपिष्टः। कौठारः। कुथामियर्त्ति कुथारइत्यन्यः। खादूरकः॥२१५॥

विश्रवणरवणखञ्जनकुपिञ्जलपृथोत्क्षिपापुरोहितिकाः।
कुरुपाण्डुहस्तिपादा वृष्णिकखर्जूरकर्णौ च॥२१६॥

वैश्रवणः। रावणः॥ रावणावग्रहक्लान्तमिति वागमृतेन सः॥

विश्रवसोऽपत्यं वाक्यमेव। विश्रवणरवणाभ्यां तु नित्यं वृत्तिविषयाभ्यां प्रत्ययः। अन्ये तु पाश्च विश्रवसो विश्लोपश्च वेत्यनेन सूत्रेण वैश्रवणरावणशब्दौ साधयन्ति॥ खाञ्जनः। कौपिञ्जलः। पार्थः॥

पार्थाननं वह्निकणावदाता दीप्तिः स्फुरत्पद्ममिवाभिपेदे॥ औत्क्षिपः। पौरोहितिकः। रोहितिकेति भोजः। कौरवः। कुर्वादिपाठाङ्ण्यः। कौरव्यः। क्षत्रियवचनात्तु कुरुकोसलेत्यादिना ण्यः। तस्य बहुषु श्लुक् कुरवः। पाण्डवः। पाण्डवा यस्य दासाः। शुभ्रादिपाठात् पाण्डवेयः। अत्र कुरवो जनपदस्तस्य राजा पाण्डुः। यस्तु राष्ट्राख्यस्ततः पाण्डोर्ड्यणि। पाण्ड्यः। बहुषु श्लुक्। पाण्डवः। तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे।

इति तु चिन्त्यम्। हस्तिपादस्य हास्तिपदः। अतएव गणपाठात्पादस्याणि। पद्भावः।

---

(१) भलन्दनइति श्रीभोजइति पा०।

कौपिञ्जलः पिञ्जलवाजिनां तं तं हस्तिना हास्तिपदः प्रपेदे ।
स ब्राह्मगुप्तो भुजवीर्य्यगुप्तं रथेन कौण्डोपरथोऽन्वयासीत् ॥
वृष्णिरिव वृष्णिकः । तस्य वार्ष्णिकः । खार्जूरकर्णः ॥
खारर्जूरकर्णेन धृतातपत्रो मायूरकर्णोद्धुलचामरौघः ।
सापत्नयुग्मानुगतोऽध्ययोध्यं स रावणारातिरिवावभासे ॥ २१६ ॥

उरलः कहूषकोहडहेहयगोपालिकाश्च(१) गोफिलकः ।
परिषककुण्डोपरथौ त्रिवणादेशे सति त्रिवेणी च ॥२१७॥

औरलः । काहूषः । कौहडः (२) ।
तमन्वयुः खाञ्जनमाञ्जरीकमौपिष्टसौलेखनतार्णपार्णाः ।
काहोडजालहृदवार्त्तनाक्षक्षैरह्रदप्रौष्ठिकतार्णकर्णाः ॥ हैहयः। गौपालिकः॥
काहूषपैष्टौरलयास्कलाह्वद्रौह्यानभिस्नानकभौरमौनाः ।
तार्क्षाकगौपालिकगौपिकार्य-श्वेतादयस्तं परितः प्रसस्रुः ॥
गौफिलकः । पारिषकः । कौण्डोपरथः। त्रिवेणी नदी तस्याः। त्रैवणः २१७

उत्कारूक्षीरह्रदौ सुरोहिकाकपिलिकर्ष्टिषेणाः स्युः ।

औत्कारवः । उत्कारुशब्दस्यातएव पाठाद्गुङ् भवति । क्षैरह्रदः । सुष्ठु रोहति सुरोहिका । तस्याः सौरोहिकः । कापिलिकः । आर्ष्टिषेणः । सेनान्तलक्षणबाधनार्थोऽस्य पाठः । केषांचिद् अतइञि प्राप्ते केषाञ्चिद् द्व्यच इतो ढञि प्राप्ते च पाठः ॥ एते शिवादयोऽण्प्रत्ययान्ता अपिवाचकाः काकुत्स्थादयस्तु राजवाचकाः प्रतीता एव । क्रौञ्चादीनां त्वर्थो व्याख्यात एव । आकृतिगणोऽयम् । तेन सिलिन्दप्रभृतयो द्रष्टव्याः ॥ इति शिवादिः ॥

शुभ्रशलाकाशुकविशदेवतरा गन्धपिङ्गलाशकुनी ॥२१८॥

द्व्यचःशुभ्रादिभ्यश्च ढगित्यनेन शुभ्रादेर्गणाड्ढण् भवति। शुभ्रस्यापत्यम् शौभ्रेयः । शालाकेयः । शौकेयः । वैशेयः। दैवतरेयः । गान्धपिङ्गलेयः । नदीनाम्न्यणि । शाकुनेयः ॥२१८॥

कर्षौ विष्टपुरः शकन्धिविधवाशालूकगोधाम्बिका-
लेखाभ्रूविकसाजवास्तिशकलाशोकाश्वत्रीजाश्मनः ।

---

(१) कहोडहेहय० इतिपा० । (२) कहोडस्य काहोडइति पा० ।

गङ्गापाण्डवभारताजिरदिशः शुक्रोग्रविग्रेतरा—
ऽणीवालीढसुदन्तभाणशातलाः कर्पूरकद्रू तुदः ॥२१९॥

कार्षेयः । वैष्टपुरेयः । विष्टपर(१) इत्यन्यः । शाकन्धेयः । वैधवेयः । क्षुद्राभ्यो वा णेर इति पक्षे णेरप्रत्ययबाधनार्थः । शालूकेयः । गौधेयः । गोधाया ढ्रगपि । गौधेरः । आरगुदीचामित्यारगपि । गौधारः । अर्थव्यवस्था तु लोकतः । तेन योऽहिना गोधायां जन्यते स गौधेरो गौधारश्च भवति । वामनस्तु द्वयमपि न मन्यते कारणं न विद्मः । आम्बिकेयः । मानुषीनाम्न्यणि । लैखाभ्रेयः । वैकसेयः । चतुष्पाज्जातिवाचिनी कृकासेति भोजः । किमपि कसतीति किकसेत्यन्यः । मानुषीनाम्न्यणि । आजवस्तेयः । गृष्ट्यादिपाठाड्ढञपि । शकलस्य शाकलेयः । आशोकेयः । मानुषीनाम्न्यणि । आश्वेयः । बैजेयः । बीजाश्व इत्यन्यः(२) । आश्मेयः । अश्वादिपाठात्—आश्मायनः । गाङ्गेयः । पाण्डवेयः । भोजस्तु पाण्डुशब्दाड्ढकि । अकद्रुपाण्ड्वोर्ढे उलोप इत्युकारलोपाभावं मन्यते । अत्र वामनमतानुसारेण पाण्डवशब्दः पठितः । भरतस्यापत्यम् । उत्साद्यञि । भारतः । तस्यापत्यं युवा । भारतेयः । भरत इति भोजः । आजिरेयः । दैशेयः । शौक्रेयः । औग्रेयः । वैग्रेयः । इतरस्य इतराया वा । ऐतरेयः । आणीवेयः । आणीविरित्यपरः । आलीढेयः । सौदन्तेयः । भाणेयः । शातलेयः । शबल इत्यप्यन्यः । कार्पूरेयः । कद्रुर्नाम दिव्या गौः । तस्याः काद्रवेयः । यस्तु सञ्ज्ञायामूङन्तः कद्रूशब्दस्तस्य ढण् अस्त्येव । तौदेयः ॥२१९॥

कुवेरिकान्यतरविमातृबन्धकी कुमारिकाः परिधिमृकण्डुविभ्रयः ।
किशोरिकाजरतिखदूररोहिणी कुठारिकारत्वतिथिसुदक्षवादनाः ॥

कौवेरिकेयः । मानुषीनाम्न्यणि । आन्यतरेयः । विरुद्धाया मातुः वैमात्रेयः । असोदर्यो भ्राता । बान्धकेयः । बान्धकिनेयइत्यपि (३) । क्षुद्राभ्यो वा णेर इति णेरप्रत्यये—कौमारिकेयः । मानुषीनाम्न्यणि । पारिधेयः । मार्कण्डेयः । मृकण्डुरित्यपि वामनः । कथं मार्कण्डः । मृकण्डइति प्रकृत्यन्तरम् । तेन त्र्यण्यणविष्यति । वैभ्रेयः । गृष्ट्यादिपाठाड्ढञपि । कैशोरिकेयः ।

---

(१) विष्टपुर इति पा० । (२) विजाश्वस्य वैजाश्वेय इत्यन्य इति पा० ॥
(३) बन्धकी स्वैरिणी तस्या अपत्यं बान्धकिनेय इति पा० ।

मानुषीनाम्न्यणि । जरतिनः । जारतेयः(१) । खादूरेयः । रौहिणेयः । रोहिणी मानुषी गौरपि । कौठारिकेयः । मानुषीनाम्न्यणि । आतिथेयः । सौदक्षेयः । वादनेयः ॥ २२० ॥

बलीवर्दिशतद्वारशलाकाभ्रूशलाथलाः(२) ।
अकशायो(३)ऽनुदृष्टिश्च कृकलासप्रवाहणौ ॥२२१॥

बालीवर्देयः । शातद्वारेयः । शालाकाभ्रेयः । शालाथलेयः(४) । आकशायेयः(५)आनुदृष्टेयः । कार्कलासेयः । एष चतुष्पाज्जातिः । प्रावाहणेयः ॥२२१॥

जीवभारमरुक्मिण्यो वायुदत्तसुवक्षसौ ।
मृदुमृदौ सुदामा च वासिष्ठे श्यामलक्ष्मणौ ॥२२२॥

जैवेयः । भरमस्यापत्यं भारमः । तदपत्यं युवा । भारमेयः । भरमइति भोजः । रुक्मो वर्णः । सोऽस्या अस्तीति रुक्मिणी । तस्या रौक्मिणेयः । मानुषीनाम्न्यणि । वायुदत्तेयः । सौवक्षसेयः। मार्दवेयः । उर्ढ इत्यनेनोलोपे । मार्दयः । सौदामेयः । श्यामेयः । लाक्ष्मणेयः। वासिष्ठश्चेत् । अन्यत्र श्यामायनः । अश्वादिपाठात् । श्यामिरिति वामनः । लाक्ष्मणिः ॥ २२२

गोदन्तकुशाम्बानिधिमकष्टुजिह्माशिनः खडोन्मत्ताः ।
श्वब्रह्मकृतशताहरयमष्टवष्टिकसुनामधर्मिण्यः ॥२२३॥

गौदन्तेयः । कौशाम्बेयः । आनिधेयः । माकष्टेयः । जैह्माशिनेयः (६) दाण्डिनायनेत्यादिनाऽन्त्याजादिलुगभावः । खाडोन्मत्तेयः । एषा नदी खर इवोन्मत्ता खरोन्मत्तेत्यभयनन्दी । शौवेयः । ब्राह्मकृतेयः। शाताहरेयः । यामष्टेयः । मघष्टुरित्यन्यः । टैकेयः । सुनाम्नः । सौनामेयः । बाह्वादित्वात् । सौनामिः। धार्मिणेयः। मानुषीनाम्न्यणि ॥ २२३ ॥

कुषीतकविकर्णौ च काश्यपे परिकीर्त्तितौ ।

---

(१) जरतिर्जरठा तस्या जारतेयः इति पा० । (२) शलाष्मना इति पा० । (३) अकशापो इति पा० । (४) शालाष्मलेय इति पा० । (५) आकशापेय इति पा० । (६) जैह्मासिनेय इति पा० ।

कौषीतकेयः । वैकर्णेयः । काश्यपश्चेत् ॥ अन्यत्र कौषीतकिः । वैकर्णिः । एते प्रायेणर्षिवाचकाः । बहूनामिञि प्राप्ते केषाचिद्दणि ढञि च प्राप्ते पाठः । आकृतिगणोऽयम् । तेन कुदन्तानुदन्तशतक्रतप्रभृतयो द्रष्टव्याः ॥

इति शुभ्रादिः ॥

**कल्याणी सुभगा मध्या ज्येष्ठानुद्दृष्टिबन्धकी ॥२२४॥**

कल्याण्यादेर्डिन् चेत्यनेनैतस्मादपत्ये ढण् तद्योगे ङिनादेशश्च । कल्याण्या अपत्यम् काल्याणिनेयः । सौभागिनेयः । माध्यिनेयः । ज्यैष्ठिनेयः ॥

कृते कानिष्ठिनेयस्य ज्यैष्ठिनेयं विवासितम् ।
को नन्नमुषितप्रख्यं बहु मन्येत राघवम् ॥

भरतस्य राममित्यर्थः । आनुदृष्टिनेयः । बान्धकिनेयः ॥ २२४ ॥

**मध्यमा च परस्त्री च प्रोक्तानुसृष्टिदुर्भगे ।**
**वलीवर्दी कनिष्ठा च जारस्त्री जरती तथा ॥ २२५ ॥**

माध्यमिनेयः । परस्य स्त्री परस्त्री । तस्याः पारस्त्रैणेयः । यथा—

पारस्त्रैणेयपुत्रव्ययशिथिलशुचं शक्रमाराधयाव ॥

यदा तु परा चासौ स्त्री च । परस्त्री । तस्याः कर्मधारये परस्त्रियः परशुश्चेत्यनेन पारशव इति भवति । अन्ये तूभयथापि पारस्त्रैणेय इति मन्यन्ते । आनुसृष्टिनेयः । दौर्भागिनेयः ॥

कृते सौभागिनेयस्य भरतस्य विवासितौ ।
पित्रा दौर्भागिनेयौ यौ पश्यतं चेष्टितं तयोः ॥

वलीवर्द्याः वालीवर्दिनेयः । कानिष्ठिनेयः। जारस्त्रैणेयः । जारतिनेयः। कल्याण्यादीनां शुभ्राद्यन्तत्वाड्ढणि सिद्धे ङिनर्थं वचनं शेषयोरुभयार्थम् ॥२२५॥

इति कल्याण्यादिः ॥

**गृष्टिर्हृष्टिस्तथा विश्रिर्वालिकुद्री च मित्रयुः ।**
**हल्यायुक्तोऽजबस्तिश्च गृष्ट्यादौ विदुषां मतः ॥ २२६ ॥**

गृष्ट्यादेर्ढञित्यनेनास्माड्ढञ् । गृष्टेरपत्यं गार्ष्टेयः । अस्य चतुष्पात्स्वा-ढुञि सिद्धे तद्बाधया मनुष्यादिवृत्त्यर्थं ग्रहणम् । हार्ष्टेयः । वैश्रेयः । वालेयः ।

कौद्रेयः । मित्रयुप्रलयकेकयस्येय् यादेरित्यनेनादेरियादेर्यंच् । मैत्रेयः । हलेः । हालेयः । आजवस्तेयः ॥

विश्ययजमरिलभ्यां शुभ्रादित्वाड्ढणपि । गार्ग्यस्यापत्यं पूज्यमित्यादिविवक्षायामतइञिति विहितस्येञो जिणयार्थेभ्योऽणिञोरिति ञित्वाड्ढञः परस्येञः श्लुग् भवति । तेन गार्ग्येयः पिता । गार्ग्येयः पुत्र इत्यादिः । ढणः परस्य त्विञः श्रुतिरेव । शौभ्रेयः पिता । शौभ्रेयिः पुत्रः ॥२२६॥ इति शुभ्रादिः ॥

**रेवती कुक्कुटाक्षश्च ग्राहः कर्णवृकादिकः ।**
**मणिद्वाराश्वतः पाली स्याद् वृकाद्बन्धुवञ्चिनौ ॥२२७॥**

रेवत्यादेष्ठणित्यनेनास्माट्ठण् रेवत्या अपत्यम् रैवतिकः । कौक्कुटाक्षिकः । ढञिञोरपवादः । ग्राहः कर्णवृकादिकइति कर्णवृकावादौ यस्य स कर्णवृकादिकः । कार्णग्राहिकः । वार्कग्राहिकः । दाण्डग्राहिकइत्यन्ये । माणिपालिकः । दौवारपालिकः । आश्वपालिकः । ढणोऽपवादः । वार्कबन्धुकः । वार्कवञ्चिकः । ऋष्यणि प्राप्ते ॥ २२७॥ इति रेवत्यादिः ॥

**वाकिनः काकलङ्के च गाधेरश्चर्मिवर्मिणी ।**
**तथा कृतनलोपे स्तः कार्कट्यश्च निगद्यते ॥२२८॥**

वाकिनादेरित्यनेनास्मात् फिञ् भवति वा । कग् यथा प्राप्तं च । वाकिनस्यापत्यम् वाकिनकायनिः । वाकिनिः । काककायनिः । काकिः । लाङ्ककायनिः । लाङ्केयः । लाङ्ककायनिर्लाङ्किरिति भोजः (१) । गाधेरकायणिः । गाधेरिः । गारेटइति भोजः । चर्मिणश्चर्मिण्या वा चार्मिकायणिः । चार्मिणः । वार्मिकायणिः । वार्मिणः । पक्षे चार्मः । वार्म इति भोजः । कार्कट्यकायनिः । कार्कट्यः ॥२२८॥ इति वाकिनादिः ॥

**तिको यमुन्दौरससैन्धवोरसाः, संज्ञा शिखा देवरथोऽथ शल्यका ।**
**शुभःसुयामाकुरुशीतलोमका,गङ्गावरेण्यःकितवश्चतैतलः २२९**

तिकादेरित्यनेनैतस्मात् फिञ् भवति । तिकस्यापत्यम्—तैकायनिः । यामुन्दायनिः।उरसस्य क्षत्रियस्यापत्यम्—औरसः । तस्य औरसायनिः । सैन्ध-

(१) लङ्का—लाङ्काकायनिः । लङ्कशब्दं केचिदिच्छन्ति तन्मते लाङ्ककायनिरिति पा० ।

वायनिः । औरसायनिः । उर इति भोजः । सांज्ञायनिः । शैखायनिः । दैवरथायनिः । देवरइत्यन्यः । शाल्यकायनिः । शौभायनिः । शुभेत्यन्यः । सुयाम्नः । सौयामायनिः । कौरवायणिः । शैतायनिः । भैतायनिरित्यपि ॥ लौमकायनिः । गाङ्गायनिः । क्षत्रियवृत्तिर्गङ्ग इत्यन्ये । वारेश्यायनिः । कैतवायनिः । तितलस्यापत्यं तैतलः । तस्य—तैतलायनिः ॥२२९॥

**ग्राम्यामित्रोदन्यकौरव्यरूप्या,बालानीलौ बह्यकाखल्वके च ।**
**शाट्योयज्ञश्चन्द्रमालङ्कवश्च, दक्षश्चोखारूक्षगोकक्ष्यबन्धाः ॥**

ग्राम्यायणिः । आमित्रायणिः । औदन्यायनिः । कौरव्यस्य क्षत्रियस्य । कौरव्यायणिः । ब्राह्मणवाचिनस्त्विञेव तल्लुचि च । कौरव्यः पुत्रः । रौप्यायणिः । वालायनिः । वालइति भोजः । वालशिखइत्यन्यः । नैलायनिः । बाह्यकायनिः । खाल्वकायनिः । खल्वेत्यन्यः । शटस्यापत्यं शाटयः । तस्य शाटयायनिः । याज्ञायनिः । चान्द्रमसायनिः । लाङ्कवायनिः । लाङ्कटम्—अणन्तमित्यन्यः । दाक्षायणिः । औखायनिः । रौक्षायणिः । गौकक्ष्यायणिः । बन्धायाः । वान्धायनिः । बिम्बइत्यन्यः ॥ २३० ॥

**ध्वजवदुतथ्यारथ्याः सुपामधैवरवसूरसारद्वाः ।**
**भौरिकिभौलिकिजाजलचैटयताश्चापि सैकयतः ॥२३१॥**

ध्वाजयतायनिः । ध्वाजवत इत्यन्यः । औतथ्यायनिः । आरथ्यायनिः । सुपाम्नः । सौपामायनिः । धैवरायणिः । वासवायनिः । औरसायनिः । आरद्वायनिः । भूरिकस्यापत्यं भौरिकिः । तस्य भौरिकायणिः । भौलिकायनिः(१) । जाजलिनोऽपत्यं जाजलः । तदपत्यं जाजलायनिः । चैटयतायनिः । सैकयतायनिः ॥ अदन्तानामिञि हलन्तानामणि यञि ञन्तानां फणि । आदन्तानां ढणि च प्राप्ते वचनम् । एते प्रायेणर्षिवाचकाः । आकृतिगणोऽयम् । तेन सैजयतचौपयतशैलालप्रभृतयो द्रष्टव्याः ॥२३१॥ इति तिकादिः ॥

**नडश्चरो वको मुञ्ज उपको लमको नरः ।**
**दासमित्रेतिकप्राणा द्वीपकिङ्करकातराः ॥ २३२ ॥**

---

(१) भुलिकस्यापत्यं भौलिकिस्तस्य भौलिकायनिरित्यधिकम् ।

नडाग्नहरितादीस् यञन्तात् फगित्यनेन नडादेर्गणात्पौत्रादावपत्ये फण् भवति । नडस्यापत्यं पौत्रादिः नाडायनः । चारायणः । त्राकायनः । मौञ्जायनः । औपकायनः । लामकायनः । नारायणः । दासायनः । मैत्रायणः । दासा मित्राणयस्य–दासमित्रः । तस्य दासमित्रायणः इत्यन्यः(१) । ऐतिकायनः । प्राणायनः । उपचारात् द्वीपस्थो मुनिर्द्वीपः । तस्य द्वैपायनः । द्वीपे जातो भवो वा । तदपत्यतया विवक्षित इत्येके । द्वीपेत्येवंनामा स्त्रीत्यन्ये । कैङ्कारायणः । कातरायणः २३२ ॥

चटकखरपशोणा लङ्कसङ्कुत्यनाट्या मिमतसुमतदुर्गब्रह्मदत्ताजलोहाः । तृणबदरकुमारस्तम्बचित्राग्रकाश्या–श्वमसिशकटदण्डान्निन्धजालन्धराश्च ॥२३३॥

चाटकायनः । चटकेत्यन्यः । खारपायणः । शौणायनः । लाङ्कायनः । साङ्कुत्यायनः । सुकृत्य इति भोजः । नटस्यापत्यं नाट्यः । तस्य नाट्यायनः । मैमतायनः । मित इत्यन्ये । सौमतायनः । दौर्गायणः । ब्राह्मदत्तायनः । आजायनः । लौहायनः । अलोह इत्यन्यः(२) । तार्णायनः । बादरायणः । कौमारायणः । स्ताम्बायनः । चैत्रायणः । आग्रायणः । काश्यायनः(३) । चमसिनः । चामसायनः । शकटमिव भारक्षमः तस्य शाकटायनः । दण्डिनः । दाण्डिनायनः । इन्धस्य ऐन्धायनः । जालन्धरायणः । जनन्धर इति भोजः । जलन्धर इत्यन्यः ॥२३३॥

कामुकोदुम्बरौ सायकः किङ्कलस्त्यास्मको बालिशः पिङ्गरः पिङ्गलः । हंसकः कातलः काथलः काश्यपो दण्डपाश्वाध्वराः शिंशपाहस्तिनौ ॥२३४॥

कामुकायनः । कामक इत्यन्यः(४) । औदुम्बरायणः । राष्ट्राख्यराजवृत्तौ त्वौदुम्बरिरिति स्यात् । सायकायनः । कैङ्कलायनः । त्यास्मकायनः । बालिशायनः । पैङ्गरायणः । पैङ्गलायनः । हांसकायनः । कातलायनः । काथलायनः ।

---

(१) दासायनः । मैत्रायणः । दासा मित्राणि यस्य स दासमित्रस्तस्य गोत्रापत्यं दासमित्रायण इति पा० । (२) अलोहशब्दं केचित्पठन्ति । तन्मते आलोहायनः इति पा० । (३) कास्यायनः इति पा० । (४) कामकायन इत्यधिकम् ।

काश्यपायनः । दाण्डपायनः । दण्डम इत्यन्यः(१) । आग्रायणः । आध्वरायणः । शांशपायनः(२) । हास्तिनायनः ॥ कीर्त्तिरेषा चतूरेफिका स्रग्विणीति वृत्तम् २३४

लिगुर्युगन्धरामित्रौ ब्राह्मणस्थिरकाश्वलाः ।
अग्निशर्मेतिशामुष्यपञ्चालाः सप्तलस्तिकः ॥२३५॥

लैगवायनः । यौगन्धरायणः । आमित्रायणः । ब्राह्मणायनः । स्थैरकायणः । आश्वलायनः । आग्निशर्मायणः । अग्निशर्मन् वृषगण इति वामनः(३) । ऐतिशायनः(४) । आमुष्यायणः । गणपाठात् षष्ठ्यलुक् । पञ्चालो ब्राह्मणगोत्रवाची । तस्य पाञ्चालायनः । क्षत्रियवाचिनस्तु पाञ्चालः । साप्तलायनः । सत्वल इत्यन्यः । तैकायनः ॥ २३५ ॥

ऋग्जनवृषगणकाव्याः केकरसुमनःशणाश्च वाजव्यः ।
क्रोष्टृशलङ्कू लोपे ब्राह्मणवाशिष्ठयोश्च कृष्णरणौ ॥२३६॥

आर्गायणः(५) । ऋगिन्ध इत्यन्यः । ऋग इत्यपरे । जानायनः । वार्षगणायनः । काव्यायनः । कैकरायणः । सौमनसायनः । शाणायनः । वाजव्यायनः । क्रोष्टृशलङ्कू लोप इत्यन्त्यवर्णस्येति शेषः । क्रौष्टायनः । शालङ्कायनः । कार्ष्णायनो ब्राह्मणः । कार्ष्णिरन्यः । राणायनो वाशिष्ठः । राणिरन्यः । अस्योदाहरणानि—

नाडायनिव्रीडजडेहनाभूषारायणिस्फारयचारुचक्षुः ।
विलोकयन्नाकायनिमुञ्जकुञ्जान्मौञ्जायनीमालवराजमेति ॥ १ ॥
किमैतिशायन्यसि(६)नीरसात्वंसख्यैतिकायन्यतिकौतुकंमे ।

---

(१) दण्डं पातीति दण्डपस्तस्य दाण्डपायनः । दण्डमशब्दं केचित्पठन्तीति पा० । (२) शैंशपायन इति पा० । (३) वृषगणे ऋषिगणे वर्त्तमानोऽग्निशर्मन्शब्दो नडादौ बोध्यः । अग्निशर्मणा ऋषेर्गोत्रापत्यम् आग्निशर्मायण इति वृत्तिमतम् । गणरत्नमहोदधौ तु वृषगणशब्दो नडादिरिति स्थितं तदनुरोधाद्वृषगण इति प्रथमान्तं बोध्यमिति टिप्पण्याम् ॥ (४) ऐतिसायन इति पा० । (५) ऋग्वेदाध्यापकः कश्चिदाचार्योऽप्युपचाराद्दृक् तस्य गोत्रापत्यम् । आर्चायनः । आर्गायण इति तु वर्द्धमानः । तत्र पदसञ्ज्ञा मृग्या इति टिप्पण्याम् । (६) दिङ्मात्रमुदाह्रियते । नाडायनो व्रीड जडां त्वपत्नीं चारायणीं चित्रकथां ब्रवीति । किमैतिशायन्यसि नीरसा त्वं सख्यैतिकायन्यति कौतुकं मे इति पा० ।

लघ्वौपकायन्युपयामलामकायन्ययंलोकललामभूपः ॥ २ ॥
स्राक्तामल्लायन्युपसर्पशालङ्कायन्यनङ्कालविलस्वनेन ।
प्रतीक्षतेत्वांपथिलैगवायन्येह्याग्निशर्मायणिशर्मणेनः ॥ ३ ॥
उत्तिष्ठकाश्यायनिकाश्यपायन्यागच्छकाव्यायनिकोविलम्बः ।
वलाश्वलायन्यनुकातलायन्याःकातरायण्यतिकातरासि ॥ ४ ॥
वीक्षस्वतैकायनिशंसकोऽयंशाणायनिक्षायुधवाणशाणः ।
प्राणायनिप्राणसमस्त्रिलोक्यास्त्रिलोकनारायणभूमिपालः ॥ ५ ॥
मैत्रायणाग्रायणबादरायणाश्वायणाजायनकामयोवः ।
भ्रुवेऽकरोद्वारुवनेयदीशःकर्त्तातदद्वायमिहावनीशः ॥ ६ ॥
दास्यस्मिदासायनकिंकरेवत्वांकैङ्करायण्यभिराधयिष्ये ।
स्यांकैङ्कलायन्यनुयायिनीतेमाचायनीवव्रजमांविहाय ॥ ७ ॥
जालन्धरामित्रपराङ्दृष्टेवांजव्यपाञ्चालपराश्वभूपः ।
सौकृत्यकौमारपराश्वभूयाद्दायन्यएपोऽध्वरसायनंवः ॥ ८ ॥
द्वैपायनीतोभवत्तायकायन्युपेहिदौर्गायणिदेहिमार्गम् ।
त्वरस्वचैत्रायणिचाटकायन्यौदुम्बरायण्यपमेतिभोगः ॥९॥
कुशाकटायन्यटसिस्तनाभ्यांकार्णोपितार्णायनिकिंदृशोनः ।
लौहायनीमाह्वयशत्रुधान्त्रिस्ताम्वायनिस्यास्यतितन्त्रितन्वः ॥१०॥
ऐकापिकापर्णायनिराणिराणायनादयांयिमन्त्रपर्यन्तान् ।
मात्राक्षणायन्यवहेलयेहामुष्यायणेःशनिविन्दगाने ॥ ११ ॥
किंत्राक्षदत्तायनिजोपमास्मेकिंसैमतायन्यगितंब्रवीषि ।
किंसौमतायन्यनमुन्मनास्त्वंकिंस्थैरकायण्यनयस्थितासि ॥ १२ ॥
दृशाकिमाचामतिघामत्रायन्यपेतिकिंवार्पगतायनीस्वन् ।
किमाध्वरायण्यनुबध्यसुद्वानकामुकान्यव्रुवदतेऽस्मान् ॥ १३ ॥
माहामकायन्यनुधावहं मानुगाभांगपायन्युपतिंत्रपेत्य. ।
सावित्रायणपनुर्पिङ्गलायन्युपैदिदृष्टोनृपमिक्रंगमः ॥ १४ ॥
कौहायणियाश्चपलोऽयमस्याशौणेनशौं[illegible] ।
[illegible] ॥ १५ ॥
[illegible] ।
[illegible] ॥ १६ ॥

आकृतिगणोऽयम् । तेनच्छागप्रभृतयो ज्ञेयाः ॥२३६॥ इति नडादिः ॥

हरितगविष्ठिरमठराः किंदासो मित्रयुः सृदाकुश्च ।
वह्यस्कप्रतिवोधौ निषादशबरौ पृदाकुश्च ॥२३७॥

अञन्ताद्धरितादेः फण् । अञ् विदादिपाठात् । अतउभयमपि दृश्यते ॥ हारितः। हारितौ। हरिताः। तदपत्यं प्रथस्यं हारितायनः। एवं गाविष्ठिरः। गाविष्ठिरायणः। माठराः। कश्चिद्गोपवनादिपाठं मन्यमानो माठरा इत्याह। माठरायणः। कैंदासः। कैंदासायनः॥ मित्रयुर्मुनिः। तदपत्यं मैत्रेयः। मैत्रेयायणः। वामनमते नास्य पाठः। सार्दाकवः। सार्दाकवायनः(१)। वाह्यस्कः। वाह्यस्कायनः। वरयस्क इत्यन्यः। प्रातिबोधः। प्रातिबोधायनः। नैषादः। नैषादायनः। अपत्यमात्रे—नैषादकिः। शाबरः। शाबरायणः। पार्दाकवः। पार्दाकवायनः। शकटाङ्गजस्त्वत्र सृदाकुपृदाकू न मन्यते ॥ २३७ ॥

बध्योगविष्णुवृद्धौ रथीतररथन्तरार्कलूषाः स्युः ।
दुहिताननान्दृपुत्रौ गविष्ठिलो भूस्त्रियौ पुनः परतः ॥२३८॥

बाध्योगः। बाध्योगायनः। वैष्णुवृद्धः। वैष्णुवृद्धायनः। वृष्णिवृद्धिरित्यन्ये। राथीतरः। राथीतरायणः। राथन्तरः। राथन्तरायणः। आर्कलूषः। आर्कलूषायणः(२)। अर्कलुष इत्यन्यः। अक्लुप इति कश्चित्। एते गविष्ठिलशब्दश्च अलुग्घरितादिफण्भाजो नान्ये शकटाङ्गजप्रभृतिमतेन। दौहित्रः। दुहितरः। दौहित्रायणः। नानान्द्रः। ननान्दरः। नानान्द्रायणः। पौत्रः। पुत्राः। पौत्रायणः। गाविष्ठिलः। गविष्ठिलाः। गाविष्ठिलायनः। पौनर्भवः। पुनर्भवः। पौनर्भवायनः। परा चासौ स्त्री च परस्त्री। तदस्या विदादित्वादञि तत्संनियोगेन। परस्त्रियाः परशुश्चेत्यनेन परशवादेशे च। पारशवः। बहुषु परस्त्रियः। तदपत्यं युवा—पारशवायनः। चन्द्राचार्येण यञञोर्बहुष्वस्त्रियामित्यत्र सूत्रेऽपत्यमात्रइत्येव वाह्या उत्सा इत्युदाहृतम्। रत्नमतिना तु हरितादयो गणसमाप्तिं यावदिति व्याख्यातम्। तन्मतानुसारिणा मयाप्येते किल निबद्धाः ॥२३८॥ इति हरितादिः ॥

---

(१) सृदाकु, पृदाकु, केचिदेतौ हरितादेः प्राक् पठन्ति। तन्मते हरितादेरिञ इत्यायनण् न भवतीत्यधिकम्। (२) आर्कलूखः। आर्कलूखायन इति पा० ॥

अश्वग्रीवाचपलसुमनोग्रीष्मधूम्राः पवित्रा-
धर्म्यौ बैल्यार्जुनगिरिवनाः क्षान्तकाणौ विशालः ।
गोमीवाग्मिप्रहृतकितवाश्वक्रामोदपादाः—
खर्जूरार्कस्वनशित्रविदाः श्यामगोलाङ्ककाशाः ॥२३९॥

अश्वविद्कुञ्जगर्गादिभ्योऽफाफ्फण्यञ इत्यनेन चतुर्भ्यो गणेभ्यः पौत्रादावर्थे चत्वारः प्रत्ययाः क्रमेण भवन्ति । अश्वस्यापत्यं पौत्रादिः आश्वायनः। आश्वायनाः । विदादित्वादञपि । आश्वः । ग्रैवायणः । चापलायनः । सौमनसायनः । ग्रैष्मायणः । अस्योत्सादौ पाठोऽनन्तरार्थोऽनपत्यार्थश्च । एवमुत्सशब्दोऽपि । धौम्रायणः । पावित्रायणः । धार्म्यायणः । धार्म्येत्यन्यः । बिलीनां क्षत्रियाणामपत्यं पौत्रादिः कुरुकोसलेत्यादिना ण्यचि । बैल्यः । तदपत्यं युवा बैल्यायनः । आर्जुनायनः । अस्य बाह्वादावनन्तरार्थः पाठः । गैरायणः । गिरिचपल इत्यपरे । वानायनः । वत इत्यप्यन्यः । क्षान्तायनः । काणायनः । वैशालायनः । गोमिनः । गौमायनः । वाग्मिनः । वाग्मायनः । प्राहृतायनः । कैतवायनः । चाक्रायणः । रामोदायनः । पादायनः । खार्जूरायणः । खर्जूल इत्यन्यः । आर्कायणः । अर्कस्वनेत्यन्ये । स्वानायनः । शैत्रायनः । वैदायनः । श्यामायनः । गौलाङ्कायनः । अपरे गोल अङ्क इति छिन्दन्ति । काशायनः । आकाश इति चन्द्रः ॥२३९ ॥

विश्वानरः पिङ्गलशूद्रकोत्सातवस्फुटा धन्यगदश्रविष्ठाः ।
जनाश्मवीक्ष्याःखदिरोनमार्हपिञ्जूरवस्ताःसनखःपविन्दा२४०

वैश्वानरायणः । विश्वतरइति कश्चित् । पैङ्गलायनः । शौद्रकायणः । औत्सायनः । आतवायनः । उत्सातवेति भोजः । स्फौटायनः(१) । धान्यायनः । गादायनः(२) । श्रविष्ठायाः श्राविष्ठायनः । जानायनः । अस्य नडादित्वात्फगि । अस्मिन्नञ् च यूनि विशेषः । आश्मायनः । वैक्ष्यायणः । खादिरायणः । नामायनः । आर्हायणः । पैञ्जूरायणः । वास्तायनः । सानखायनः (३)। पविन्दायाः पाविन्दायनः ॥ २४० ॥

---

(१) स्फोटोऽयनं यस्येत्यर्थे स्फोटायनः शब्दान्तरमित्यधिकम् ॥

(२) वादायन इति पा० । (३) मानखायन इति पा० ।

रोहिणभण्डितभडिलाः शुनभण्डलदासकानडुह्यं च ।
पुटकुटकुलखडभडिताः प्राहृतचुपकितविशंपदुर्मनसः ॥२४१॥

रौहिणायनः । भाण्डितायनः । भाडिलायनः(१) । शौनायनः । भाण्डिलायनः । दासकायनः(२) । चुपदासक इत्यन्यः । अनडुहोऽपत्यं पौत्रादिः । आनडुह्यम् । तदपत्यं युवा आनडुह्यायनः । स्त्रियामत इञि । आनडुहीत्यन्यः(३) । पौटायनः । कौटायनः । कौलायनः । खाडायनः । भाडितायनः । प्राहृतायनः(४) । चौपायनः । कैतायनः । खिव इत्यप्यन्यः । विविधं शं सुखं पातीति विशंपः । तस्य वैशंपायनः । दौर्मनसायनः ॥ २४१ ॥

जडलतशङ्खप्राच्या ध्वनवहमन्दा भवेन्नरे जातः ।
अथ भर्गस्त्रैगर्ते स्यादात्रेये शपो भरद्वाजः ॥२४२॥

जाडायनः । लातायनः । शाङ्खायनः । विदादित्वादञि शाङ्खः । गर्गादित्वाद्यञि शाङ्ख्यः । कुञ्जादित्वात्फञि । शाङ्खायन्यः । प्राच्यायनः । ध्वानायनः । वाहायनः । मान्दायनः । जातायनः । पुमांश्चेत् । अन्यत्र जाताया जातेयः । भार्गायणः । त्रैगर्त्तश्चेत् । भार्गिरन्यः । शापायनः । भारद्वाजायनः । आत्रेयश्चेत् । शापिर्भारद्वाजश्चान्यः । एत ऋषिवाचकाः । अस्योदाहरणानिः— अथैषवातण्ड्यवतण्डभीकवातण्डवातण्डरभिकप्रियाणि ।

आश्वायनाश्मायनसेविता निशुधीनिसिप्रापुलिनान्यगच्छत् ॥१॥
पौटायनास्तेषुपुटान्सृजन्तो वैदायना वेदसुदीरयन्तः ।
क्षान्तायनाः क्षान्तिभृतोऽस्यचेतः शाङ्खायनाः शङ्खभृतश्च जह्नुः ॥२॥
ग्रैवायणाहार्यणरौहिणायनाकार्यणान्यस्तसमिरकुशेषु ।
पादायनासन्नदूषन्निवस· चाक्रायणेष्वेषु पदं स चक्रे ॥ ३ ॥
औत्सायनैरुत्यमिहोत्पतद्भि· काशायनैः काशकुशलुनद्भिः ।
स्वानायनैः स्वाननतुद्गृणद्भिर्ग्रैष्मायणैर्ग्रैष्ममुदं स लेभे ॥४॥

---

(१) भालितायनः । लालितायनः । भावितायन इत्यधिकम् ।

(२) दाशकायन इति पा० । (३) अनडुह्येति गर्गादियञन्ताद्गोत्रे फञोऽसम्भवेन सामर्थ्याद्यून्ययम् । अनडुहो युवापत्यमानडुह्यायन इति टिप्पणम् । (४) प्राहृतायन इति पा० ॥

धाम्यायणंधर्मसृचोजपन्तंवाम्मायनंवाग्मितसंयजूंषि ।
गौमायनगोमिनमेषसामधान्यायनंधन्यमथावमेने ॥५॥
वैक्ष्यायणंवीक्ष्यविशालवक्षाननामनामायनमायताक्षः ।
अदुर्मनादौर्मनसायनंसमहामनाःसौमनमायनंच ॥६॥
धौमायनंसोऽध्वरधूमशुभ्रंधौम्रायणब्रह्मपरायणञ्च ।
श्यामायनंश्यामलकण्ठभक्तंकाणायनंकाणभुजञ्चभेजे ॥७॥
शैवायनेशैवमतानुकूलेकौलायनेकूलकुटीरभाजि ।
कौटायनेधान्यकुटैकवृत्तौवासायनेवाकृतवासनंसः ॥८॥
गीर्ब्रह्मगैरायणमुद्गिरन्तंजातायनंज्ञाततदर्थबोधम् ।
ध्वानायनंसध्वनिदत्तचित्तंजाड्यायनंध्यानजडंप्रपेदे ॥९॥
भक्त्यानडुह्यायनमेवनत्वार्जुनायनंवार्जुनतुल्यकीर्त्तिः ।
वैल्यायनंचोपजगामवैश्वानरायणंविश्वजनीनवृत्तिः ॥१०॥
आविग्नवैशालपरौकराभ्यांपावित्रपाविन्दपरौगिरात्र ।
खार्जूरपैञ्जूरपरौतुशश्वन्मूर्धाभिषिक्तोऽनमदायनौसः ॥११॥
वैशम्पगौलाङ्कपरौचतौतान्खाडातवप्राहृतदासकेभ्यः ।
रामोदतःकैतवखादिराभ्यांसचापलाङ्गाचपलौववन्दे ॥१२॥
विद्वान्मुदङ्कोनवभारभारद्वाजायनंराजनिवन्दमाने ।
आत्रेयनौसीत्यभिधायतत्रात्रेयायणंवास्यविपर्ययेण ॥१३॥
सभाण्डिलाद्वाण्डितभाण्डिलाभ्यांनत्वायनान्भाण्डिलतश्चभूपः ।
शापायनंशापिमथेहभार्गिभार्गायणंचैवनमश्चकार ॥१४॥ ॥२४२॥ इत्यश्वादिः ॥

## विदोर्वकिंदर्भकिलातधेनुत्रिश्वानरा भाजनकश्यपौ च ।
## अश्वावतानः प्रियकोपमन्यू हर्यश्वबिन्दू कुशिकर्त्तभागौ॥२४३॥

अश्वविदेत्यादिना पौत्रादावपत्येऽञ्भवति । विदस्यापत्यम् वैदः। वैदौ । विदाः । और्वः । कैदर्भः । कौदर्भ इति शकटाङ्गजः(१) । विदर्भ इति भोजः । कैलातः । धैनवः । अयमृषिवचनः । उत्सादौ तु प्रत्यग्रप्रसवगव्यादिवाचकः(२)। वैश्वानरः । भाजनः । ताजम इत्यन्यः । काश्यपः । अथ । इन्द्रहूः मप्रमः

(१) किंदर्भस्य कैंदर्भः कैंदर्भौ किदर्भाः । किदर्भ इति शाकटायनः । विदर्भ इति भोजइति पा० । (२) उत्सादौ तु नवप्रसूतिकावचन इति पा० ।

काश्यपानामित्यञः इलुक् कस्मान्न भवति । सामान्येनापत्याभिधान ऋष्यणा सिद्धिर्भविष्यति । तस्येदं विवक्षायामणा वा सर्वेषामपि हि पितरः काश्यपा अभेदोपचारात् । यथा—बभ्रुः । मण्डुः । लमक इति ॥ आश्वावतानः । आश्वावतानाः । प्रैयकः । पियकेत्यन्यः । औपमन्यवः । हार्य्यश्वः । बैन्दवः । कौशिकः । यथा—

कौशिकेन स किल क्षितीश्वरो राममध्वरविघातशान्तये । आर्त्तभागः ॥२४३॥

ऋष्टिषेणभरद्वाजापस्तम्बाः शुनकस्तथा ।
शरद्वत्सम्बकौ शिग्रुः कुचवारश्च(१)कीर्त्तिताः ॥२४४॥

आर्ष्टिषेणः । भारद्वाजः । आपस्तम्बः । शौनकः । शारद्वतः । साम्बकः । साम्बकाः । श्यवक इति वामनः । शैग्रवः । शैग्रवाः । कौचवारः कूचवार इति वामनः । कूवाचर इत्यन्यः । गोपवनश्यामाकश्यापर्णश्यामकास्तु गोपवनादेर्विदाद्यन्तर्गणत्वाद्द्रष्टव्याः ॥ ऋषिवाचिभ्यः ऋष्यणि प्राप्ते । ऋष्टिषेणाच्छिवाद्यणि । अनृषिवाचिभ्योऽदन्तेभ्योऽतइञि । तदन्तेभ्योऽणि । परस्त्रिया ज्यडो ढणि च पाठः ॥२४४॥ इति विदादिः ॥

कुञ्जब्रध्नशुभस्कन्दलोमस्कम्भाः शटो गणः ।
भस्मशङ्खविपाशाश्च शुण्डा शाकश्च कीर्त्तिताः ॥२४५॥

अश्वविदेत्यादिना पौत्रादावपत्य एभ्यः फञ् भवति । तत्सनियोगेन फञ् व्रातादस्त्रियामित्यनेन स्वार्थे ञ्यश्च । कुञ्जस्यापत्यं पौत्रादिः कौञ्जायन्यः । कौञ्जायन्यौ । कौञ्जायनाः । ब्राध्नायन्यः । शौभायन्यः । शुम्भइति भोजः । स्कान्दायन्यः । स्कन्ध इत्यन्ये । लौमायन्यः । केचिल्लोमान्तस्यैव मन्यन्ते न लोम्नः । तन्मत औडुलोमायन्य इत्यादि । स्काम्भायन्यः । स्कम्भ इत्यपरे । शाटायन्यः । गाणायन्यः । भास्मायन्यः । भस्त्रेत्यन्यः । शाङ्खायन्यः । वैपाशायन्यः । शौण्डायन्यः । शाकायन्यः । अस्योदाहरणानिः—

ऐक्षन्तकुञ्जानुपसृत्यकौञ्जायन्यादयोऽर्थाषिवधूवधूत्यः ।
कौञ्जायनाःपार्थिवकुञ्जरतंब्राध्नायनाश्चातिकुतूहलेन ॥ १ ॥
शाङ्खायनाःशङ्खकशोभिहस्ताभास्मायनाभास्वरहेमभासः ।
गाणायनागाणपतव्रतस्थाःशाकायनाःशंकरभक्तिभाजः ॥ २ ॥

---

(१) कूचवारइति पा० ।

शौण्डायनाःसार्जनकर्मशौण्डाःशाटायनाःशाठ्यविहीनवाचः ।
स्कास्भायनाःस्कम्भिलसन्मथास्त्राःशौभायनाःशोभनवल्गुवाचः ॥३॥
स्कान्दायनाःस्कन्दमहौजसंवैपाशायनाःपाशभृतोपमेयम् ।
प्रियौडुलोमायनमौडुलोमायन्यंतमालोक्यनतृप्तिमापुः ॥ ४ ॥ २४५ ॥

इति कुञ्जादिः ॥

गर्गो वत्सविरोहितौ शटशकप्राचीनयोगावटा—
धूर्तः शङ्खधनञ्जयाजचमसा विश्वावसुः संकृतिः ।
वृक्षागस्त्यपुलस्तिवल्गुकलिता मन्तुर्मनायी लिगुः—
सूनुर्लोहितकन्थकौ श्रुवलतू मण्डुर्जिगीषुस्तनुः ॥२४६॥

गर्गादिरश्वविदेत्यादिना यञ् । गर्गस्यापत्यं पौत्रादिः । गार्ग्यः । वात्स्यः । वैरोहित्यः । शाटयः । शाक्यः । प्राचीनयोग्यः । आवट्यः । धौर्त्यः । शाङ्ख्यः। धानंजय्यः। आज्यः। चामस्यः। वैश्वावसव्यः। साङ्कृत्यः । वार्क्ष्यः । आगस्त्यः । पुलस्तेः—पौलस्त्यः । पुलस्त्य इत्यपि प्रकृतिरस्ति । तस्याप्यृष्यणि पौलस्त्यः स्यात् । परं पुलस्तिशब्दस्य यञभावे रूपान्तरमनिष्टं स्यात्। आदौ च विशेषः । यञन्तात्स्त्रियां पौलस्ती । पौलस्त्यायनी । अण-न्तस्य पौलस्त्येव स्यात् । बहुषु यञन्तस्य पुलस्तयः । अणन्तस्य पौलस्त्याः(१)। वाल्गव्यः। मान्तव्यः। मानाय्यः। पाठसामर्थ्यान्न स्त्रीत्वनिवृत्तिः। लैगव्यः। सौनव्यः । लौहित्यः । कान्थक्यः । कथक इत्यन्यः । श्रौव्यः । लातव्यः । मा-ण्डव्यः । जैगीषव्यः । तानव्यः ॥ २४६ ॥

---

( १ ) पुलस्त्य इत्यपि प्रकृत्यन्तरमस्ति । तस्यापि गर्गादित्वे पुलस्ति शब्दस्य पाठ एवोपलक्षणम् । अतएव रामायणादौ रावणे पौलस्त्यपदं प्रयुज्यमानमुपपद्यते न च पुलस्तिपदेन तस्योपपत्तिरिति वाच्यम्। पुलस्त्यो-ऽजनयत्पत्न्यामगस्त्यं च हविर्भुवि। यद्यपि पुलस्त्यस्य ऋषित्वादणि पौलस्त्य इत्येव स्यात्तथापि यञभावे रूपान्तरमनिष्टमापद्येत। तथा हि यञन्तस्य स्त्रि-यां पौलस्त्यायनी । अणन्तस्य तु पौलस्तीत्येव । बहुष्वपत्येषु यञो लुकि पुलस्तयाः । ऋष्यणस्तु लुगभावात्पौलस्त्या इति विभावनीयमिति टिप्पण्या-मुपलभ्यते ।

तण्डोलूकवतण्डधूमशकलाः कण्ठस्तथा कुण्डिनी—
गोकक्षैकरहूगणा वृषगणः स्थूरारराकाकताः ।
गोलन्दानडुहौ तरुक्षभिषजौ कृष्णोऽलिगुः पिङ्गला—
पूतीमाषसुलाभिनौ कुरुकतः शङ्कुस्तितिक्षैकलूः ॥२४७॥

ताण्ड्यः । तण्डिन्निति कश्चित् । औलूक्यः । वातण्ड्यः । शिवादिपाठादणपि । वातण्डः । धौम्यः । युधिष्ठिरमन्त्री । यथा—कादम्बर्याम् । धौम्य इवाजातशत्रोः । शाकल्यः । काण्ठ्यः । कौण्डिन्यः । गौकक्ष्यः । ऐक्यः । राहूगण्यः । रहोगण इत्यन्यः । वार्षगण्यः । स्थौर्यः । राराक्यः । अराराकेत्यन्यः । कात्यः । कात्यशब्दाल्लोहितादित्वाड्डायनी । कात्यायनी । गौरी । ऋषिपरत्वाकारत्वादर्धवृद्धा नार्यपि । गौलन्द्यः । आनडुह्यः । तारुक्ष्यः । भैषज्यः । कार्ण्यः । आलिगव्यः । पैङ्गल्यः । पौतीमाष्यः । पूतिमाष इति भोजः । सौलाभ्यः । सुलोभिन्निति वामनः । कौरुकात्यः । शाङ्कव्यः । तैतिक्ष्यः(२) । ऐकलव्यः ॥२४७॥

चुलुकचणकमङ्क्षुः शर्कराक्षाग्निवेशौ—
चिकितकुटिलदल्भाः(१) पिप्पलूतृक्षकक्षौ ।
महितमुसलरेभाः शण्डिलोक्थौ च गण्डु—
र्विदभृदभयजाताविन्द्रहूतित्तिरी च ॥२४८ ॥

चुलुकचणकाभ्यां युक्तो मङ्क्षुः । चुलुकचणकमङ्क्षुः । चौलुक्यः । चाणक्यः । माङ्क्षव्यः । शार्कराक्ष्यः । आग्निवेश्यः । चैकित्यः । कौटिल्यः । दाल्भ्यः । पैप्पलव्यः । तार्क्ष्यः—गरुडः । काक्ष्यः । माहित्यः । मौसल्यः । रैभ्यः । शाण्डिल्यः । औक्थ्यः । गाण्डव्यः । वैदभृत्यः । अस्य पौत्रादौ यञ् तस्य लुचि । विदभृतः । अभिजिदादावधीतस्य विदभृच्छब्दस्यापत्यमात्रे यञ् । तस्याणि वैदभृताः । वितॄन् साहसिकान् बभातीति वितृभत् तस्य वैतृभव्य इत्यन्यः । आभयजात्यः । आभय्यः । जात्यइत्यन्ये । ऐन्द्रहव्यः । तैत्तिर्यः ॥२४८॥

बृहदग्निसवर्णर्क्षजमदग्निपराशराः ।
जतूकर्णः कुटीगुश्च कर्कटाश्मरथौ मनुः ॥ २४९ ॥

---

(१) कुटलद० इति पा० । (२) कौटल्यइति पा० ।

वार्हिदग्न्यः। सावर्ण्यः। आक्ष्यः। रूक्ष इत्यन्यः। जामदग्न्यः। पाराशर्य्यः। कथंपुनरनन्तरो रामो जामदग्न्यः। व्यासः पाराशर्य इति। पुत्रोऽपि पौत्रादिकार्य्यकरणात्तथा व्यपदिश्यते। अनन्तरापत्यविवक्षायां त्वृष्यणि जामदग्न्यः। पाराशर इति। अन्ये तु बभ्रुः कौशिक इति कौशिकग्रहणं गर्गादियञोऽनित्यत्वख्यापनार्थं मन्यन्ते। तेन पाराशर्य्यो व्यासः। जामदग्न्यो राम इत्यनन्तरापत्येऽपि यञ् सिद्धः। वैचित्र्यार्थमित्यपरे। भोजस्त्वनन्तरापत्ये पाराशरिः। तस्येदं विवक्षायां तु पाराशर इत्याह। जातूकर्ण्यः। कौटीगव्यः। कार्कस्यः। आश्मरथ्यः। मानव्यः। कथं मानवी प्रजा लोहितादित्वाड्डायनूङीभ्यां स्त्रियां नित्यं भवितव्यम्। अनन्तरापत्यविवक्षायामृष्यण् भविष्यति ॥२४९॥

पर्णवल्कस्तलुक्षश्च यज्ञवल्कश्च मन्द्रितः
व्याघ्रपाद्भिपा देवहूस्तन्तुभण्डितमुद्गलाः ॥२५०॥

पार्णवल्क्यः। तालुक्ष्यः। याज्ञवल्क्यः।

स योगी याज्ञवल्क्यस्त्वां वेदान्तानध्यजीगपत्।

मन्द्रं संजातमस्य मन्द्रितः। तदपत्यं मान्द्रित्यः। मन्त्रित इति वामनः। वैयाघ्रपद्यः। भैप्यः। दैवहव्यः। यज्ञहूरित्यप्यन्यः। तान्तव्यः। भाण्डित्यः। मुदं मदं वा गलतीति मुद्गलः। तदपत्यं मौद्गल्यः।

मौद्गल्यस्य कवेर्गभीरमधुरोद्गारा गिरां सूक्तयः ॥ २५० ॥

आङ्गिरसे बोधकपी ब्राह्मणकुशिकाङ्गजे च मधुबभ्रू।
वाजोऽसे जरमाणो भडितासंक्ततितितिम्भवामरथाः ॥२५१॥

बौध्यः। काप्यः। आङ्गिरसश्चेत्। अन्यत्र बौधिः। कापेयः। माधव्यः। ब्राह्मणश्चेत्। अन्यत्र माधवः। बाभ्रव्यः। कौशिकश्चेत्। अन्यत्र बाभ्रवः। अन्ये तु लोहितादिपठितादेव बभ्रोः कौशिके यञं मन्यन्ते। स्त्रियां बाभ्रव्यायण्येव तन्मते स्यात्। वाजोऽस इति वाजशब्दोऽसमासे यञमुत्पादयति। वाज्यः। अस इति किम्। सौवाजिः। अस इत्यस्योपलक्षणत्वादन्येषामपि गणपठितानामसमास एव प्रत्ययः। पारमविदिः। पारमगर्गिरित्यादि। जारमाण्यः। भाडित्यः। आसंक्रत्यः। तिम्यन्तं भक्षयतीति तितिम्भः। तस्य तैतिम्भ्यः। वामरथ्यः ॥ २५१ ॥

गुहलुर्मनसा मडुकः पिङ्गलिणाजमश्वः ।
आलापीकृतवीरश्चाभिजिदादिस्तथा गणः ॥ २.५.२ ॥

गौहलव्यः । गौहुलिरित्यन्यः । मानस्यः । माडुक्यः । पैङ्गलः । श्यामायनः । सास्वयः । आलाप्यः । कार्तवीर्यः ॥

अभिजिदादिः पुनरयम् । अभिजित् विदभृत् शालावत् शिखावत् ऊर्णावत् श्रीमत् शमीवत् शब्दाः । तेषामभिजिदादिभ्योऽञिति गोत्रे यञोऽण् भवति । अभिजितोऽपत्यानि आभिजिताः । वैदभृताः इत्यादि ॥ अस्योदाहरणानि—यथा—

राजन्महाकालवनेऽत्रगार्ग्यौवात्स्यागारावत्सजस्मान्यरमम् ।
वाज्याज्यसीवाजिघटुप्रियेणविणोपनागाश्रमगमगरजनैः ॥१॥
तथेतिगौरीपतयेप्रणम्यमाण्डूकत्यपत्रीकृतपादपंमः ।
आखङ्कृतीनर्त्तितगर्गवर्हिमुनेःपदंरागमुनिर्जगाम ॥२॥
वैयाघ्रपद्योपहितार्घपाद्यःप्राचीनयोग्योऽदितमङ्गलाशीः ।
सतत्नरेभ्यायणपृष्टवार्त्तःपौलस्त्यदाक्षेरिवधाम्न्यभासीत् ॥३॥
साग्न्याग्निवेश्येस्तुतसाङ्कृत्यैशाङ्ग्येर्धौम्यावर्धम्येषुतथात्यसाध्ये ।
आवस्थवासस्मनस्यधानंशय्यानहुलेसजगर्पतस्मिन् ॥४॥
स्नातार्क्यलक्ष्मेहसफौहकात्यवैश्वानसव्यायनजारमायणान् ।
लौहित्यसांशित्यवतोऽभियाद्यवाभ्रव्यमाण्डव्यमुखानुपेये ॥५॥
समहक्षमाहक्षव्यमनस्यसाङ्क्षीत्सवल्गुवाल्गव्यवमस्यवाणीत् ।
मानव्यशाङ्कव्यमनोश्वशङ्कुर्मानाय्यमानाय्यमिवेपभेजे ॥६॥
साश्वत्यकार्कत्यकुटीगकौटिगव्यान्तिपड्भिर्विदभृद्भिरीड्यान् ।
सवैदभृत्यायनवैदभृत्यसौलाभ्यदाल्भ्यानूवहुतत्रमेने ॥७॥
जिगीषवेऽस्मैजिजुगोपजैगीपव्योन्यगूहद्यदुगौहलव्यः ।
तच्छौव्यलैगव्यकथासुतत्त्वंगीर्ब्रह्मणोऽस्यस्वयमावभासे ॥८॥
वातण्डाकात्यायनकाप्यकात्यमान्तव्यतान्तव्यदृभैःसतस्मिन् ।
तारुक्ष्यताक्षुद्यतपोभिरार्क्ष्यःकाम्यक्षशाकल्यजपैश्वजह्रे ॥९॥
सकाशकव्यगौकक्ष्यसमक्षमस्मिन्नागस्त्यकौण्डिन्यकृतातिथेयः ।
शुभापितान्यादितपार्शवल्कयोयजूंषिसूर्यादिवयाज्ञवल्क्यः ॥१०॥

साण्डिल्यमाण्डिल्यविदेपणातूरुणर्यस्यसावर्ण्यसवर्णभोजः ।
भाण्डिन्यपाण्डित्यमिहैवराहूगणयादयोवीक्ष्यतमित्थमूचुः ॥११॥
भाण्डित्यमंपज्यवचोविचिन्वन्नालाप्यचैकित्यमतिंमिमानः ।
गौमल्यपैङ्गल्यकृतीःसपाराशर्यप्रमाणोमनसालुलोके ॥१२॥
सवाहृद्गन्यायनजामदग्न्यःस्यौयौवस्यतैतिक्ष्यजिघृक्षिताभिः ।
कौटिल्यशास्त्रार्णवपारदृश्वानन्दगौलन्द्यमुनीन्द्रवाग्भिः ॥१३॥
कात्यायैकणव्यायनपैप्पलव्यदाल्भ्येन्द्रहव्यायनदैवहव्यान् ।
राराक्ष्यचाणक्यवदारस्यमौलूक्यचौलुक्यजुषंसिषेवे ॥१४॥
सभाजयन्नाभयजात्यवैरोहित्याश्मरथ्यायनवार्षगण्यान् ।
सपीतिमाण्यायणशार्कराक्ष्यशाण्डिल्यमौद्गल्ययुगोविरेजे ॥१५॥
माधव्यतोधामसमाधवश्रीर्बाभ्रव्यधीर्बाभ्रवतःप्रभावम् ।
कापेयतःकाप्यरुचिःप्रतापंगौध्याच्चवौधेश्चसबोधमाप ॥१६॥

प्रथमवृत्ते विरोहितागस्त्यशब्दौ द्वितीयवृत्ते तण्डवतण्डधूमैककुरुकतानडुहलिगुशङ्कुकततरुक्षवर्जिताः शब्दाः। तृतीयवृत्ते मङ्क्षग्निवेशतृक्षकक्षरेभवर्जिताः चतुर्थश्लोक ऋक्षमनुवर्जिताः। पञ्चमश्लोके तलुक्षव्याघ्रपत्तन्तुवर्जिताः षष्ठार्यायां भद्दितितिरिमवामरथशब्दाः। सप्तमश्लोके भिषाजालापिकृतवीरशब्दा अभिजिदादिश्च शकलादिगणायोग्या भवन्ति ॥ आकृतिगणोऽयम्। तेन यज्ञहूप्रभृतयो द्रष्टव्याः ॥२५२॥ इति गर्गादिः ॥

इति श्रीगोविन्दसूरिशिष्यपण्डितश्रीवर्धमानविरचितस्वीयगणरत्नमहोदधिवृत्तौ तद्धितप्रक्रियास्वार्थिकापत्यप्रत्ययगणनिर्णयो नाम तृतीयोऽध्यायः समाप्तः ॥

# अथ चतुर्थोऽध्यायः ॥

धनं सेना पशुक्षेत्रे धान्यप्राणसभागृहाः ।
शताश्वधन्वराष्ट्राधिकुलधर्मगणास्तथा ॥ २५३ ॥

धनादेरपत्ये वाण् पत्युरित्यनेन धनादिपूर्वपदात्पतिशब्दादत्राणधिकारे येऽर्थास्तत्रापत्ये वाण् भवति। ण्यस्यापवादः। धनपतेरपत्यं धनपतिर्वा देवताऽस्य धानपतः। सेनापतेरिदम् सैनापतम्। एव पाशुपतम्। क्षैत्रपतम्।

धान्यपतम् । प्राणपतम् । साभापतम् । गार्हपतम् । शातपतम् । आश्वपतम् । धान्वपतम् । राष्ट्रपतम् । आधिपतम् । कौलपतम् । धार्मपतम् । गाणपतम्(१) २५३

इति धनादिः ॥

उत्सोशीनरभल्लकीयविकरा धेनूदपानोष्णिहः—
पञ्चालापवदोमहानदपृथे इन्द्रावसानः कुरुः ।
सत्वद्ग्रीष्मरथन्तरं जनपदो मध्यंदिनानुष्टुभौ—
त्रिष्टुप्पङ्क्तिमहानसाश्च भरतो ज्ञेयः सुवर्णः ककुप् २५४

उत्सादेश्चाञित्यनेनोत्सादेर्दैवपृथिवीशब्दाभ्यां वास्ये तस्मात्पूर्वेऽपत्ये चार्थेऽञ् भवति । अणस्तदपवादानां च बाधकः । उत्सस्यापत्यम् उत्सो वा देवताऽस्येति औत्सः । औशीनरः । भाल्लकीयः । वैकरः । अस्य पथ्यादिपाठाच्चातुरर्थिको यएव । धैनवः । औदपानः । औष्णिहः । एवं पञ्चालेषु भवः । पाञ्चालः । अके प्राप्ते । आपवदः । वामनमतेन । माहानदः । पृथाया अपत्यम् पार्थः ॥ यियक्षमाणेनाहूतः पार्थेनाथ मुरं द्विषन् ॥

इन्द्रावसानो नाम बाहीकग्रामस्तस्य । ऐन्द्रावसानः । कुरुषु भवः । कौरवः । सत्वतोऽपत्यम् । सात्वतः । यथा—

समरेषु रिपून्निजघ्नता शिशुपालेन समेत्य संप्रति ।
सुचिरं सह सर्वसात्वतैर्भवविश्वस्तविलासिनोजनः ॥

यादवैरित्यर्थः । ग्रीष्मे भवम् ग्रैष्मं महः । रथंतरो नाम राजा साम वा तदपत्यं तत्र भवं वा । राथंतरम् । जानपदः । माध्यंदिनः । आनुष्टुभः । त्रैष्टुभम् । पाङ्क्तम् । माहानसोऽग्निः । भारतः । सौवर्णं कटकादि ॥ काकुभम् २५४

वृहतीजगतीमहिमत्तरुणास्तलुनो महन्महाप्राणौ ।
चिनदवृहत्पीलुकुणा वृषदंशो वष्कयश्चासे ॥ २५५ ॥

वार्हतम् । जागतम् । महिमतो भावो महिमा । तस्य माहिमः । महीमदित्यन्यः । तारुण- । तालुनः । तरुणया अपत्यं तारुणः । तालुनः । इञि प्राप्ते । माहतः । माहाप्राणः । महाप्रयाण इत्यन्यः । चैनदः । बार्हतः ।

---

(१) केचित्तु गृहमेधशब्दौ न पठन्ति तन्मते गार्हपत्यं चैनापत्यमित्युदाहरणं कथयेत्यधिकम् ।

पीलूनां पाकः । पीलुकुणः । ततोऽञि । पैलुकुणः । वृषं मूषिकं धर्मं वा दशतीति वृषदंशो मार्जारः पापवान् वा । ततोऽञि । वार्षदंशः । जिनेन्द्रबुद्धिस्तु वृषदंशे इति वृषच्छब्दाद्दंशेऽञ् । वृषद् अंशो वार्षदः । अंश इति किम् । वार्षदोऽन्यः । अणेव भवति । बष्कयशब्दोऽसेऽसमासेऽञमुत्पादयति । वाष्कयः । अन्यत्र सुबष्कयस्यापत्यं सौबस्कयिः । अस्य समासप्रतिषेधाद् वत्साद्यन्तस्यापि प्रत्ययः । गोधेनुभ्य आगतं गौधेनवम् । मयड्रूप्यौ न भवत इति शकटाङ्गजः । अस्मन्मते तु तदन्तानां व्यवच्छेदः ॥ २५५ ॥

देशे तूदस्थानो हंसपथं वर्धमानमहितौ च ।
दंशं कुरुकतकुणपावुत्सादिगणे पठन्त्येके ॥२५६॥

उदस्थानशब्दो देशे वर्त्तमानोऽञमुत्पादयति देशेऽभिधेय इत्यन्यः । औदस्थानः । अन्यत्र । उदस्थानो नाम कश्चित् तस्य औदस्थानिः । हांसपथः । वार्धमानः । महितस्य माहितः । दांशः । कौरुकातः । कौणपः । एतेषां यथासम्भवमुदाहरणानिः—

दृष्टोडुलोमेषुमयौडुलोमेश्रीवीरसिंहादिषुरुद्रभक्तिः ।
अपार्थिवासात्वयिपार्थिवीयांनीत्यौदपान्योऽपिनवर्णयन्ति ॥१॥
आनुष्टुभत्रैष्टुभकाकुभैर्यंपाङ्क्तौष्णिहैर्वार्हतजागतैश्च ।
स्तुवन्तिराथन्तरभाज्ञकीयमाध्यंदिनाःसोऽर्हणयाद्भुतस्ते ॥२॥
कस्तारुणस्तालुनवाष्कयीवासौबष्कयिर्वाहृदयेकरोति ।
विलासिनोर्वीपतिनाकलौयद्व्यलोकिलोकेऽत्रमृगाङ्कमौलिः ॥३॥
नभारतेनैक्षिनकौरवेणनैन्द्रावसानेननसात्वतेन ।
पाञ्चालमाङ्गानदवैनदैर्नौनौशीनरेणाद्ययथात्वयेशः ॥४॥
सौवर्णमुर्व्यादितथानदत्वानधैनवंजानपदद्विजेभ्यः ।
नवैकरंरत्नचयंविकीर्यत्वमीशमालोक्ययथाद्भुतोऽभूः ॥५॥
नमाहतीमृद्धिमवैमिमाहाप्राचीनकोजल्पतिवार्हतीयम् ।
भक्त्येहयोऽभ्यर्चतिरुद्रमौदस्थानंतमभ्येतिजनंजयश्रीः ॥६॥

माहानसोऽग्निःपचतेऽन्नजातंग्रैष्मंमहःपैलुकुणंगृणन्ति ।
वृषाङ्कभक्तोऽर्हतिवार्षदंशान्भेत्तुंविभिन्नाहिपदार्थशक्तिः ७।२५६ इत्युत्सादिः ॥

भिक्षाखण्डिकदण्डिणायुवतयो धर्मी सहस्रो युगं-
क्षेत्रं श्वा हलबन्धभिक्षुकशुकोलूकाः पदातिः पुनः ।
अङ्गारो वडबाऽथ पद्धतिरहोऽथर्वा करीषं तथा—
चर्मी चर्म च गर्भिणी युगवरत्रा स्याद्वरत्रा तथा ॥२५७

भिक्षादेरित्यनेन षष्ठ्यन्तात्समूहेऽण् प्रत्ययो भवति । भिक्षाणां समूहः भैक्षम् । यथा श्रीसागरचन्द्रस्य—

अकल्पितप्राणसमासमागमामलीमसाङ्गाधृतभैक्षवृत्तयः ।

निर्ग्रन्थतात्वत्परिपन्थिनोगताजगत्पते किंत्वजिनावलम्बिनः ॥

खण्डिकानां कलायानाम् खाण्डिकम् । दक्षिणानाम् दाक्षिणम् । यौवनम् । युवतिपाठः पुंवद्भावबाधनार्थः । अत्रास्य पाठश्चन्द्राचार्य्याद्यभिप्रायेण । वस्तुतस्तु तद्धितोत्पत्तेः प्रागेव पुंवद्भावेन भवितव्यम् । ततो युवतीनां समूहो यौवनम् । यथा । सरूपमतिनेपथ्यं कलाकुशलयौवनम् । यस्य पुण्यकृतः प्रेष्यं सफलं तस्य यौवनम् । यत उक्तं भाष्यकृता । भिक्षादिषु युवतिग्रहणानर्थक्यं पुंवद्भावस्य सिद्धत्वात्प्रत्ययविधाविति । धार्मिणम् । ब्रह्मादिपाठान्नोऽनह्नो-व्येशित्वगणादावित्यनेन ष्लुङ् न । साहस्रम् । यौगम् । क्षैत्रम् । शौवनम् । शकटाद्गजस्तु श्वखलादिभ्योऽञिनित्यत्र श्वादेरञ्वचनम् । शुनां समूहः शौवम् । दण्डिनां दाण्डम् । चक्रिणां चाक्रमित्यादिषु नोपदस्येति लोपार्थमिति मन्यते । हालम् । पाशादिपाठाद् हल्या । बान्धम् । हलबन्ध इत्यन्यः । भैक्षुकम् । शौकम् । औलूकम् । यञन्तो बहूपत्यवाची ष्लुका निर्दिश्यते । तस्येह पाठादपत्यलक्षणोऽकञ् न भवति । पादातम् । आङ्गारम् । पाशादिपाठादङ्गार्या । वाडवम् । पाद्धतम् । आह्नम् । आह्नम् । अथर्वा नामर्षिः । तत्प्रयुक्ता मन्त्रा अथर्वाण उपचारात्तेषाम् आथर्वणम् । कारीषम् । चार्मिणम् । चार्मणम् । चार्मेमित्यन्यः । गर्भिण्यः क्षेत्रभक्तयः । तासां गार्भिणम् । यौगवरत्रम् । वारत्रम् ॥

क्षुद्रकाना क्षत्रियाणा मालवानां चापत्यानि । राष्ट्राख्याद्ब्राह्मणोऽञेवेत्यञ् तस्य ष्लुकि । क्षुद्रकाश्च मालवाश्च क्षुद्रकमालवाः । ततोऽपत्याकञो बाधनार्थं सेनासंज्ञायां भिक्षादिपाठादण्विधिः । क्षौद्रकमालवी सेना । अन्यत्र क्षौद्रकमालवकम् । भिक्षुकवडवाशुकपदातिप्रभृतयश्चित्रकाष्ठादिप्रतिमावृतयो गणपाठं प्रयोजयन्ति ॥ २५७ ॥ इति भिक्षादिः ॥

केदाराजौ राजराजन्यवत्सा उष्ट्रोरभ्रौ वृद्धयुक्तो मनुष्यः ।
उक्षा ज्ञेयो राजपुत्रस्तथेह केदारादौ वामनाचार्यदृष्टे ॥२५८॥

अपत्यकेदारेभ्योऽकञित्यनेनापत्यान्तात् केदारादेश्चाकञ् भवति ॥ केदाराणां समूहः कैदारकम् । कैदार्यमित्यपि । आजकम् । राजकम् । राजन्यकम् । वात्सकम् । यथा—धनञ्जयस्य—

समं द्विषन्तः शुकसारिकाभिर्विपाशितावल्गुशिशुंशशंसुः ।
निरीक्षमाणं सह धेनुकेन गृहे गृहे वात्सकमभ्यनन्दत् ॥

औष्ट्रकम्— लोलौष्ठमौष्ट्रकमुदग्रमुखं तरूणाम्—
भ्रंलिहानि लिलिहे नवपल्लवानि ॥

औरभ्रकम्— क्रीत्वौरभ्रकमिदमाजकं च वीथ्याम् ॥

वार्द्धकम्— मानुष्यकम् । औक्षकम् ।

रोमन्थमन्थरचलद्गुरुसास्नमासाञ्चक्रे निमीलदलसेक्षणमौक्षकेण ॥

राजपुत्रकम् ॥ २५८ ॥ इति केदारादिः ॥

पाशधूमतृणाङ्गाराः पिटाकः पिटको वनम्(१) ।
गोरथौ शकटं वातः खलपोतौ गलो नडः ॥ २५९ ॥

खलपाशादिभ्यां लिनूल्यावित्यनेन खलादेः पाशादेश्च लिनूल्यौ क्रमेण भवतः । पाशानां समूहः पाश्या । धूम्या । तृण्या । अङ्गार्या । भिक्षादिपाठादणपि । आङ्गारम् । पिटाकपिटकौ वंशदलादिमये भाण्डे । पिटाक्या । पिटक्या । वन्या(२) । गव्या । स्त्रीलिङ्गार्थमस्य पाठः । यप्रत्ययस्तु गोर्य्योऽजादेरित्यनेनैव सिद्धः । रथ्या ॥

स्नेहाद्वहन्तीक्षणमुत्कटाक्षाविश्येव शल्यं हृदये दधाना ।
उच्चाल्यमानातुरगैः परिश्वस्यानाद्विरोधेन चचाल रथ्या ॥

गोत्रारथकस्येत्यनेन गोत्रा । रथकस्या । शकस्या । वात्या । खलानां पिण्याकानां धान्यमर्दनभूमीनां दुर्जनानां च समूहः खल्या । पोत्या । प्रवहणसंघातः । गलो मत्स्यबन्धनविशेषः । गल्या । नड्या । तृणसंघातः ॥२५९॥

हलं जनः पटाकश्च ज्ञेयः पोटगलोऽपरैः ।
खलोकौ कुन्दुमोऽन्येऽपि स्युः खलादौ प्रयोगतः ॥२६०॥

---

(१) धनमिति पा० । (२) धन्येति पा० ।

हल्या। भिक्षादिपाठात् हालम्। जन्या। ग्रामादिसूत्रेण जनतेति च। प्रयोगद्वयं वामनमतेन। पटाक्या। वैजयन्तीसमूहः। पोटेन सश्लेषेण गलति पोटगलः। काशो नडश्च। पोटगल्या। अपरैरिति शाकटायनप्रभृतिभिः॥

इति पाशादिः॥

खलानां समूहः खलिनी। खल्याऽपि। ऊककुन्दुमौ निचयार्थौ। ऊकिनी। कुन्दुमिनी॥

यत्रैतास्तिलखलिनीशणोकिनीभिःशिप्रायास्तटमनुशालिकुन्दुमिन्यः।
गोत्रावानिहतवसैन्यसंनिवेशःसार्धंग्रामतयक्षतीयतेऽत्र देशे॥

अन्येऽपीति कुलटाप्रभृतयो द्रष्टव्याः॥ २६०॥ इति खलादिः॥

तालो धनुषि पीयूक्षा कण्टकारी त्रिकण्टकः।
श्यामाकपाटलाकाण्डा गोधूमेन्द्राविशाविमौ॥२६१॥

तालादेरित्यनेन तालादेर्गणात्षष्ठ्यन्ताद्विकारावयवयोरर्थयोरण् एव भवति। तालस्य विकारः तालं धनुः। तालमयमन्यत्। पीलुवाची पीयूक्षन्निति(१) क्षपणकः। पीयूक्षायाः पैयूक्षम्। काण्टकारम्। त्रैकण्टकम्। श्यामाकस्यौषधिविशेषस्य। श्यामाकी यवागूः। पाटला वृक्षः। तस्याः पाटलम्। पाटलिरिति भोजः। पाटलीत्यन्यः। काण्डं भस्म। गौधूमः। इन्द्राविशस्य वनस्पतिविशेषस्य। ऐन्द्राविशः॥ २६१॥

बर्हिणेन्द्रालिशौ मुञ्जो बिल्ववेणुगवेधुकाः।
कुटीरव्रीहिकर्पासीकर्कन्धूशिंशपेक्षवः॥ २६२॥

बार्हिणम्(२)। इन्द्रालिशस्य वनस्पतिविशेषस्य। ऐन्द्रालिशः। मुञ्जस्य विकारो मौञ्जी। यथा—पिशङ्गमौञ्जीयुजमर्जुनच्छविम्॥
बैल्वः। वैणवः। गवेधुका। ओषधिः। तस्या गावेधुकः। कौटीरः। व्रैहः। कार्पासः। कार्कन्धवः। शांशपः। ऐक्षवः॥ २६२॥

---

(१) पीयुक्षा—पीयूक्षा पीलुद्रुमः। तद्विकारः पैयूक्षमिति वर्द्धमानः। चापपीयूक्षेत्येकः शब्दइति तत्त्वबोधिनीस्वारस्यम्।

(२) बर्हिणोऽवयवो बार्हिणं मयूरपुच्छम्। तद्विकारो बार्हिण इति टि०।

चयखदिरमसूरान्(१) सीसकंसौ शिरीषं रजतचमरलोहान् पीतदारुं पलाशम्। अपि च वचकरीरेन्द्रायुधस्पन्दनानि शृणु तदनु यवासोदुम्बरं तीव्रदारुम् ॥२६३॥

चायः (२)। खादिरः। मासूरः। सैसः। कांसः। शैरीषः। राजतः। कलशः। चामरम्। लौहः। पैतदारवः। पालाशः। वचस्य वंशविशेषस्य। वाचः। कारीरः। इन्द्रायुधस्य वनस्पतिविशेषस्य। ऐन्द्रायुधः। स्पान्दनः। यावासः। औदुम्बरः। तैव्रदारवः। श्लेष्मातकवृक्षविशेषवाची तीव्रदारुरित्यन्यः ॥ २६३ ॥

विकङ्कतश्च पूलासो(३) रोहीतकविभीतकौ।
व्याघ्रकाञ्चनमर्थे स्याद्विकारेऽवयवे तथा ॥२६४॥

वैकङ्कतः। पौलासः (४)। रौहीतकः। वैभीतकः। वैयाघ्रं चर्म। काञ्चनस्य विकारः—काञ्चनम्। यथा—

सकाञ्चनेयत्रमुनेरनुज्ञयानवाम्बुदश्यामतनुर्न्यविक्षत।

यथा वा। काञ्चनेनकिमिवास्यपत्रिणाकेवलंनसहतेविलङ्घनम्।

ये तु नाधीयते तेऽभेदोपचारादेवात्र काञ्चनशब्दः काञ्चनविकारे प्रयुक्त इति समर्थयन्ति। तालादीनामादिवृद्धिमतां नित्यं मयटि प्राप्ते तदन्येषां तु विकल्पितेऽण्वचनम्। अन्यमते स्वरश्च प्रयोजनम्। तालादिषु हेमशब्दो द्रष्टव्य इति केषांचिन्मतम्। तथा च। तदण्डमभवद्धैममिति पुराणादौ। पादेन हैमं विलिलेख पीठमिति कालिदासस्य। समुद्रोपत्यका हैमीति भट्टेः। अणि हि प्रकृतिभावे सति हैमनमिति स्यात्। न च वाच्यम् अकारान्त एवायमिति हेम्नः संलक्ष्यते ह्यग्नाविति कालिदासस्य—

येषामशेषभुवनाभरणस्यहेम्नस्तत्त्वंविवेक्तुमुपलाःपरमंप्रमाणम् ॥

---

(१) चयखदिर० इति पा०। (२) चापं धनुः। चापी कोटिः। चयेति क्वचित्पाठः॥ (३) पूलाशो० इति पा०। (४) पौलाशः। पुलाकस्तुच्छधान्यम्—पौलाकम्। पूलाक इत्यन्ये। पूलास इति पाठे पूलासो ग्रामविशेषस्तस्यैकदेशः पौलास इति पा०॥

इति च भलूटस्य प्रयोगे नकारान्तस्यैवोपलब्धेः। न च मुनित्रयेण साक्षादननुमतमित्येतावतोपेक्षापेक्षमेतदिति सुवचं वहुतरलक्ष्यक्षतिप्रसङ्गात्। तथाहि त्रिफलेत्यजादिपु मुनित्रयेणसाक्षादननुमतमित्यप्यभ्युपगतमेव। अङ्गगात्रकण्ठेभ्यश्चेत्येतदपि मुनित्रयाप्रदर्शितमपि शिष्टैरिष्टमेव। शाकटायनोऽपि हेमादिभ्योऽञित्यनेनाञ्विधानमन्त्याजादिप्रलुगर्थमाह तेन हैमं सारसनं (१)। हैमी यष्टिरिति सिद्धम्। सहृदयचक्रवर्त्तिना वामनेन तु हेम्न इति सूत्रेण विकारेऽर्थेऽन्त्याजादेर्लुक् कृत एव। अणूहेमार्थादित्यत्र मानव्यां वृत्तौ हैमी हेममयी रशनेत्युदाहृतं च ॥२६४॥ इति लालादिः ॥

शरदर्भकुटीसोमा भवेतां तृणबल्वजौ।

स्तो राजन्यात्मकामेयौ वैकर्णश्च वसातिना ॥२६५॥

शराद्येकाजप्राणिन्येवेत्यनेन मयट्। शराणां विकारोऽवयवो वा शरमयम्। दर्भमयम्। कुटीमयम्। सोममयम्। तृणमयम्। वल्वजमयम् ॥

येषाशरमयीर्दर्भमयीस्तृणमयीः कुटीः।

कुटीमयीः सोममयीस्तावल्वजमयीः स्तुमः ॥ इति शरादिः ॥

राजन्यभौरिक्येषु कार्यादिभ्योऽकञ् विधभक्ता इत्यनेन तस्य राष्ट्रमित्यर्थे राजन्यादेरकञ् भौरिक्यादेर्विध ऐषुकार्यादेर्भक्त एते प्रत्ययाः क्रमेण भवन्ति। राजन्यानां जनपदः राजन्यकः। पीठमर्दराजवयस्येषु रूढो राजन्यशब्द इत्यन्यः। आत्मकामेयकः। वैकर्णकः। विकर्ण इत्यन्यः। वासातकः। अत्रास्य पाठानङ्गीकाराद्वासातमित्यन्यः ॥ २६५ ॥

वाभ्रव्यानृतदेवयातवयुतो दाक्षायणो वातव—

स्तीव्रोदुम्बरमालवार्जुनफणः पुत्रोऽम्बरीपात्परः।

शालङ्कायनदाक्षितैलुकलितो वैराटशैलूपकौ—

त्रैगर्त्तश्च वसानवैल्ववनकौ स्यात्संप्रियस्तैल्वलः ॥२६६॥

वाभ्रवकम्। आनृतस्य (२) आनृतकः। आवृतक इत्यन्यः। दैवयातवकः। दैवयातव इत्यन्ये। देवयात इत्यपरे। दाक्षायणकः। वतोरपत्यं

(१) हैममासनमिति पा० ॥

(२) अनृतस्य—आनृतकः। अत्रानृतशब्दस्तद्वति वर्त्तते लक्षणया इति पा०।

वातवः । तस्य—वातवकः । वात्रव इत्यन्यः । तीव्रस्य—तैव्रकः । अस्य पाठो वामनमतेन । औदुम्बरकः । औदुम्बर इत्यन्यः । मालवस्य राज्ञः मालवकः । अर्जुनफण इति । आर्जुनायन इत्यर्थः । तस्य आर्जुनायनकः । आम्बरीषपुत्रकः । शालङ्कायनकः । दाक्षकः । तैलोः तैलवकः । अस्य पाठो वामनमतेन । वैराटको राजा । विराट इत्यन्यः । शैलूषकः । शैलूषज इति दिग्वासाः । त्रैगर्त्तकः । त्रिगर्त्त इत्यन्यः । वासानकः । बिल्ववने भवो जातो वा । बैल्ववनः । तस्य बैल्ववनकः । शैलूषबैल्ववनशब्दौ सूत्रे कप्रत्ययान्तौ निर्दिष्टौ । साम्प्रियकः । सम्प्रिया दाक्षी च नाम्ना स्त्री पुरुषो वा राजा । तस्य—सांप्रियकः । दाक्षक इति तु वामनः । तैल्वलकः । बैल्वल इत्यन्यः ॥

आकृतिगणोयम् । तेन जालन्धरायणः । और्णनाभः । जालन्धरः । कौत्तालप्रभृतयो द्रष्टव्याः ॥२६६॥ इति राजन्यादिः ॥

भौरिकिसैकयतावथचैकयतो भौलिकिश्च काणेयः ।
चौपयतश्चैटयतो वाणिजको वालिकाज्यश्च ॥ २६७ ॥

भौरिकीणां राज्ञां जनपदः भौरिकिविधम् । विधभक्तप्रत्ययान्तानां स्वभावान्नपुंसकलिङ्गतैव । चन्द्राद्याः पुंस्त्वमपि दर्शयन्ति । सैकयतविधम् । चैकयतविधम् । क्षैजयतचौदयतावित्यपि कश्चित् । भौलिकिविधम् । काणेयविधम् । चौपयतविधम् । चैटयतविधम् । वणिजोऽपत्यं वाणिजः । के वाणिजकः । तस्य वाणिजकविधम् । वालिकाजस्यापत्यं कुरुकोसलेत्यादिना ण्यचि । वालिकाज्यः । तस्य वालिकाज्यविधम् ॥ २६७ ॥ इति भौरिक्यादिः ॥

ऐषुकारिः शयण्डश्च सौवीरो वैश्वमानवः ।
दासमित्रिर्नडः शौण्डः शायाण्डो वैश्वधेनवः ॥ २६८ ॥

इषुकारस्यापत्यानि ऐषुकारयो राजानः । तेषां जनपदः । ऐषुकारिभक्तम् । शयण्डभक्तम् । शयाश्च इत्यपि भोजः । सौवीरभक्तम् । वैश्वमानवभक्तम् । वैश्वमाणव इत्यन्यः । दासमित्रिभक्तम् । दासमित्र इत्यन्यः । नडभक्तम् । शौण्डभक्तम् । शायाण्डभक्तम् । शायाण्डिरित्यन्यः । वैश्वधेनवभक्तम् । अन्ये तु वैश्वभक्तं धैनवभक्तमिति पृथगाहुः ॥२६८॥

दृढ्यक्षत्र्यक्षौ दासमित्रौडचान्द्राः खाडः शौद्रो
दाक्षिसारस्यजौलाः । शायण्डोऽथो ताक्ष्यशौभ्रौ
फणन्ता एते ज्ञेया विश्वतुण्डाच्च देवः ॥ २६९ ॥

द्व्यक्षायणभक्तम् । त्र्यक्षायणभक्तम् । गणपाठाद्वृद्ध्यभावः । द्व्याक्षायणः । त्र्याक्षायण इत्यन्यः । दासमित्रायणभक्तम् । औडायनभक्तम् । चान्द्रायणभक्तम् । खाडायनभक्तम् । खादायन इत्यन्यः । शौद्रायणभक्तम् । शौद्रकायण इत्यन्ये । दाक्षायणभक्तम् । राजन्यादिपाठाद् दाक्षायणकम् । सारस्यायनभक्तम् । जौलायनभक्तम् । शायण्डायनभक्तम् । ताक्ष्यायणभक्तम् । शकटाङ्गमतेन । सौभ्रायणभक्तम् । चन्द्रमतेन । वैश्वदेवभक्तम् । तुण्डदेवभक्तम् । अन्ये तु विश्वभक्तं तुण्डभक्तं देवभक्तमित्याहुः । इत्यैषुकार्यादिः ॥२६९॥

नडप्लक्षकपोतेक्षुकाष्ठत्रिवेत्रवेतसाः ।
कृतह्रस्वन्लुचौ क्रुञ्चातक्षाणौ बिल्ववेणु च ॥२७०॥

नडादेः कुक् च इत्यनेन नडादेश्चातुरर्थिकश्छो भवति । नडा अत्र देशे सन्ति नडकीयः । नड्वल इति च । प्लक्षकीयः । कपोतकीयः । इक्षुकीयः । काष्ठकीयः । त्रिभिर्ऋषिभिर्निर्वृत्तं नगरम् । त्रिकीयम् । वेत्रकीयः । वेतसकीयः । क्रुञ्चकीयः । तक्ष्णा निर्वृत्तस्तक्ष्णां निवासः तक्षकीयः । बिल्वकीयः । वेणुकीयः । छान्तं केचित्पुंस्युदाहरन्ति । अपरे स्त्रियाम् ॥२७०॥ इति नडादिः ॥

अश्मयूथनददर्भशिखाषा वृन्दकन्दगुदकाण्डकुलानि ।
मीनगह्वगुडकुण्डलखण्डाः पीनपामनगकोटगुहाश्च ॥२७१॥

रादयोऽश्मादिभ्य इत्यनेनाश्मादिभ्योऽष्टादशभ्यो गणेभ्यश्चातुरर्थिका यथायथं र इत्यादयोऽष्टादश प्रत्यया भवन्ति । अश्मानोऽत्र देशे सन्ति । अश्मरम् । एवं यूथरम् ॥ यूष इत्यन्यः। नदरम् । दर्भरम् । शिखरम् । ङ्याप्त्वे ह्रस्वश्च बहुलमित्यनेन ह्रस्वत्वे सति । ह्रस्वत्वं नेत्यन्यः । ऊषरम् । वृन्दरम् । कन्दरम् । गुदरम् । काण्डरम् । कुलरम् । मीनरम् । गह्वरम् । गुडरम् । कुण्डलरम् । वामनमतेन । खण्डरम् । पीनरम् । वामनमतेन । पामरम् । नगरम् । कोटरम् । गुहरम् । ह्रस्वत्व नेत्यन्यः ॥२७१॥ इत्यश्मादिः ॥

सखिकरवीराशोका वासवसख्यग्निवायुतो दत्तः ।
छगलो गोफिलदत्तौ भल्लः पुरपालवज्राश्च ॥ २७२ ॥

सख्यादेर्ढण् । सख्या पुरुषविशेषेण निर्वृत्तम् । साखेयं नगरं मण्डलं वा । कारवीरेयम् । वैरेयमित्यन्ये । आशोकेयम् । वासवदत्तेयम् । साखिदत्तेयम् । आग्निदत्तेयम् । वायुदत्तेयम् । छगलो मुनिश्छागलश्च । छागलेयम् । गौफिलेयम् । गोभिल इति भोजः । दात्तेयम् । भाल्लेयम् । अन्त्यजातिर्भिल्ल इत्यन्यः। भल्लपालइति समस्तं भोजः। पौरेयम् । पालेयम् । वाज्रेयम् ॥२७२॥

कदलस्तमालरोहौ सपलचक्रौ कुशीरकः सरकः ।
सुरसः सीकरसमलौ सरमसरसचीरचक्रवाकाश्च ॥२७३॥

कादलेयम् । तामालेयम् । रौहेयम् । साप्तलेयम् । चाक्रेयम् । कौशीरकेयम् । शीरक इत्यन्यः । सारकेयम् । सौरसेयम् । सैकरेयम् । वामनमतेन । सामलेयम् । सारमेयम् । सारसेयम् । चैरेयम् । वीर इत्यन्ये । चाक्रवाकेयम् ॥

एते सख्यादयः प्रायः पुंविशेषवृत्तयः । ततस्तन्निवासेऽपि ढण् विधेयः । करवीरसीकरचक्रछगलप्रभृतयः स्वार्थवृत्तयः । तेषां च तदत्रास्तीत्यर्थे प्रत्ययः ॥ २७३ ॥ इति सख्यादिः ॥

संकाशकश्मीरपचारनासाश्चूडारयूपौ पलितानुनाशौ ।
मन्दारकूटौ दशकोविदारशीर्षाश्मतीर्थाशमडारकुम्भाः ॥२७४॥

संकाशादेर्ण्यः । संकाशेन राज्ञा निर्वृत्तम् । सांकाश्यम् । काश्मीर्यम् । पाचार्य्यम्। वामनमतेन। नास्यम्। चौडार्यम्। यूपा अस्मिन् सन्ति यौप्यम्। पालित्यम् । आनुनाश्यम् । वामनमतेन । मन्दाराणामदूरभवं मान्दार्यम् । कौट्यम् । कुट इत्यन्यः । दंशस्य दाश्यम् । कौविदार्यम् । शैर्ष्यम् । आश्मन्यम् । तैर्थ्यम् । आंश्यम् । माडार्यम् । मजार इत्यन्यः । कौम्भ्यम् ॥२७४॥

नाशिकासरकसूरचिरन्ताः काम्पिलः समलखण्डितसीराः ।
पञ्जरप्रगदिनाथनलाङ्गा रोमलोमपुलिना मगदी च ॥२७५॥

नाशिका नाम राक्षसी । तस्या निवासस्तया निर्वृत्तं वा । नाशिक्यम्(१)। सारक्यम् । सौर्यम् । चैरन्त्यम् । काम्पिल्यम् । कम्पील इत्यन्यः । समलेन

(१) नाशिका नाम० नासिक्यमिति पा० ।

निर्वृत्तम् सामल्यम् । खाण्डित्यम् । सैर्यम् । पाञ्चर्यम् । मागध्यम् । नगरं देशो वा । नाथ्यम् । नाल्यम् । आङ्गनम् । रौमण्यम् । लौमन्यम् । पौलिन्यम् । नागद्यम् । नगरं देशो वा ॥ २७५ ॥

सुपरिः कटिपः कलिवो मलिनागस्ती सकर्णको वृष्टिः ।
पन्थादेशः सुपथी मादितविकरौ च सूरसेनश्च ॥ २७६ ॥

सुपरिः कश्चिद्राजा । तेन निर्वृत्तम् । सौपर्यम् । काटिप्यम् । कालिव्यम् । कलित इत्यन्ये । मालिन्यम् । अगस्तिकुण्डिन्योरगस्तिकुण्डिनौ वेति लुचि । अगस्तीनां निवासः । आगस्त्यम् । अन्ये त्वगस्त्यस्यापत्यम् आगस्त्यः । ऋष्यणि । तस्यागस्त्यम् । साकर्णक्यम् । वृष्टिना निर्वृत्तम् वार्ष्टेयम् । वृष्टिर्नाम काचित्स्त्री । तस्या निवासो वार्ष्टेयमित्यपरे । सुपथोऽदूरभवं सुपथं वात्रास्तीति सौपथ्यम् । मादिता स्त्री काचिदित्यन्यः । वैकर्यम् । सौरसेन्यम् । गोभिल-चक्रचक्रवाकाशोकच्छगलकुशीरकयमलमुरुमन्मथशब्दानभयनन्दी गणेऽस्मिन् ददर्श ॥ २७६ ॥ इति संकाशादिः ॥

बलश्चुलः पुलोलौ च नलो दुलदलौ वनम् ।
वडशब्दः कुलं मूलं लकुलोरलसंयुतम् ॥ २७७ ॥

बलादेर्यः । बलेन निर्वृत्ता । बल्या नाम नगरी । एवं चुल्या । पुल्या । वामनमतेन । तुल इति शाकटायनः । उल्या । नल्या । दुल्या । दल्या । वन्या । वड्या । वामनमतेन । कुल्या । मूल्या । मुल इत्यन्ये । लकुल्या । उरल्या । एते यप्रत्ययान्ताः स्त्रीलिङ्गाः । अन्ये तु बल्यादीनां नपुंसकता-माहुः ॥ २७७ ॥ इति बलादिः ॥

पक्षतुषचित्रकुम्भाः कुण्डोमकराण्डहंसका रोम ।
लोमसुवर्णकसमलाः कम्बलिकाकुत्ससकलाश्च ॥ २७८ ॥

पक्षादेः फण् । पक्षेण निर्वृत्तं पक्षस्य निवासो वा । पाक्षायण नगरं राष्ट्रं वा । तौषायणम् । तुक्ष इति वामनः । चैत्रायणम् । चित्रेत्यन्यः । कौम्भायनम् । कौण्डायनम् । माकरायणम् । वामनमतेन । आण्डायनम् । हांसकायनम् । रौमायणः । लौमायनः । सौवर्णकायनः । वामनमतेन । सामलायनः । काम्बलिकायनः । कौत्सायनः । वामनमतेन । साकलायनः ॥२७८॥

पन्थादेशे विहिते पन्थिन्शब्दो निगद्यते कृतिभिः ।
यमलविलहस्तिहस्ताःसिंहकसरकौ खिलास्त्यतिश्वानः॥२७९॥

पान्थायनः । यामलायनः । बैलायनः । हास्तिनायनः । हास्तायनः । सैंहकायनः । सारकायणः । खैलायनः । आस्तायनः । द्वयं वामनमतेन । आतिश्वायनः । अतिश्व इत्यन्यः ॥ २७९ ॥

सीरको लोमकः शीर्षनिवातौ च सकर्णकः ।
अंशुकः(१) सरसः पाकः सहको वलिकः कला ॥२८०॥

सैरकायणः(२) । लौमकायनः । शैर्षायणः । नैवातायनः। वामनमतेन। साकर्णकायनः । आंशुकायनः(३) । सारसायनः । पाकायनः । साहकायनः । वालिकायनः । कालायनः ॥ २८० ॥ इति पक्षादिः ॥

कर्णार्कजीवन्तजवानडुह्या आण्डीवतोऽथ द्रुपदश्च जैत्रः ।
स्फिगर्कलूषाकनपाञ्चजन्याः कुन्तीवशिष्ठःकुलिशश्चजित्वा२८१

कर्णादेः फिञ् । कर्णेन निर्वृत्तः । कर्णस्य निवासो वा । कार्णायनिः । अर्को गुल्मः स्फटिकश्च । आर्कायणिः । जीवन्त ऋषिः । जैवन्तायनिः । जावायनिः । वामनमतेन । आनडुह्यायनिः। आण्डीवतायनिः। आण्डीवदित्यन्यः । द्रौपदायनिः । जैत्रायणिः । स्फैजायनिः । फिगेत्यन्यः । अर्कलूषऋषिः । आर्कलूषायणिः । अन्ये त्वर्कलुष इति । आकनायनिः । आक्रिनी स्त्रीत्यन्यः । पाञ्चजन्यायनिः । कौन्तायनिः । कुम्भी कुम्भो वेत्यपरे । वाशिष्ठायनिः (४)। कौलिशायनिः । जित्वा धर्मः जैत्वायनिः(५)। जित्येत्यन्यः॥२८१॥इति कर्णादिः॥

ज्ञेयाः सुतङ्गमाजिरजीवार्जुनविप्रचित्तमुनिचित्ताः ।
श्वल्गुक्रमहापुत्राः खण्डककर्णौ महाचित्तः ॥ २८२ ॥

सुतंगतादेरिञ् । सुतंगमेन निर्वृत्तं सुतंगमस्य निवासो वा । सौतंगमिः । आजिरिः । जैविः । अर्जुनं तृणं अर्जुनश्च पार्थः । आर्जुनिः । वैप्रचित्तिः ।

---

(१) अंशक इति पा० । (२) शैरकायण इति पा० । (३) आंशकायन-इति पा० । (४) वासिष्ठायनिरिति पा० । (५) जित्वनां निवासो जैत्वायनिरित्यधिकम् ।

मौनिचित्तिः । शौवनिः । शौक्रिः । माहापुत्रिः । खाण्डिकिः । वामनमतेन(१) खण्डितइत्यन्यः । कार्णिः । माहाचित्तिः ॥ २८२ ॥

बीजवापिस्वनश्वेतगडिकाविग्रविग्रहौ ।
एषां सुतंगमादित्वादिञूचे चातुरर्थिकः ॥२८३॥

बैजवापिः । अन्ये तु बीजइति वापिन्निति पृथगाहुः । स्वानिः । वामनमतेन । श्वैतिः । गाडिकिः । गदिक इत्यन्यः । वैग्रिः । वैग्रहिः । चातुरर्थिक इति निवासोऽदूरभवो नाम्नि देशे तेन निर्वृत्तस्तदत्रास्ति च ॥२८३॥

इति सुतङ्गमादिः ॥

वराहबाहू अथ शर्करा निमग्नः शिरीषश्च तथाविदग्धः ।
ज्ञेयो वलाहः खदिरो विभग्नः स्थूलः पलाशः पिनिनद्धबद्धौ २८४

वराहादेः कञ् । वराहा अत्र देशे सन्ति । वाराहकम् । बाहुकम् । शार्करकम् । बल्वजादिपाठाद्वुः । शर्करिकम् । शर्करायाष्ठण्ञ्छौ वेत्यनेन शार्करिकम् । शर्करीयम् । शार्करम् । शर्कराइति देशसञ्ज्ञास्वभावादभेदोपचाराद्वा । नैमग्नकम् । शैरीषकम् । वैदग्धकम् । निजग्ध इत्यप्यन्यः । वालाहकम् । खादिरकम् । वैभग्नकम् । विभक्त इत्यन्ये । स्थौलकम् । पालाशकम् । पिनिनद्धबद्धाविति पिनिभ्यां नद्धबद्धौ क्रमेण ज्ञेयावित्यर्थः । पैनद्धकम् । नैबद्धकम् ॥ २८४ ॥ इति वराहादिः ॥

कुमुदं कुण्डलकूटौ मुनिस्थलाश्वत्थघासकुन्दाश्च ।
मधुकर्णदशग्रामौ शाल्मलिरथकारगोमठशिरीषाः ॥२८५॥

कुमुदादेष्ठञ् । कुमुदान्यत्र देशे सन्ति । कौमुदिकम् । कौण्डलिकम् । कौटिकम् । कूर्ण इत्यन्यः । मौनिस्थलिकम् । मुनिः स्थलश्चेत्यन्ये (२) । आश्वत्थिकम् । घासकुन्दिकम् । माधुकर्णिकम् । मुचुकर्णइति शकटाङ्गजः । शुचिकर्ण इत्यभयनन्दी । विगृहीतादपीष्यते । माधुकम् । कार्णिकम् । दाशग्रामिकम् । शाल्मलिकम् ॥ रथकारेण निर्वृत्तं तस्य निवासो वा । राथकारिकम् । गौमठिकम् । पर्वतो ह्रदो वा । गोमेध इत्यन्ये । शैरीषिकम् । अरीह-

(१) खाण्डिकिः । खाण्डिकिर्वामनमतेनेति पा० ।
(२) मुनिस्थलइति पाठे । मौनिकम् । स्थला स्थागाश्चस्थालिकमिति पा० ।

शादिपाठाच्छैरीषम् । शिरीषा इति बहुवचनान्तः । संज्ञावाची स्वभावात् सो-ऽयमिति सम्बन्धाद्वा । शार्करिकशब्दः पृथक् सूत्रेण सिद्ध इति नात्र पाठः २८५ इति कुमुदादिः ॥

अरीहणोद्दण्डविपाशांशिंशपाभलन्दनोदञ्चनखाण्डवीरणाः ।
सुयज्ञजम्बूकशकृत्स्नरैवताः शिरीषबिल्वौबधिरोऽथजाम्बवान् ॥

अरीहणादेरकञ् । अरीहणेन निर्वृत्तम् । आरीहणकम् । औद्दण्डकम् । वैपाशकम् । शिंशपानां वृक्षविशेषाणामदूरभवं । शिंशपा अत्र सन्तीति वा । शांशपकम् । देविकाशिंपाश्रेयोदीर्घसत्रस्यादित्यनेनैकारस्याकारः । भालन्दनकम् । औदञ्चनकम् । खाण्डवैरणकम् (१) । सौयज्ञकम् । जाम्बवकम् । काशकृत्स्नकम् । काशकृत्स्न इति भोजः । रायावती रैवतः । रैवतइत्यन्ये । रैवतकः पर्वतः। शैरीषकम् । बैल्वकम् । बाधिरकम् । जाम्बवता निर्वृत्तम् । जाम्बवतकम् । अन्ये जाम्बवतोऽपत्यं जाम्बवत इत्याहुः ॥ २८६ ॥

खाडगोमतमैत्रोष्ट्रत्रैगर्ता वैमतस्तथा ।
शाण्डिल्यसांपरौ भास्त्र आयनान्ता अमी मताः ॥२८७॥

खाडायनकम् । गौमतायनकम् । मैत्रायणकम् । श्वैत्रायणक इत्यपरः । औष्ट्रायणकम् । त्रैगर्त्तायनकम् ॥ वैमतायनकम् । शाण्डिल्यायनकम् । सांपरायणकम् । भास्त्रायणकम् ॥ २८७ ॥

खदिरो विपथः खण्डुर्भगलो द्रुघणस्तथा ।
सुशर्मकनलोलन्दा(२) रायस्पोषश्च वीरणः ॥२८८॥

खादिरकम् । वैपथकम् । खण्डुना निर्वृत्तम् । खाण्डवकम् । खण्डुरित्यन्यः। भागलकम् । द्रुघणा अत्र सन्ति । द्रौघणकमिति वामनः । द्रुहणइति भोजः। सौशर्मकम् । कानलकम्(३) । औलन्दकम् । रायः पोषः। रायस्पोषः। अतएव निपातनाद्विभक्तेरलुग्विसर्गस्य सकारः। रायस्पोषकम्। वैरणकम्॥२८८॥

---

(१) खाण्डवीरणकम् । खाण्डवैरणकमिति केचित् । अनुशतिकादेराकृतिगणत्वादिति पा० । (२) सुशर्मकतलो० इति पा० ।
(३) सौशर्मिकम् । कातलकमिति पा०

क्रिरणो यज्ञदत्तश्च दलता सौमतायनः ।
क्रौष्टृधौमतसौसैन्द्रसौसकौद्राः फणन्तकाः ॥ २८९ ॥

कैरणकम् । याज्ञदत्तकम् । दलत्रा निर्वृत्तं दलतुः पर्वतस्य वादूरभवम् दालत्रकम् । सौमतायनकम् । क्रौष्टायणकम् । धूमतस्यापत्यं धौमतिः। तस्यापत्यं युवा धौमतायनः । तस्य (१) धौमतायनकम् । सोमस्य सौमायनकम् । इन्द्रस्य । ऐन्द्रायणकम् । सुष्ठु स्यतीति सुसः । तस्य सौसायनकम् । कुद्रस्य कौद्रायणकम् । एतेषां धौमतायनवत्प्रक्रिया ॥ २८९ ॥ इत्यरीहणादिः ॥

कृशाश्वकूटाजिनवेश्मलोमशा विशालधूमौ सुकरश्च वर्चलः।
अरिष्टमौद्गल्यपराशरारुपः सुवर्चलारिश्मपुरारसूकराः २९०

कृशाश्वादेश्छण् । कृशाश्वेन निर्वृत्तम् काशाश्वीयम् । कौटीयम् । आजिनीयम् । वैश्मीयम् । लौमशीयम् । वैशालीयम् । धौमीयम् । सौकरीयम् । वार्चलीयम् । वर्तुलइत्यन्ये(२) । आरिष्टीयम् । मौद्गलीयम् । पाराशरीयम् । आरुषीयम् । सौवर्चलीयम् । आरिश्मीयम् । आरिष्य इत्यन्यः । पौरारीयम् । वामनमतेन । सौकरीयम्(३) ॥ २९० ॥

अवनतसदृशायोरोमका लोमकश्च प्रतरसुखविविक्तासायसाः पूतरश्च । विनतपुरगदासीपूकराः पूगरश्चाऽजिनतसतुलवेष्ये-शोऽरसा धूकरश्च ॥२९१॥

आवनतीयम्। सादृशीयम्। आयसीयम्। रौमकीयम् । लौमकीयम् । प्रातरीयम् । सौखीयम् । सिपल इत्यन्ये । वैविक्तीयम् ॥ आसायसीयम् । सायसइत्यन्यः। पूतरो जलजन्तुः । पौतरीयम् ॥ अथ वामनमतेन ॥ वैनतीयम् । पौरगीयम् । पुरगा नाम काचिद्राक्षसी तया भक्षितं पाटलिपुत्र तस्या निवासः पौरगीयमित्यन्यः ॥ दासीयम् । पुव करोति पूकरः । तस्य पौकरीयम्। पूगान्यस्य सन्ति पूगरः। तस्य पौगरीयम् । आजिनतीयम् । सातुलीयम्।

---

(१) धौमतायनः । तस्य धौमतायनकमिति पा० । ( २ ) वर्त्तुलशब्दं केचित्पेठुः । वार्त्तुलीयम् इति पा ० । (३) शौकरीयम् इति पा ० ।

वामनमतेन । वैष्वीयम् । ऐरसीयम् । आरसीयम् (१) । धौकरीयम् । केचित्पुंलिङ्गमपरे तु स्त्रीलिङ्गमुदाहरन्ति ॥ २९१ ॥

विकुष्यासासुरावेतौ शबलश्चाभितो जनः ।
रोमशश्च कृशाश्वादौ ज्ञेयाश्छणप्रत्ययान्विते ॥२९२॥

वैकुष्यासीयम् (२) । विकुष्यइत्यन्ये । आसुरीयम् । शाबलीयम् । आभिजनीयम् । रामशीयम् ॥ २९२ ॥ इति कृशाश्वादिः ॥

ऋश्यस्थूलनिलीनकर्दमशरा बाहुर्निधानाशनि—
न्यग्रोधाः परिगूढखण्डखदिरा वेणुः सितः शर्करा ।
अश्मांशू परिवंशवीरणमता वेश्मोपगूढाविमौ—
दण्डश्चानडुहोत्तराश्मपरितो वृत्तोनिबन्धारडू ॥ २९३ ॥

ऋश्यादेः कः । ऋश्या अत्र देशे सन्ति । ऋश्यैर्निर्वृत्तं वा । ऋश्यकम् । स्थूलकम् । निलीनकम् । कर्दमकम् । शरकम् । बाहुकम् । निधानकम् (३) । अशनिकम् । न्यग्रोधकम् । परिगूढकम् । खण्डकम् । खदिरकम् । वेणुकम् । सितकम् । शर्करकम् । अश्मकम् । अंशुकम् । परिवंशकम् । वीरणकम् । मतकम् । वेश्मकम् । उपगूढकम् । दण्डकम् । अनडुहोत्तराश्मेति समाहारद्वन्द्वः । अनडुहकम् (४) । उत्तराश्मकम् । परितोवृत्तइति परिवृत्तइत्यर्थः । तस्य परिवृत्तकम् । निबन्धकम् ॥ अरडुस्तरुविशेषः । तस्य अरडुकम् ॥ २९३ ॥ इत्यृश्यादिः ॥

बल्वजः कूपबीजे च यवासेक्कटकङ्कटाः ।
शिरीषः शकटाश्वत्थपरिवापविकङ्कतम् ॥ २९४ ॥

बल्वजादेरिकः । बल्वजा अत्र देशे सन्ति । बल्वजिकम् । कूपिकम् । बीजिकम् । यवासिकम् । यवाषइत्यन्यः । इक्कटिकम् । कङ्कटः संनाहः सीमा

---

(१) औरसीयमिति कश्चित् । (२) वैकुष्याशीयमिति पा० । (३) विधान इत्यन्ये । (४) आनडुहोत्तर० आनडुहकमिति ।

च कङ्कटिकम् । शिरीषिकम् । शर्करिकम् । अश्वत्थिकम् । परिणापिकम् । विकङ्कतिकम् ॥ २९४ ॥

शर्कराऽथ दशग्रामो न्यग्रोधः कुमुदं कचः ।
मध्यश्वसंकटा गर्त्तनिर्यासौ गदिताविह ॥ २९५ ॥

शर्करिकम् । दशग्रामिकम् । न्यग्रोधिकम् । कुमुदिकम् कचिकम् । मधुकम् । अश्विकम् । द्वयं वामनमतेन । संकटिकम् । गर्त्तिकम् । निर्यासिकम् । केचिद्बल्वजिकाकुमुदिकेत्यादिस्त्रीलिङ्गमुदाहरन्ति तत्र लोकः प्रमाणम् ॥ २९५ ॥ इति बल्वजादिः ॥

काशपाशतृणाश्वत्थाः पलाशवनकङ्कटाः ।
वासकर्दमपीयूक्षा गुहाकर्पूरबर्बराः ॥ २९६ ॥

काशादेरिलः । काशस्तृणविशेषः । काशा अत्र सन्ति । काशिलम् । पाशिलम् । तृणिलम् । अश्वत्थिलम् । पलाशिलम् । वनिलम् । कङ्कटिलम्(१) वासो गुल्मविशेषः। वास्यन्ते रुवन्तीति वासाः पक्षिण इत्यन्यः। वासिलम् । कर्दमिलम् । पीयूक्षिलम् । गुहिलम् । कर्पूरिलम् । बर्बरो म्लेच्छजातिः । बर्बरिलम् ॥२९६॥

मधुरग्रहवच्छूलाः कपित्थश्चरणो बिसः ।
नडोऽथ जतुसीपालौ गणे काशादिसंज्ञिते ॥२९७॥

मधुरिलम् । ग्रहिलम् । वच्छूलिलम् । कपित्थिलम् । चरणिलम् । बिसिलम् । नडिलम् । जतविलम् । सीपालिलम् (२) ॥२९७॥ इति काशादिः ॥

तृणमूलसुवर्णार्णा वराणवर्णौ वनार्जुनौ पर्णम् ।
नडबलबिलबुलचरणा बुसः फलं चात्र विज्ञेयम् ॥२९८॥

तृणादेः सः । तृणान्यस्मिन्देशे सन्ति । तृणसा नदी नगरी सरसी पर्वतिका । मूलसा । सुवर्णसा । अर्णो जलम् । तदत्रास्तीति । अर्णसा नदी । पाठसामर्थ्यात्सलोपः । अर्ण इत्यकारान्ता प्रकृतिरित्यन्ये (३) । वराण इति

---

(१) कण्टकिलमिति पा० । (२) सीपालो नाम कश्चित्तेन निर्वृत्त सीपालिकमिति पा० । (३) गणे लुप्तसकारस्योपादानात्सकारनिवृत्तिः । अदन्त एवायमित्यन्ये इति पा० ।

वीरणाभिधानम् । तदस्तित्वाद्द वराणसी । तस्या अदूरभवा वाराणसी नगरी । वराणसो देशस्तत्र भवा वाराणसी नगरीत्यन्ये । वर्ण इति वीरणाख्या। वर्णसा । वनसा । अर्जुनसा दिग्वस्त्रमतेन । जन इति शकटाङ्गजः । पर्णसा । नडसा । वलसा । बिलसा । पुलसा । चरणसा । बुससा । फलसा । दिग्वस्त्रमतेन ॥२९८॥ इति तृणादिः ॥

प्रेक्षा स्यात्परिवापसंकटकटाः कूपो यवासः पुटः—
संलक्ष्या ध्रुवका महश्च धुवका कैश्चित्कपिः कोविदैः ।
ज्ञेयः कङ्कटबन्धुकापुकबुका गर्तेक्कटौ कूपको—
न्यग्रोधक्षिपकाहिरण्यफलकाः प्रेक्षादिरेवं गणः ॥२९९॥

प्रेक्षादेरिन् । प्रेक्षा बुद्धिः । तया हेतुना निर्वृत्तः । प्रेक्षी ग्रामः । अथवा प्रेक्षा अत्र सन्ति । प्रेक्षी देशः । प्रेक्षाशब्दो यद्यपि प्रेक्षणवाची तथाप्यत्र पक्षे रूढिनो नदीसरसीस्थल्यादिवृत्तिर्द्रष्टव्यः । परिवापो वीजनिक्षेपः । परिवापी । सङ्कटं सङ्कीर्णता । सङ्कटी । कटः पर्यन्तः । कटी । कूपी । यवासो दुःस्पर्शः । यवासी । पुटी=ध्रुवका । आवपनविशेषः । ध्रुवकी । मह उत्सवः महो । धुवका=आवपनविशेषः । धुवकी । कैश्चिदिति दिग्वस्त्रप्रभृतिभिः कपिशब्दः संलक्ष्यः । कपी । कङ्कटः । सन्नाहः । कङ्कटी । वन्धुरेव वन्धुका । बन्धुकी । पुको दानम् । पुकी । बुको हास्यम् । बुकी । गर्त्तोऽवटः । गर्ती । इक्कट चषकः । इक्कटी । कूपको गुणवृक्षः । कूपकी । न्यग्रोधो वटः । न्यग्रोधी । क्षिपका—आयुधम् । क्षिपकी । हिरण्यं सुवर्णम् । हिरण्यी ॥ फलकम् (१) । आकाङ्क्षितसिद्धिरावरणं वा । फलकी । कूपगर्त्तपरिवापयवासहिरण्यशब्दाः शकटाङ्गजमतेनोपात्ताः ॥२९९॥ इति प्रेक्षादिः ॥

मध्विक्षू शररोमवेणुमरुतः शक्तीष्टकारिष्टयो-
वार्दालीशकलाकरीरकिशरासन्दीशलाकाहिमाः ॥
स्थाणुस्तक्षशिलाविसासुतिशमीसर्याणपार्दामिपी—
कर्कन्धूवटवेटकृष्यरुमणो वल्मीकपीडाखडाः॥३००॥

(१) हलका पुरविशेषस्तस्यादूरभवो हलकी ग्रामइत्यधिकम् ।

मध्वादेर्मतु । मधु पुष्परसादिः । तदत्र देशेऽस्ति । मधुमान् देशः । इक्षू रसालः । इक्षुमान् । शरो मुञ्जः । शरावान् । शरादीत्यादिना दीर्घत्वे ॥ शरुरित्यन्यः । रोम तनूरुहम् । रोमवान् । वेणुमान् । मरुतो देवा वायुश्च । मरुत्वान् । शक्तिः प्रहरणम् । शक्तिमान् । शुक्तिरित्यन्यः । इष्टका मृद्विकारः। इष्टकावान् । रिष्टिश्चन्द्रहासः । रिष्टिमान् । मदिराजातीयः सन्धानविशेषो रिष्टिशब्दइति वामनः । वादाली । ओषधिविशेषः वादालीवान् । पादाकी-त्येके । शकलो मत्स्यः । शकलावान् । कृतदीर्घोऽयं पठितः । शकलीवानि-त्यन्ये । करीरो वृक्षविशेषः । करीरवान् । किशरो गन्धद्रव्यम् । किशरावान् तृणजातिः । किशरुरित्यन्यः । आसन्दी वेत्रासनम् । आसन्दीवान् । शलाका-एषणी पूरणरेखा द्यूतोपकरणं च । शलाकावान् । हिमं तुहिनम् । हिमवान् । स्थाणुमान् । यवादेराकृतिगणत्वाद्धस्वाभावः । तक्षशिला नगरी । तक्षशिला-वान् । अक्षशिलेत्यन्यः । अक्षवान् । शिलावानित्येके । बिसवान् । आसुतिः सोमरसः । आसुतिमान् । आसुतीवानिति वामनाद्याः । ते ह्यासुतीशब्दं पठन्ति । सुत्येत्यन्य । शमी वृक्षः । शमीवान् । सर्याणः पर्वतः । सर्याणावान् ॥ सार्याण इत्यन्ये ॥ पार्दा वृक्ष । पार्दावान् । पार्दानाम काचित्स्त्रीत्यन्ये । आमिषी । ओषधिः । आमिषीवान् । कर्कन्धूः क्षुद्रबदरी । कर्कन्धूमान् । कर्क-न्धुरित्यन्यः । वटो न्यग्रोधः । वटावान् । वेटः पीलुवृक्षः । वेटावान् । ऋष्यो मृगविशेषः । ऋष्यावान् । रुमाँल्लवणविशेषस्तरुविशेषो वा । रुमण्वान् । रुव-दित्यन्यः । वल्मीको नाकुः । वल्मीकावान् । अयं दिग्वस्त्रमतेन । पीडावान् । खडस्तृणजातिः । खडावान् । अनद्यर्थमारम्भः ॥३००॥ इति मध्वादिः ॥

उत्कराश्मखदिरास्तृणवृक्षाविन्द्रवृक्षतिकपिप्पलशाकाः ।
आर्द्रवृक्षकपलाशसुवर्णश्यावनायसहिता विजिगीषा ॥३०१॥

उत्करादिश्छः । उत्करो दृषत्पांसुप्रचयः । सोऽस्यास्तीत्युत्करीयं नगरम् । अश्मीयम् । खदिरो वृक्ष । खदिरीयम् । तृणीयम् । वृक्षीयम् । इन्द्रवृक्षी-यम् । तिको राजा । तिकीयम् । पिप्पलोऽश्वत्थः पिप्पलीयम् । शाकं भक्ष्य-विशेष । शाकीयम् । आर्द्रवृक्षीयम् । पलाशीयम् । सुवर्णीयम् । श्यावनायो मुनिः । श्यावनायीयम् । विजिगीषीयम् ॥ ३०१ ॥

शालानेकखलाजिनातपफला जन्याजिनं पिप्पली—
मूलं संपरशूर्पणायपिचुका भस्त्रा च नैवाकवः ।
उत्क्रोशार्कनितान्तवृक्षशफरा गर्त्ताग्निवैराकणाः—
काशारण्यनिशान्तपर्णकितवाः क्षुद्राणकक्षान्तयः ॥३०२॥

शालीयम् । अनेकीयम् । खलाजिनीयम् । खण्डाजिन इत्यन्यः । आतपीयम् । फलीयम् । जन्या वधूस्तद्वाहिका वा । जन्यीयम् । अजिनीयम् । पिप्पलीमूलीयम् । सम्परो मुनिः । संपरीयम् । शूर्पणायो मुनी राक्षसो वा । शूर्पणायीयम् । पिचुकस्तूलकम् । पिचुकीयम् । भस्त्रीयम् । निवाकुर्निर्गुणः । तस्य निवासो नैवाकवः । तस्यादूरभवं नैवाकवीयम् । उत्क्रोशः कुररः । उत्क्रोशीयम् ॥ अर्को गुल्मः सूर्य्यश्च । अर्कीयम् । नितान्ता वृक्षा यत्र सन्ति स नितान्तवृक्षो देशः । तस्यादूरभवं नितान्तवृक्षीयम् । शफरो मत्स्यः । शफरीयम् । गर्तीयम् । अग्नीयम् । वैराकणो नामर्षिः । वैराकणीयम् । काशीयम् । अरण्यीयम् । निशान्तम् अन्तःपुरम् । निशान्तीयम् । पर्णीयम् । कितवो धूर्तो गन्धद्रव्यञ्च । कितवीयम् । क्षुद्रीयम् । क्षुद्रा राक्षसी तन्निवासः क्षुद्रीयमित्यन्ये । अणकम्—अधमम् । अणकीयम् । क्षान्तीयम् । चान्त इति भोजः ॥३०२॥

अश्वत्थनीचापकशङ्करेडावरोहितक्षारविशालवेत्राः ।
अरीहणत्रैवणचर्मखण्डवातागराः सम्पलमन्त्रणार्हौ ॥३०३॥

अश्वत्थीयम् । नीचानाप्नोतीति नीचापकः । नीचापकीयम् । शङ्करीयम् । इडाः स्त्रियः । इडीयम् । अवरोहितो नामर्षिः । अवरोहितीयम् । क्षारीयम् । क्षोध इत्यन्यः । विशालो नामर्षिः । विशालीयम् । वेत्रीयम् । क्षारवेत्रौ वामनमतेन । अरीहणः पुंविशेषः । अरीहणीयम् । त्रिवेण्या अपत्यं त्रैवणः । तस्य निवासस्त्रैवणीयम् । चर्मीयम् । शास्त्राभिधानवाचि वण्यमित्यन्यः । खण्डीयम् । वातागरीयम् । सम्पलो मुनिः । सम्पलीयम् । मन्त्रणार्हीयम् । उत्करादीञ्छप्रत्ययान्तान् केचित्पुंल्लिङ्गान् अपरे स्त्रीलिङ्गानाहुः ॥

एतेऽष्टादशाकृतिगणा वेदितव्याः । तेनान्येऽपि शब्दा यथादर्शनं द्रष्टव्याः । अन्यैस्तु नैयत्यमेषां प्रतिपादितम् । एतदीयशब्दानां चत्वारोऽप्यर्था यथासम्भवं द्रष्टव्याः ॥३०३॥ इत्युत्करादिः ॥

शौनकोऽथ तलवाजसनेयौ रज्जुकण्ठकठशाठकषायाः ।
स्कन्धसाङ्गरवतुम्बुरुताण्ड्या रज्जुभारकमलारुणयश्च ॥३०४॥

शौनकादिभ्यो णिन् इत्यनेन तेन प्रोक्तं वेदं विदन्त्यधीयते वेत्यर्थयोर्णिन् भवति । शौनकेन प्रोक्तं वेदं विदन्त्यधीयते वा । शौनकिनः । तालिनः । वाजसनाया अपत्यं वाजसनेयः । वाजसनेयिनः । राज्जुकण्ठिनः । काठशाठिनः । कठशाठाभ्यां प्रोक्तवेदवेदकाः । काषायिणः। कषय इति वामनः । स्कान्धिनः । स्कन्ध इति चन्द्रः । साङ्गरविणः । तौम्बुरविणः । ताण्डिनः । शकटाङ्गजभोजमतेन। राज्जुभारिणः । कामलिनः । आरुणिनः ॥३०४॥

हरिद्रुशाष्पेयपलिङ्गयुक्ताः शापेयखाडायनदेवदर्शाः ।
श्यामायनालम्बिऋचाभदण्डाः स्तम्भोलपौ स्तः परुषांसकश्च॥

हारिद्रविणः । शष्पमिव शष्पः । तस्यापत्यं शाष्पेयः । शाष्पेयिणः । पालिङ्गिनः । पुलिङ्ग इति वामनः । शपस्यापत्यं शापेयः । शापेयिनः । शाफेय इत्यन्ये । खडस्यापत्यं नडादिफणि । खाडायनः । खाडायनिनः । दैवदर्शिनः। वेददर्श इति वामनः। श्यामायनिनः । अलम्बस्यापत्यम् आलम्बिः। आलम्बिनः । आर्चाभिनः । ऋचभाग इत्यभयनन्दी । दाण्डिनः । चन्द्रवामनमतेन। स्ताम्भिनः । स्कम्भ इति शकटाङ्गजः । औलपिनः । परुषे अंसे अस्य परुषांसकः । पारुषांसकिनः ॥ सर्वेऽप्येते सोपज्ञवेदशाखानां प्रणेतारः प्रसिद्धाः। तदभिधायिनस्तु प्रोक्तप्रत्ययान्ताः शब्दा अध्येत्रादिविषयत्वात्स्वातन्त्र्यमुल्लङ्घ्य प्रयोगभाजो न स्युः । भोजमतमाश्रित्य वामनोक्तः कलापिशष्पप्राच्यादिविशेषो नाश्रितः। आकृतिगणोऽयम् । तेन तलवकाराश्वपञ्जमदावकण्ठेतरेयभाल्लविशाट्यायनप्रभृतयो द्रष्टव्याः ॥३०५॥ इति शौनकादिः ॥

उक्थन्यासवसन्तयज्ञशिशिरं चर्चा पुराणं गणः—
सञ्ज्ञातर्कपदक्रमाश्च गणितं लक्ष्यं च लोकायतम् ।
आयुर्वेदगुणेतिहासचरमं हेमन्तहेतू यजु—
र्वर्षाज्योतिषसंहिताशरदयो सङ्घाटवृत्तीतरम् ॥३०६॥

क्रतूक्थादिसूत्रान्ताट्ठक् इत्यनेन क्रतुवाचिन उक्थादेश्च ठण् । उक्थशब्दः सामलक्षणो यस्य औक्थिकमे वर्तमानो गृह्यते। उक्थं वेत्त्यधीते वा। औक्थिकः ।

औक्थिकशब्दाच्च प्रत्ययो न भवत्यनभिधानात् शकटाङ्गजस्तु याज्ञिकौक्थिक-लौकायतिकान् ब्राह्मणीत्ययेतत्सूत्रमाह। यज्ञोक्थाभ्यां ठण्। याज्ञिक्यौक्थिक्य-शब्दाभ्यां च ठण् इक्यलोपश्च निपात्यते। यज्ञं याज्ञिक्यं वा वेत्त्यधीते वा। याज्ञिकः। एवम्। औक्थिकः। लोकायतशब्दाद्वृणीकारः। लौकायतिकः। लौकायतिक इति न्यायादिपाठात्सिद्धम्। न्यासः पञ्जिका नैयासिकः। वस-न्तशब्दः कालसहचरिताध्ययने वर्त्तमानः प्रत्ययं लभते। एवं शिशिरहेमन्त-वर्षाशरद्ग्रीष्मशब्दा द्रष्टव्याः। वासन्तिकः। यज्ञार्थो ग्रन्थो यज्ञः। याज्ञिकः। चर्चा विचारणा(१)। चार्चिकः। चर्चाक इति वामनः॥

सर्गश्चप्रतिसर्गश्चवंशोमन्वन्तराणिच। वंशानुवंशचरितंपुराणंपञ्चलक्षणम्॥

पुरापि न नवं पुराणमिति निरुक्तम्। पौराणिकः। गाणिकः। सा-ङ्गिकः। तार्किकः। पादक्रमिकः। अन्यस्तु पदक्रमावित्याह। तन्मते क्रमा-दिपाठाद्वुनपि। गाणितिकः। गाणित इति वामनादयः। लाक्षिकः। लोकायतं बृहस्पतिमतानुसारिचार्वाकशास्त्रम्। लौकायतिकः। आयुर्वेदिकः। गौणिकः॥ इत्येवं ह्यासश्चित्तविकाशो यस्मिन् स इतिहासः। अथवा। इति ह आसीदिति यत्रेति। इत्येवमर्थे। हः किलार्थे पूर्वचरितम्। ऐतिहासिकः। चारमिकः। चरमप्रथमशब्दौ विशेषणवृत्ती विशेष्यस्य तु ग्रन्थस्य प्रकृतात्प्र-तीतिः। यद्वा क्रियाविशेषणवृत्ती चरममधीते चारमिकः। चरमो गुणश्चरम-गुणः। तस्य चारमगुणिक इत्यन्ये। हैमन्तिकः। हैतुकः। याजुष्कः। वामन-मतेन। वार्षिकः। ज्योतींष्यधिकृत्य कृतो ग्रन्थः ज्योतिषम्। सञ्ज्ञापूर्वको विधिरनित्य इति॥

अथवा। अनुत्तरपदकृतमनित्यमित्यौत्र भवति। ज्योतिषिकः। गण-निपातनादैत्त्वभावः। ज्योतींषि ग्रहनक्षत्रादीनि वेत्ति ज्यौतिषिक (२) इति वामनक्षीरस्वामिनौ॥ सांहितिकः। संहितापदे विषयभूते प्रत्ययं लभते। पद-विपर्यां संहितामधीयानः सांहितिकः। अन्यत्राण्। सांहित इत्यन्यः। शार-

---

(१) यद्वाङ्गरागश्चर्चा तत्प्रकारख्यापको ग्रन्थोऽपि चर्चा इत्यधिकम्।

(२) ज्योतींषि ग्रहादीनधिकृत्य कृतो ग्रन्थो ज्योतिषः। ज्योतिषं वेद ज्यौतिषिकः। इति पा०।

दिकः । सांघाटिकः । सङ्गता घटाः सङ्घटेत्यन्यः । सहघटया सघटेत्यन्यः । सङ्घट इत्यपरः (१) । वार्त्तिकः । ऐतरिकः । वामनतेन ॥ ३०६ ॥

श्लक्ष्णानुसूलक्षणसङ्ग्रहास्युर्ग्रीष्मो निरुक्तं पुनरुक्तमत्र ।
आथर्वणोऽथ प्रथमानुकल्पौ क्रमेतरन्यायकृतान्ततन्त्रम् ३०७

श्लाक्ष्णिकः । केचित् श्लक्ष्णाशब्दात्स्त्रीलिङ्गात्प्रत्ययं मन्यन्ते (२) । अनुसूर्ग्रन्थविशेषः । आनुसुकः । केऽणाडा इति ह्रस्वत्वे । लाक्षणिकः । साङ्ग्रहिकः । ग्रैष्मिकः । चन्द्रमतेन । नैरुक्तिकः । पौनरुक्तिकः । अथर्वर्षिः । तेन प्रोक्तो वेद आथर्वणः । त वेत्त्यधीते वा । आथर्वणिकः । पाठसामर्थ्यात् ग्लुग् न भवति । प्राथमिकः । प्रथमो गुणः प्रथमगुण इत्यन्यः । प्रथमकल्पादन्योऽनुकल्पः । आनुकल्पिकः । क्रमादितरः क्रमेतरः(३) । अक्रम इत्यर्थः । क्रामेतरिकः । नैयायिकः । कृतान्तं वेत्ति कार्त्तान्तिको मौहूर्त्तः । कृतान्तमाह पृच्छति वा । कार्त्तान्तिक इत्यन्यः । तन्यते तन्त्र्यते वानेन । तन्त्रं वैदिकं ज्योतिषादि । तान्त्रिकः । ज्ञातसिद्धान्तः ॥ ३०७ ॥

अनुगुणवर्षाशरदद्विपदा भारतपदेपदानुपदम् ।
अनुलक्ष्याख्यानं स्याद्विशेषपरिषन्मुहूर्तमप्येके ॥ ३०८ ॥

गुणस्य सदृशं गुणमनुगतं वा । अनुगुणम् । आनुगुणिकः । वर्षाश्च शरच्च वर्षाशरदम् । वार्षाशरदिकः । द्वैपदिकः । विपदेति वामनः । भारतिकः । पदं पदमध्येता । वीप्सायां द्विर्वचने निपातनात्पूर्वपदस्यैत्वे । पादेपदिकः । पदमनुगतम् अनुपदम् । आनुपदिकः । लक्ष्यमनुगतम् अनुलक्ष्यम् । आनुलक्ष्यिकः । आख्यानिकः । अत्यन्तव्यावृत्तबुद्धिहेतुविशेषः । स तत् शास्त्रं वा वेत्ति । वैशेषिकः । पारिषदिकः । पर्षच्छब्दोऽपि । परिषकपार्षदाविति वामनः । मौहूर्त्तिकः । वामनमतेन तु । मौहूर्त्तः । मुहूर्त्तमित्युपलक्षणम् । तेन नैमित्तिकः । अस्मिन्मते नैमित्तः ॥ ३०८ ॥

---

(१) सटेत्यन्यः । सट इत्यपरः । सङ्घट्टो रचना । या पांचालीवैदर्भीत्यादिपदैरलङ्कारशास्त्रे व्यवह्रियते तल्लक्षणपरो ग्रन्थोऽपि लक्षणया सङ्घट्टस्तमधीते वेद वा साङ्घट्टिकः । केचित् सङ्घाटस्पठन्तीत्यधिकम् । (२) पुनरुक्तं श्लक्ष्णमनुपदमिति त्रितयं ग्रन्थविशेषवाचीत्यधिकम् । (३) क्रमेतरेति ग्रन्थविशेषस्य संज्ञेति पा० ।

सुलक्षब्राह्मणावेतौ पदोत्तरपदादिकाः ।
असंसर्गाङ्गधर्मत्रिक्षत्राद्विद्या परा मता ॥ ३०९ ॥

सौलक्षिकः । ब्राह्मणिकः । पदोत्तरपदं वेत्त्यधीते वा पादोत्तरपदिकः । शकटाङ्गजस्तु पदोत्तरपदेभ्यश्च इति सूत्रमाह । अस्यार्थः । पदशब्द उत्तरपदं यस्य ततः पदशब्दात्पदोत्तरशब्दाच्च ठः । पूर्वपदिकः । उत्तरपदिकः । न्यायादिपदकल्पलक्षणान्तक्रत्वाख्यानाख्यायिकाट्ठण् इत्यनेन तु पौर्वपदिकः । औत्तरपदिकः । पदात्पदिकः । पदोत्तरपदात्पदोत्तरपदिकः । बहुवचनं सर्वभङ्गपरिहारार्थम् । संसर्गादिवर्जितात्परो विद्याशब्दष्ठणं लभते । वायसविद्यिकः । सार्वविद्यिकः । असंसर्गादेरिति किम् । सांसर्गविद्यः । शकटाङ्गजमतेन । आङ्गविद्यः । धार्मविद्यः । त्रैविद्यः । अवयवा विद्या त्रिविद्येति कर्मधारयात्प्रत्ययश्रुतिः । तिसृणां विद्यानां बोद्धेत्यर्थे द्विगोः श्लुचि त्रिविद्यः । क्षात्रविद्यः ॥३०९॥

कल्पलक्षणसूत्रान्तमकल्पादिमतं बुधैः ।
आख्यानाख्यायिकावाची श्लुग्द्विगोः सर्वसादितः ॥३१०॥

मातॄणां ब्राह्म्यादीनां कल्पः पूजाद्यर्थं शास्त्रम् मातृकल्पिकः । राघायनकल्पिकः । गौलक्षणिकः । वार्त्तिकसूत्रिकः । साङ्ग्रहसूत्रिकः । अकल्पादीति सूत्रस्यैव विशेषणं तेन काल्पसूत्रः । आख्यानवाचिभ्य आख्यायिकावाचिभ्यश्च ठण् इत्यर्थः । यवक्रीतमाख्यानमधीते यावक्रीतिकः । एवं प्रियगवाविमानप्रभृतयः (१) उदाहार्याः । वासवदत्तामाख्यायिकामधीते वासवदत्तिकः । एवं सुमनोहरानर्मदासुन्दरीतरङ्गवतीविलासवतीप्रभृतय आख्यायिकाशब्दाष्ठणि द्रष्टव्याः । वासवदत्तादिसाहचर्य्याद्ग्रन्थोऽपि तथोच्यते । यथाऽग्निसहचरितो ग्रन्थोऽग्निः । द्विगोः समासात्सर्वशब्दादेः सादेश्च शब्दाट्ठण् तस्य च श्लुक् । शकटाङ्गजस्त्वणठणोः । पञ्चकल्पः । त्रिलक्षणः । त्रिसूत्रः । असंसर्गेत्यादिना ठण् तस्य श्लुक् तथा द्वितन्त्रः । पञ्चव्याकरणः । सह वार्त्तिकेन यो ग्रन्थः स सवार्त्तिकः । त वेत्ति ठणो लोपे सवार्त्तिकः । एवं ससङ्ग्रहः । सर्ववेदः । सर्वतन्त्रः । आकृतिगणोऽयम् । अन्येऽपि यथादर्शन ज्ञेयाः ॥३१०॥ इत्युक्थादिः ॥

---

(१) यावक्रिकः । प्रैयगविकः । प्रैयंगुकः । आविमारविकः । अविमारकरित्यधिकम् ।

क्रमः शिक्षा पदं चैव मीमांसा सामसंयुता ।
उपनिषत्तथा ज्ञेया गणे क्रमादिसञ्ज्ञिते ॥ ३११ ॥

क्रमादिभ्य इत्यनेन क्रमादेस्तद्वेत्त्यधीतेऽर्थे को भवति । क्रमं वेत्त्यधीते क्रमकः । शिक्षा ग्रन्थविशेषः । शिक्षकः । पदकः । मीमांसा ग्रन्थविशेषः । मीमांसकः । सामकः । उपनिषद्वेदान्तो रहस्यं च । उपनिषदकः । एतदर्थमेवाकारोच्चारणम् । शेषायां कप्रत्ययेऽपि साध्यं सिद्धम् । अकप्रत्ययस्य टित्त्वप्रज्ञानं युक्तम् । तेन शिक्षकी मीमांसकीत्याद्युपपन्नं स्त्रियां लक्ष्यते न त्वाङीति ॥३११॥

इति क्रमादिः ॥

इति श्रीगोविन्दसूरिशिष्यपण्डितश्रीवर्द्धमानविरचितायां स्वीयगणरत्नमहोदधिवृत्तौ समूहविकारावयवचतुरर्थवेत्त्यधीतेविहिततद्धितप्रत्ययगणनिर्णयो नाम चतुर्थोऽध्यायः समाप्तः ॥

# अथ पञ्चमोऽध्यायः

अध्यात्ममुक्तीहपरत्रशेषा–कस्मादमुत्रोर्ध्वदमाधिदेवाः ।
ऊर्ध्वंदमश्चोर्ध्वमुहूर्त्तसर्वलोकावमुष्मिन्नधिभूतनिष्ठाः ॥३१२॥

अध्यात्मादेरित्यनेनाध्यात्मादेः शेषे ठञ् भवति । अध्यात्मे भवम् आध्यात्मिकम् । मुक्तौ भवम् मौक्तिकम् । ऐहिकम् । आगमिकोऽयं शब्दः । यथा–पञ्चायतनमैहिकम् । किमस्य गणपाठेन । लोके चेहत्यमित्येव भवतीति कश्चित्सचेताः । परत्रामुष्मिन्नमुत्रशब्दाः परस्य लोकस्य वाचकाः । परत्रलोके भवम् पारत्रिकम् । शेषे भवाः शैषिकाः । अकस्मादित्यनेन हेतुशून्यः कालो लक्ष्यते । तत्र भवम् । आकस्मिकम् । अमुत्रलोके भवम् आमुत्रिकम् । और्ध्वंदमिक । ऊर्ध्वं भव इत्यर्थः । केचिदूर्ध्वंदमौर्ध्वदेहशब्दावनुशतिकादिषु मन्यमाना और्ध्वंदामिकम् । और्ध्वंदैहिकमित्युदाहरन्ति । अधिदेवे भवम् आधिदैविकम् ॥ और्ध्वंदमिकम् । ऊर्ध्वशब्दमगानार्थोऽव्ययमनव्ययमूर्ध्वंशब्दोऽप्यस्ति । मुमागमोऽन्येषाम् । और्ध्वमौहूर्त्तिकः । तत्रोर्ध्वमौहूर्तिक इति ज्ञापकादुत्तरपदस्य ॥ सार्वलौकिकम् । अमुष्मिँल्लोके भवम् आमुष्मिकम् ॥ आधिभौतिकम् । निष्ठायां भवम् । नैष्ठिकम् । यथा–

श्रुतदेहविसर्जनः पितुश्चिरमश्रूणि विसृज्य राघवः ।
विदधे विधिमस्य नैष्ठिकं यतिभिः सार्धमनग्निमग्निचित् ॥ ३१२ ॥

स्यात्समानस्तदादिश्च तथा लोकः परेहतः ।
ऊर्ध्वोर्ध्वमः परो देहोऽध्यात्मादिराकृतिगणः ॥३१३॥

सामाजिकः । सामानग्रामिकः । सामानदेशिकः । पारलौकिकम् । ऐहलौकिकम् । और्ध्वदेहिकम् । यथा—अकरोच्च तदौर्ध्वदेहिकं पितृभक्त्या पितृकार्य्यकल्पवित् ॥ और्ध्वदेहिकम् ॥३१३॥ इत्यध्यात्मादिः ॥

नदीपावापुरो मावा श्रावस्ती धातकी मही ।
वनाह्वासी च कौशाम्बी शाल्वाथो वडबा वृषे॥३१४॥

नदीकर्त्र्यादेर्ढञ्ढकञावित्यनेन नद्यादिकर्त्र्यादिभ्यां शेषेऽर्थे ढञ्ढकञौ क्रमेण भवतः । नद्यां जातो भवो वा नादेयः । पावा नगरी । पावेयः । पामेति वामनः । पाठेति भोजः । पौरेयः । मावा नगरी । मावेयः । मायेति भोजः । वासेति वामनः । श्रावस्ती नगरी । श्रावस्तेयः । धातकेयः ॥ माहेयः । वनवासी नगरी । वानवासेयः । वानकौशाम्बेयः । शाल्वेयः । साल्वा नगरीत्यन्यः । वाडबेयः । वृषः । वाडबोऽन्यः ॥ ३१४ ॥

कौशाम्बी वनसेतकी गिरिगरी वाराणसी खादिरी-
दार्वा काशफरी च पूर्वनगरी नद्यादिरेवं गणः ।
कर्त्रिः कुण्डिनपुष्करौ च नगरीकुम्भ्युम्भिमाहिष्मती-
वर्मत्योऽथ च पौदनो निगदितो ग्रामस्तथा पुष्कलः ॥३१५॥

कौशाम्बी नगरी । कौशाम्बेयः । कौशाम्बीयेन वणिजेति चिन्त्यम् । कौशम्बीत्यन्यः । वानेयः । सेतकी पुरी सैतकेयः । गिरेरिदं गैरेयम् । शिलाजतु । गारेयः । वाराणसी नदी । तस्या अदूरभवा वाराणसी । वाराणसेयः । खदिराणामदूरभवा खादिरी नगरी । खादिरेयः । दार्वा पुरी । दार्वेयः ॥ काशफरी नगरी । काशफरेयः । अन्यस्तु शफरीत्याह । काशस्थलीति वामनः । पौर्वनगरेयः । अन्यस्तु निपातनादित्त्वे ह्रस्वत्वे च पूर्वनगिरेय (१)

---

(१) केचित्तु पूर्वनगिरीति पठन्ति । विच्छिद्य च प्रत्ययं कुर्वन्ति । पौरेयम् । वानेयम् । गैरेयम् । तदुभयमपि दर्शनं प्रमाणमित्यधिकम् ॥

इत्याह ॥ आदेर्जाद्यग्भ्यो ढे प्राप्ते । आवस्त्यादिभ्य ईरोपान्त्याद्कञ् इत्यनेनाकञि । शेषेभ्योऽणि प्राप्ते वचनम् ॥ इति नद्यादिः ॥

कुत्सितास्त्रयः कत्त्रयः । बहुव्रीहिर्वा कत्त्रिः । अस्मादेव निपातनात् कुशब्दस्य किं शब्दस्य वा कदादेशः । कत्त्रयाणां कत्त्रेर्वा गर्दभ्या इदम् । कात्त्रेयकम् । कुण्डिनं पुरम् । कौण्डिनेयकः । कुडिनेति वामनः । पौष्करेयकः । नागरेयकः । नगरशब्दः संज्ञावाची गृह्यते । कुम्भिर्नाम ग्रामः । कौम्भेयकः । औम्भेयकः । औम्भिरित्यन्ये । उम्बिरित्यन्यः । माहिष्मती नाम नदी पुरी वा । माहिष्मतेयकः । वर्मती नदी । वार्मतेयकः । चर्मण्वतीति वामनः । पुद्ना नाम नदी । तस्या अदूरभवं पौद्नं नाम नगरं ग्रामो वा । पौद्नेयकः। मोदन इति भोजः । सोदन इति वामनः । ग्रामेयकः । ग्रामाद्यञ्खञाविव्यनेन ग्राम्यो ग्रामीण इत्यपि ॥ पुष्कलो बाहीकग्रामः पौष्कलेयकः ॥३१५॥

कुण्ड्याकुञ्ये ग्रामात्कुण्ड्याकुण्यावल्ये वन्यामुल्ये ।
उख्यातृण्ये भाण्ड्यावुल्ये प्राज्ञैः प्रोक्ते यल्लोपे च ॥३१६॥

कुण्ड्या अन्ध्रदेशे नदी । कौण्डेयकः । कौडेयकः । ग्रामस्य कुण्ड्या । ग्रामकुण्ड्या ग्रामो नगरं वा । ग्रामकुण्डेयकः । कौणेयकः (१) । वालेयकः । वानेयकः । मौलेयकः । औखेयकः । तार्णेयकः । भाण्डेयकः । वौलेयकः । यल्लोपे चेति यस्य लोपइत्यर्थः । कुडनाया यलोपश्चेति गणसूत्रं वामनोक्तमुपलक्षणं द्रष्टव्यम् ॥ विद्युन्माला छन्दः । मौगौचेत्सा विद्युन्माला ॥३१६॥

इति कत्र्यादिः ॥

गहानृशंसी समशुक्लपक्षौ खाडायनानन्तरपार्श्वतोऽन्याः ।
इष्वग्रसाक्ष्यन्तरभौजिवैज्याध्यश्वीष्वनीकैकपलाशिकाङ्गाः३१७

गहादित्यदाद्यादेशाद्यचो जिह्वाकात्यहरितकात्याच्च इत्यनेन गहादेः शेषेऽर्थे छो भवति । गहे ग्रामे भवो जातो वा । गहीयः ॥ नृञ् शंसति द्रुह्यतीति नृशंसः । द्रोहार्थे शंसतिर्द्रष्टव्यः ॥ न नृशंसोऽनृशंसः । तस्यापत्यम् आनृशंसिः । आनृशंसीयः । समीयः । समादागतं समीयम् । नृहेतोर्मेयड्रूप्यौ

(१) कौलेयक इति पाठः ।

या । समरूप्यं सममयमपि । शुक्लपक्षीयम् । खाडायनो मुनिः । खाडायनीयः । खाडायनिरिति भोजः । अनन्तरीयः । पार्श्वत आगतः पार्श्वतीयः । मुखपार्श्वकातसो लोपश्चेति गणसूत्रमाह वामनः । अस्माभिस्त्वन्यदीयमतमाश्रित्य त्रयाणां सामान्येन पाठः कृतः । अन्यदीयः । तथा च—

अन्यदीयविशिखेन केवलं—निस्स्पृहस्य भवितव्यमाहृते ॥

इष्वोरग्रम्—इष्वग्रम् । इष्वग्रीयः (१) ॥ साडस्यापत्यं साडिः । साडीयः । अन्तरीयः । तथा च—

पर्यस्यत्पृथुमणिमेखलांशुजालं—संजज्ञेयुतकमिवान्तरीयमूर्वोः ॥

भोजस्यापत्य भौजिः । भौजीयः । भोजिरित्यन्यः । बैजीयः । अश्वसधितिष्ठति अध्यश्वः । तस्यापत्यं आध्यश्विः । आध्यश्वीयः । इषूणामनीकम् इष्वनीकम् । इष्वनीकीयम् । एका चासौ पलाशिका च एकपलाशिका । एकपलाशिकीयः । एकपलाश इति वामनः । अङ्गीयः ॥ ३१७ ॥

अन्तस्थोत्तमदैवशर्मिविषमव्याड्यासुरिश्रौतयः—
शौङ्गिः शैशिरिपूर्वपक्षमगधा दन्ताग्रकाठेरणी ।
मत्वर्थापरपक्षमुत्तरकतौ वाल्मीकिवाराटकी—
कामप्रस्थखनानशाखमुखतोऽवस्यन्दनामित्रयः ॥ ३१८ ॥

अन्ते तिष्ठतीत्यन्तस्थः । अन्तस्थीयः । अन्तस्था नगरीत्यन्यः । उत्तमीयः । देवशर्मणोऽपत्यं दैवशर्मिः । दैवशर्मीयः ॥ विषमे देशे भवो विषमीयः । विषमादागतं विषमीयम् । विषमरूप्यम् । विषममयम् । समविषमौ नाम ग्रामावित्यन्ये । व्यडस्यापत्यं व्याडिः । व्याडीयः । असुरस्य श्रुतस्य शुङ्गस्य शिशिरस्यापत्यं तत्र भवः । आसुरीयः(२) । औतीयः । शौङ्गीयः । शैशिरीयः । पूर्वपक्षीयः । केचित्पूर्वपक्षापरपक्षभव इति पठन्ति । तन्मते पूर्वपक्षापरपक्षाभ्यां तत्र भव इत्यर्थे छोऽन्यत्र ठणेव । पौर्वपक्षिकः । आपरपक्षिकः । मगधीयः । दन्तयोरग्रं दन्ताग्रम् । अन्यइष्वग्रदन्ताग्रौ ग्रामावित्याह ॥ दन्ताग्रीयः । कठस्येरणः कठेरणः । तस्यापत्यं काठेरणिः । काठेरणीयः । काठेरिणिरित्यन्यः । मत्वर्थीयः । मतुवर्थ इति वृद्धः । अपरपक्षीयः । उत्तरीयं वस्त्रम् । तथा च—

(१) इष्वग्रीयो व्रणः । इष्वग्रं नाम ग्राम इति केचित् ।
(२) आसुनोतीत्यासुत् क्विबन्तमेतत्—आसुतीयमिति पा० ।

सरिदुत्तरीयमिवसंहतिमत्स्तरङ्गरङ्गिकलहंसकुलम् ॥

कतीयः। वाल्मीकीयः। यथा—रथस्वनोत्कर्णमृगे वाल्मीकीये तपोवने।

वराटकस्य वाराटकिः। वाराटकीयः। वाराटिकिरित्यन्यः॥ कामम-स्यीयः। इति वामनः (१)। समाना शाखा यस्यासौ समानशाखः। समानशाखीयः। मुखलीयः। अवस्यन्दनीयः। अवस्यन्द इत्यन्ये। अमित्रस्यापत्यं आमित्रिः॥ आमित्रीयः॥ ३१८॥

एकाधमोत्तमाच्छाखो ग्रामश्चैकसमानतः।

लावेरण्यग्निशर्माणावाहिंस्येकतसौ तथा ॥३१९॥

शाख इति कृत ह्रस्व इत्यर्थः। एकशाखीयः। अधमशाखीयः। उत्तमशाखीयः। एकग्रामीयः। समानग्रामीयः। लावस्येरणो लावेरणः। तस्यापत्यं लावेरणिः। लावेरणीयः। सौवेरणिरित्यन्यः। अग्निशर्मीयः। आग्निशर्मिरित्यन्यः। अहिंसस्यापत्यम् आहिंसिः। आहिंसीयः। एकतीयः॥ ३१९॥

क्षेमधृत्विश्च सौमित्रिरेकवृक्षौपबिन्दवी।

हंसवङ्गौ तथाश्वत्थितन्त्वग्रौद्गाहमानयः ॥३२०॥

क्षेमधृत्विनोऽपत्यं क्षैमधृत्विः। क्षैमधृत्वीयः। सौमित्रीयः। एकवृक्षीयः। औपबिन्दवीयः। हंसीयः। वङ्गीयः॥ अश्ववत्थो नाम कश्चिद्गोत्रकारी। तस्यापत्यम् आश्ववत्थिः। आश्ववत्थीयः। तन्त्वग्रीयः। औद्गाहमानीयः॥३२०॥

कुट् च स्वराजपरजनदेवानां णिच्छवेणुकादिभ्यः।

प्रस्योत्तरपदवेत्रकमध्योत्तरकाश्च मध्यमिका ॥३२१॥

स्वकीयः। पाणिन्यादयस्तु स्वदेवशब्दौ न पठन्ति। तन्मते सौवं दैवमित्येव भवति। वामनमतेन। गणकृतमनित्यमिति न्यायात् कुट्लाभावेऽण् प्रत्यये सौवम्। तस्मादेग्राजित्यनेनाजि। दैवमित्यपि संभाव्यते। महाकविप्रणीतप्रयोगदर्शनं चेत्स्वीक्रियते। तदा गहादिपाठः समाश्रयणीयः॥ तथाहि रुद्रस्य— खिन्नोकःसहजःपयोधरतटःकान्तोऽङ्गको विभ्रमः।

कण्ठाश्लेषमुदञ्च पञ्चमरवः श्लाघ्यो गुरुर्मन्मथः।

---

(१) कामप्रस्थीय इति वामन इति पा०।

मन्वन्धी विनयश्रिरंसहचरीलीलेतिपर्याकुला-
यस्यांस्वीयपरिग्रहं न रहयन्त्येकान्तयाता अपि ॥

यथा वा । एभिर्निदर्शनैः स्वीयैः परकीयैश्च पुष्कलैः ॥ राजकीयः । राज्ञ इदं राजकीयमित्यपि ॥ परकीयः । जनकीयः । देवकीयः ॥

णिच्छेति णोऽनुबन्धच्छप्रत्यय इत्यर्थः । वेणुभिर्निर्वृत्तो वेणुकः । तत्र भवो जातो वा । वैणुकीयः । प्रास्थीयम् । प्रस्थके भवः-प्रास्थकीय इत्यन्यः । औत्तरपदीयः । वैत्रकीयः । माध्यीयः । औत्तरकीयः । मध्ये भवा-मध्यमिका नाम नगरी । तस्यां भवो माध्यमिकीयः । मध्यमक इत्यन्यः । एते त्रयो वामनमतेन । निपुणके भवो निपुणकीय इति केचिदुदाहरन्ति । वेणुकादिर्गहादावाकृतिगणः । तेनाभयनन्दिस्वीकृतौ पितृकमातृकशब्दावपि संगृहीतौ । अङ्गमगधशब्दयोराष्ट्रात्कञि । पूर्वपक्षशुक्लपक्षापरपक्षशब्दानां कालाट्ठञि । कामप्रस्थशब्दात् प्रस्थेत्यादिना कञि । इञन्तानामाद्यात्पौत्रादीञ इत्यादिनाञि । शेषेभ्यस्त्वणि प्राप्ते वचनम् ॥ ३२१ ॥ इति गहादिः ॥

काश्यच्युतौ मोदनमोदमानौ गोवासनारिन्दमदेवदत्ताः ।
संवाहसांयाति च हस्तिकर्षूः कुनामचेदीकरणं हिरण्यम् ३२२

काश्यादिबाहीकग्रामाच्छेट्ठञ्ञिठावित्यनेन काश्यादिभ्यो देशवाचिभ्यो वाहीकग्रामेभ्यश्च ठञ्ञिठौ प्रत्येकं भवतः । काशयो जनपदाः । तेषु भवा जाता वा । काशिकी । काशिका । अच्युतो ग्रामः । आच्युतिकी । आच्युतिका । मोदनानां निवासो ग्रामो मोदनः । मौदनिकी । मौदनिका । मोदमानो ग्रामः । मौदमानिकी । मौदमानिका । गवां वासनो गोवासनः । तन्निवासो ग्रामो गोवासनः । गौवासनिकी । गौवासनिका । गौवासन इत्यन्ये । एषां देशादेवेङाद्यचेति छे प्राप्ते । अरीन्दमयति अरिन्दमो ग्रामः । आरिन्दमिकी । आरिन्दमिका । देवदत्तः प्राग्ग्रामः । दैवदत्तिकी । दैवदत्तिका । अस्य काश्यादिषु पाठः प्राग्देशार्थः । यस्तु वाहीकेषु ग्रामस्तस्मादणेव । दैवदत्ती । संवाहयतीति संवाहः । तस्य निवासोऽपि संवाहः । सांवाहिकी । सांवाहिका । सांवाह इत्यन्ये । संयातस्यापत्यं सांयातिरादिराजः । तस्यापत्यं युवा सांयात्यः । कुरुकोसलेत्यादिना ण्यचि तस्य बहुषु लुचि । सांयातयः । तन्निवासोऽपि जनपदः साहचर्य्यादुच्यते ॥ संयातो नाम कश्चित् तस्यापत्यं सांयातिः ॥ तस्य

निवासो ग्रामः । सांयातिरित्येके । सांयातिकी । सांयातिका । हास्तिकर्षुकी । हास्तिकर्षुका । कुत्सितं नाम यस्य स कुनामा । तन्निवासोपि ग्रामः कुनामा । कौनामिकी । कौनामिका । कुनाम्नोऽपत्यं कौनाम इत्यन्ये । कुणनाम इति वामनः । चेद्यो जनपदः । चैदिकी । चैदिका । करणं देशविशेषः । कारणिकी । कारणिका । हैरण्यिकी । हैरण्यिका ॥ ३२२ ॥

शकुलाददशग्रामौ हिरण्यकरणस्तथा ।
सिन्धुदाससुधासोमच्छागान्मित्रस्तथा सधात् ॥३२३॥

शकुलात्मत्स्यानत्तीति शकुलादः । अथवा शुनां कुलान्यत्तीति निपातनाद्वलोपे । शकुलादः । तन्निवासोऽपि ग्रामः । शाकुलादिकी । शाकुलादिका । शाकुलाद इति वामनः । स्वकुलाल इत्यन्यः । दाशग्रामिकी । दाशग्रामिका । दाशग्राम इत्यन्ये । हैरण्यकरणिकी । हैरण्यकरणिका । अन्येषां हैरण्य इति प्रकृतिः । करण इति प्रत्ययार्थविशेषणम् । हैरण्यिकः । परप्रवादि करणमुच्यते । अन्ये ग्रामवाची हैरण्य इति पठन्ति तन्मते हैरण्यकी । कुठारी कुद्दालो वा करणम् । सिन्धवो मित्राण्यस्य सिन्धुमित्रो देशः । सैन्धुमित्रिकी । सैन्धुमित्रिका । एवं दासमित्रः । दासमित्रिकी । सौधामित्रिकी । सौममित्रिकी । छागमित्रिकी । सहमित्राण्यस्य सधमित्रः । निपातनाद् हस्य धकारे । साधमित्रिकी ॥३२३॥

युवदेवोपतो राजः कालात्कोपादिपूर्वतः ।
शौवावतानभारङ्गी अरित्रो भोजसम्मतः ॥३२४॥

युवराजस्य निवासोपि युवराजः । यौवराजिकी । एवं देवराजोपराजौ ग्रामौ । दैवराजिकी । औपराजिकी । कालात्कोपादिपूर्वत इति कोपादयः पूर्वे यस्यासौ कोपादिपूर्वः । कौपकालिकी । कौपकालिका । आपत्कालिकी । पौर्णकालिकी । और्ध्वकालिकी (१) । प्राक्कालीनोत्तरकालीनार्वाक्कालीनप्रभृतिप्रयोगेषु खप्रत्ययो दृश्यते । स चानुक्तोऽप्यवगन्तव्यः । अन्यथा प्रकृतस्लक्ष्यक्षतिप्रसङ्गः स्यात् । शुनोऽवतानः श्वावतानो मणिः । तेन निर्वृत्तो ग्रामः । शौवावतानः । शौवावतानिकी । भारङ्गेर्निवासोऽपि भारङ्गिः । भारङ्गिकी । तारङ्गिरित्यन्ये । अरित्रस्य निवासोप्यरित्रः । आरित्रिकी ॥

---

(१) तात्कालिकीत्यधिकम् ।

देशादिति किम् । काशीनां क्षत्रियाणां छात्राः काशीयाः । देवदत्तो नाम कश्चित् । तस्य च्छात्राः देवदत्तीयाः । दैवदत्ताः । अच्युतादीनां छविषयाभावेपि काश्यादिपाठसामर्थ्याट्ठञ्ञिठौ भवतः । काशिचेदिभ्यां प्रस्थपुरेत्यादिना वहुत्वेत्स्वित्यादिना वाऽकञि । सांयातिभारङ्गिस्याम् आद्यात्यौत्रादीञोऽह्वप्रचप्राच्यभरतास्यामित्यनेनाणि । आदैजाद्यचं छे । हस्तिकर्षूशब्दात् प्राच्योष्ठञीत्यनेन ठञि । सिन्धुमित्रादिभ्य ईरोपान्तादकञ् इत्यनेना कञि । शेषेभ्योऽणि प्राप्ते वचनम् ॥ ३२४ ॥ इति काश्यादिः ॥

पलदी गोमती गोष्ठी परिखा परिषत्तथा ।
वाहीकः शूरसेनश्च नैकती च पटच्चरः ॥ ३२५ ॥

कोपान्तपलदीभ्योऽण् इत्यनेन कोपान्तात्पलद्यादेश्च देशवाचिनः शेषेऽर्थेऽण् प्रत्ययो भवति । पलद्यां देशविशेषे जातो भवो वा पालदः । पालदी । वाहीकग्रामलक्षणयोष्ठञ्ञिठयोः प्राप्तयोः । गोमती नदी । तत्सहचरितो देशो गोमती । गौमतः । ईरोपान्तादकञि प्राप्ते । गौष्ठः(१) । वाहीकग्रामलक्षणयोष्ठञ्ञिठयोः । पारिखः । पारिषदः । पार्षदो वा । अनयोश्छेऽस्य वाहीकलक्षणयोष्ठञ्ञिठयोर्वा । वाहीकेषु भवो वाहीकः । गहादीत्यादिना छे ॥ शौरसेनः । प्रस्थपुरेत्यादिना । नैकतः । नैकीति वामनः । पाटच्चरः । ईरोपान्तादकञि प्राप्ते ३२५ ॥

वह्वोः कमलजालाभ्यां कालात्कीटोऽथ रोमकः ।
सकल्लोमोदपानौ च कमलात्कीकरो भिदा ॥ ३२६ ॥

वाहुकीटः । कामलकीटः । जालकीटः । कालकीटः । कलकूट इति वामनः । रौमकः । देशादेवैराद्यत्र इत्यनेन छे ॥ सकल्लोम्नि भवः । साकल्लोमः । निपातनान्नलोपः । अयं भोजमतेन । यकल्लोमन् इति वामनः । यकल्लोमनखं चेत्यन्येऽपि । शकटाङ्गजस्तूदग्रामाद् यकल्लोम्न इति विशेषसूत्रमाह । उदग्रामवाची याकल्लोमोऽञि । अन्यो याकल्लोमनः । औदपानः । कामलकीकरः । कामलभिदः । अनुक्तानां तु बाध्यबाधकभावः स्वयं द्रष्टव्यः ॥ ३२६ ॥

इति पलद्यादिः

---

(१) गौष्ठी । अन्ये तु गोष्ठीति पा० ।

कच्छः कुलूतः परिसिन्धुसाल्वौ गन्धारसिन्धू स्थलसिन्धुवर्णू ।
कश्मीररङ्कू कुरुसक्तुसिन्धू विजापकद्वीपकुलानुपण्डाः ३२७

कच्छादेरित्यनेन कच्छादेः शब्दगणाद्देशवाचिनः शेषेऽर्थेऽण् भवति । कच्छे भवः काच्छः । कौलूतः । उलूप इत्यन्ये । परसिन्धुषु भवः पारसैन्धवः । ह्रद्भगसिन्धूनामित्यनेनोभयपदाचिच् ॥ साल्वः । गान्धारः । सिन्धुषु भवः—सैन्धवः । कम्बलः । स्थालसैन्धवः । वर्णुर्नाम ह्रदः । तस्यादूरभवो देशो वर्णुः । तत्र भवो वार्णवः । कश्मीरेषु भवः काश्मीरः कुङ्कुमः । राङ्कवः । यद्वा रङ्कुर्मृगविशेषः । राङ्कवं मृगरोमजम् । कौरवम् । कुर्वयुगन्धराद्वेत्यनेनाकञपि कौरवकोऽश्वादिः । साक्तुसैन्धवः । वैजापकः । वैजावक इति भोजः । द्वैपः । कौलः । अयं वामनमतेन । कुलव इत्यन्यः । आनुपण्डः । अनूषण्ड इत्यन्ये ॥ ३२७ ।

अङ्गारानूपकम्बोजा रज्जुकर्णुविरूपकाः ।
मधुमानन्तरीपश्च वापवाहावजात्परौ ॥ ३२८ ॥

आङ्गारः । चन्द्रमतेन । आनूपः । काम्बोजः । राज्जवः । कार्णवः । वैरूपकः । अयं वामनमतेन । मधुमान् पर्वतः । तत्र भवो माधुमतः । आन्तरीपः । आजवापः । द्वयं चन्द्रमतेन ॥ आजवाहः ॥

एतेषां शब्दानां नृतत्स्थेऽकञ् इत्यनेनाकञि ॥ काच्छको मनुष्यः । काच्छकस्य हसितम् । काच्छिका चूडा । सैन्धवको मनुष्यः । सैन्धवकस्य जल्पितम् । एवं सर्वत्र । तथा अपदातौ साल्वात् । गोयवाग्वोरित्याभ्यामकञ् भवति । साल्वको मनुष्यः । अपदाताविति किम् । साल्वः पदातिः । साल्वमस्य हसितम् । साल्वको गौः । साल्विका यवागूः । द्वैपान्वर्थीति वचनात् । यमुना द्वीपे जातो भवो वा । द्वैपको व्यासः (१) । राष्ट्रार्थादकञि प्राप्ते । बहुत्वेत्वित्यनेन वा वचनम् । अत्र प्रायेण कच्छादयः शब्दाः । जनपदवाचिनः ॥ ३२८ ॥ इति कच्छादिः ॥

(१) द्वीपादनुसमुद्रं यञः । द्वैपो मनुष्यः । द्वैप्यमस्य हसितम् । अनुसमुद्रमिति किम् । अनुनदि यो द्वीपस्तस्माद् द्वैपको व्यासः । द्वैपकमस्य हसितम् । इति पा० ।

धूमार्जुनावावयगर्त्तघोषाः—षडण्डसाकेतशशादनाश्च ।
संस्तीयतीर्थारुणमित्रवर्चा—द्वीपान्तरीपोज्जयनीविदेहाः ३२९

धूमादिदेशप्राक्कच्छाग्निवक्त्रवर्त्तोन्तादित्यनेन धूमादेः शब्दागणादकञ् भवति । धूमो ग्रामः । तत्र भवो धौमकः । ऋजव्यो नावोऽस्य ऋजुनौः । तस्य निवासस्तन्निर्वृत्तो वा । आर्जुनावः । तत्र भवः । आर्जुनावकः । छे ग्रामे । अथायं बाह्वीकग्रामस्तदाढापवादयोष्ठञ्ञिठयोरकञ् । आवये भवः—आवयकः । आवयो नदीग्राम इत्यन्ये । आवयात्तीर्थे । आवयकं तीर्थम् । आवयमन्यदित्यन्यः । गार्त्तकः । घौषकः । षाडण्डकः । षडाण्ड इत्यन्यः । साकेतकः । शाशादनकः । माषादन इति वामनः । सांस्तीयकः । संस्फीय इत्यन्ये । तैर्थकः । अरुणो ग्रामः । आरुणकः । मैत्रकः । वार्चकः । द्वैपकः । आन्तरीपकः । औज्जयनकः । वैदेहकः ॥ ३२९ ॥

सत्रासाहानर्तपाठेयपल्ल्यः शष्पाराह्यौ धार्तराज्ञी च कुक्षिः ।
द्व्याहावत्र्याहावपाथेयवर्ज्या आञ्जीकूलो माठरो बर्बरश्च ३३०

सत्रासाहो राजा । तन्निवासोऽपि सः । सात्रासाहकः । आनर्त्तः क्षत्रियः । तन्निवासोऽपि सः । आनर्त्तकः । पाठेयस्य निवासोऽपि सः । पाठेयकः । पल्लिर्भिल्लनिवासः । पाल्लकः । शष्पाणां बालतृणानां स्थानं शष्पम् । शाष्पकः । आराह्वीनाम काचित्स्त्री । तस्या निवास आराह्वी नगरी । आराह्वकः । आराह्वीत्यन्यः । धृता राजानो येन स धृतराजो नृपः । तन्निर्वृत्ता धार्त्तराज्ञी नगरी । धार्त्तराज्ञकः । धार्त्तराष्ट्रीत्यप्यन्ये पठन्ति । तत्र धृतं राष्ट्रमनेन धृतराष्ट्रो राजा । तन्निर्वृत्ता धार्त्तराष्ट्री नगरी । धार्त्तराष्ट्रकः । कुक्षिर्नगकुक्षौ ग्रामः । कौक्षकः । समुद्रकुक्षिरित्यन्ये पठन्ति । तन्मते सामुद्रकुक्षकः । द्वावाहावौ यस्मिन् द्व्याहावो ग्रामः । एवं त्र्याहावः । द्वैयाहावकः । त्रैयाहावकः । पाथेयो ग्रामः पाथेयकः । वर्ज्यो ग्रामः । वार्ज्यकः । आञ्जी कूलो नाम ग्रामः । आञ्जीकूलकः । अञ्जिकूल इति भोजः । माठरो ग्रामः । माठरकः । बर्बरो देशविशेषः । बार्बरकः । बर्वड इत्यन्यः ॥३३०॥

दक्षिणापथपट्टारो समुद्रो नौमनुष्ययोः ।
मद्रकूलं च भक्षाली राजशब्दात्स्थलीगृहे ॥३३१॥

दक्षिणः पन्था दक्षिणापथः । ङ्यापोरात्त्वे ह्रस्वश्च बहुलमिति बहुलवचनादतः पाठाद्वा दीर्घः । दाक्षिणापथकः । पट्टारो ग्रामः । पाट्टारकः । सामुद्रिका नौः । सामुद्रको मनुष्यः । अन्यत्र सामुद्रं लवणं जलं वा । मद्राणां कूलं मद्रकूलम् । तत्समीपे ग्रामो मद्रकूलः । माद्रकूलकः । भक्षाली ग्रामः । भाक्षालकः । भक्षादीत्यन्यः । राजस्थलकः राजगृहं नगरम् । राजगृहकः ॥३३१॥

माहकादानकान्माषाद्घोषमानाट्टमद्रकात् ।
दाण्डायनसमुद्राभ्यां स्थलीशब्दः परो मतः ॥३३२॥

माहकानां स्थली माहकस्थली । माहकस्थलकः । आनकस्थलकः । मापस्थलकः । घौषस्थलकः । मानस्थलकः । मानकस्थलीत्यन्यः । आट्टस्थलकः । माद्रकस्थलकः। दण्डस्यापत्यं दाण्डिः । तस्यापत्यं युवा दाण्डायनः। तस्य स्थली दाण्डायनस्थली । दाण्डायनस्थलकः । सामुद्रस्थलकः । अयं दिग्वस्त्रमतेन ॥३३२॥

अर्जुनवातण्डायनविनादवणियावसायवाटूराः ।
कूलात्सौवीरेष्विमकान्तशकुन्तीकषायाश्च ॥३३३॥

अर्जुनः पार्थोऽन्यो वा । तन्निवासोऽपि ग्रामोऽर्जुनः । आर्जुनकः ॥ वातण्डायनकः । अयं वामनमतेन । अवतण्ड ऋषिग्राम इत्यन्यः । वतण्ड इत्यपरः । विनादो ग्रामः । वैनादकः । अनुकम्पितो वणदत्तो वणियः । वाणियकः । अवसायो ग्रामः । आवसायकः। अयं वामनमतेन । वाटयतीति वाटूरो ग्रामः । वाटूरकः । खाटूर इत्यन्यः । कौलको भवति सौवीरश्चेत् कौलोऽन्यः । कुलादित्यन्ये पठन्ति ॥ इमः कश्चित् । तस्य कान्त इमकान्तः । ऐमकान्तकः । शाकुन्तकः । कापायकः । अयं वामनमतेन । छविषयेभ्यः प्राप्ते बाहीकग्रामेभ्यष्ठञ्ञिठयोः परिशिष्टेभ्योऽणि । विदेहानर्तपाठेयपाथेयानां प्रस्थपुरेत्यादिनाऽकञि सिद्ध आदेशार्थः पाठः । तेन विदेहानामानर्तानां च क्षत्रियाणां स्वं वैदेहकम् । आनर्त्तकम्। पाठेयस्य स्वं पाठेयकम्। एव पट्टारमाठराराधीधार्त्तराष्ट्रीनामीरोपान्तत्वादकञि द्रष्टव्यम् ॥३३३॥ इति धूमादिः ॥

सन्ध्या पञ्चदशी शश्वदमावास्या त्रयोदशी ।
प्रतिपत्सन्धिवेलाथ पौर्णमासी चतुर्दशी ॥३३४॥

सन्ध्यादिभ्यावर्तुभ्योऽण् इत्यनेन । सन्ध्यादिभ्यः कालवाचिभ्यः शेषेर्थेऽण् भवति । सन्ध्यास्तमयकालः । तत्र भवं सान्ध्यं कर्म । यथा—ममैव सिद्धराजवर्णने—

जातेयस्यप्रयाणेतुरगखुरपुटोत्खातरेणुप्रपञ्चे—
तीव्रंध्वान्तायमानेप्रसरतिबहलेसर्वतोदिक्षमस्मिन् ।
भास्वच्चन्द्रार्कबिम्बग्रहगणरहितंव्योमवीक्ष्यप्रमुग्धाः—
सांध्यंकर्मारभन्तेशिशुमुनिवटवोजातसंध्याभिशङ्काः ॥

पञ्चदशानां पूरणीयं पञ्चदशी । पाञ्चदशः । शश्वद्भवं शाश्वतम् ॥ अशश्वत इत्यतः शाश्वतिक इति ठणपि । शकटाङ्गमतमेतत् । सर्म्यदिति वामनः । आमावास्यः । एकदेशविकृतस्यानन्यत्वादमावस्याशब्दादपि भवति ॥ आमावस्यः । त्रयोदशानां पूरणी त्रयोदशी । त्रायोदशः । प्रतिपद्यन्तेऽहान्यस्याः प्रतिपत् पक्षतिः ॥ सन्ध्याप्रातिपदेनेव व्यतिभिन्ना हिमांशुना ॥

सन्धिवेला सन्धिकालः । सांधिवेलः । पूर्णो माश्चन्द्रो मासो वाऽस्यां तिथौ पौर्णमासी । अतएव गणपाठादणि । तत्र भवः पौर्णमासः । चातुर्दशः । कन्या कालाट्ठञ् इत्यनेन ठञि प्राप्तेऽण् विधानम् ॥ ३३४ ॥

इति सन्ध्यादिः ॥

**अश्मपादाशनिह्लादपिशाचाः शकुनिर्जयः ।**
**त्सर्वाकर्षपिचण्डाश्च निचयश्च नयो ह्रदः ॥ ३३५ ॥**

कोऽश्मादेरित्यनेनाश्मादेः सप्तम्यान्तात्तत्र साधुरित्यर्थे को भवति ॥ अश्मन्यश्मकर्मणि कुशलः अश्मकः । पादप्रक्षालनादौ कुशलः पादकः । अशनिनिपातने साधुः अशनिकः । ह्लादे प्रह्लादने साधुः ह्लादकः । पिशाचापनयने साधुः पिशाचकः । शकुनिरुतग्रहणादौ साधुः शकुनिकः । जयकः । त्सरुकरणे साधुः त्सरुकः । आकर्षणम् । आकृष्यत आकर्षन्त्यस्मिन्निति वा । आकर्षो द्यूतम् । अक्षः शारिफलकं च (१) तत्करणे साधुः आकर्षकः । पिचण्डापनयने साधुः पिचण्डकः । निचयकः । चय इत्यन्यः । नयकः । ह्रदकः ॥

---

(१) सारिफलकम् । आकृष्यते सुवर्णादिकमस्मिन्नित्याकर्षो निकषोपलः । तत्र कुशल आकर्षकः । आकषेति रेफरहितो मुख्यः पाठ इति दीक्षिताः । तत्राप्याकषन्ति सुवर्णादिकमस्मिन्नित्येव विग्रह इति पा० ।

ह्राद इत्यन्ये ॥ तत्र साधुरित्यर्थयोगादश्मादयः शब्दास्तद्विषयायां क्रियायां वर्त्तमानाः प्रत्ययमुत्पादयन्ति ॥ ३३५ ॥ इत्यश्मादिः ॥

कथेक्षुमांसौदनवृत्तिसंग्रहाः प्रवाससङ्घातनिवाससक्तवः ।
गुडो वितण्डाजनवादवेणवो गणोपवासौ विकथागुणाविमौ ३३६

कथाप्रतिजनादिभ्यां ठञ्खञावित्यनेन कथादेः प्रतिजनादेश्च ठञ्खञौ क्रमेण भवतः । कथायां साधुः काथिकः । ऐक्षुकः । मांसौदन इति व्यस्तसमस्तस्य ग्रहणम् । मांसिकः । औदनिकः । मांसौदनिकाश्चेदयः । वार्त्तिकः । धर्मदेशनानिपुणो वार्ताख्याननिपुणो वा । सांग्रहिकः । प्रावासिकः । सांघातिकः । नैवासिकः । साक्तुका यवाः । गौडिका इक्षवः । वैतण्डिकः । जनवादः कौलीनम् । जानवादिकः । वैणुका गिरयः । गाणिकः । औपवासिकः । स्त्रीभिक्षादिविषया कथा विकथा । वैकथिकः । गौणिकः ॥३३६॥

आयुर्वेदजनेवादौ सङ्ग्रामापूपसङ्कथाः ।
विश्वात्कथा च कुल्माषो जनोवादोऽथ कुष्ठवित् ॥३३७॥

आयुर्वेदिकः । ननु वृत्तिसङ्ग्रहगुणगणायुर्वेदानां पाठो निरर्थकः । उञ्छपादि पाठाट्ठण् सिद्धः । यो हि वृत्त्यादिषु साधुः स वृत्त्यादीनां योद्धा भवत्येव । सत्यम् । अत्र पाठो ञ्विधर्थः । द्वयोर्वृत्त्योः साधुः द्वैवृत्तिकः । त्रैवृत्तिक इत्यादि सिद्धम् । जने वादो जनेवादः । सप्तम्या अलुग् अतएव निपातनात् षष्ठ्या वेत्वम् । जानेवादिकः। सांग्रामिकः। आपूपिका गोधूमाः। सङ्कथाऽन्योऽन्य संलापः। सांकथिकः। विश्वस्य कथा विश्वकथा। वैश्वकथिकः। कौल्माषिकाः कलायाः । जनेषु निष्ठुरो वादो जनोवादः । उकारो निपातो माध्यभूतो नैष्ठुर्ये द्रष्टव्यः।अथवा षष्ठीसप्तम्योः स्थाने उकारोऽत एव निपातनात् । जानोवादिकः । कुष्ठस्य श्वित्रस्य विद्विज्ञानम् । तत्र साधुः कौष्ठवित्कः । अयं वामनमतेन ॥ ३३७ ॥ इति कथादिः ॥

जनः प्रतिमहाद्विश्वपञ्चसर्वानुतः कुलम् ।
परामुष्यपरस्येभ्यः समेदं संपरायुगः ॥ ३३८ ॥

जनं जनं प्रति प्रतिजनम् । तत्र साधुः प्रातिजनीनः । जने जने साधुरित्यर्थः । माहाजनीनः । विश्वो जनो विश्वजनः । वैश्वजनीनः । पञ्चसु

जनेषु साधुः पाञ्चजनीनः । तद्धितद्विगोः लुक् । अथवा पञ्चानां जनः पञ्चजनः । पाञ्चजनीनः ॥ सर्वो जनः सर्वजनः । सार्वजनीनः । शकटाङ्गजस्तु सर्वजनाट्ठञ्चेत्यनेन सूत्रेण सार्वजन्यः । सार्वजनीन इत्याह । अनुगतो जनम् अनुजनः । जनं जनमनु अनुजनः । आनुजनीनः । अयं शकटाङ्गजादिग्वस्त्रमतेन । कुलमिति परामुष्यपरस्येभ्यः परं द्रष्टव्यम् । परं कुलं परकुलम् । परस्य वा कुलं परकुलम् । पारकुलीनः । आमुष्यकुलीनः । गणपाठात्षष्ठ्यलुक् । पारस्यकुलीनः । गणपाठात् षष्ठ्यलुक् । आक्रोश इत्यनेन वा यदा परकुलसम्बन्धेनाक्रुश्यते । समो युगोऽस्मिन् समयुगो बलीवर्दः । समो युगः समयुगः । समविषमं वा युगं कालविशेषः सामयुगीनः । ऐदंयुगीनः । अस्मिन्काले साधुरित्यर्थः ॥ संयुगं संग्रामः । सांयुगीनो भटः ॥

संयुगे सांयुगीनं तमुद्यन्तं प्रसहेत कः ॥

परमिष्टमवरम् अन्यद्वा युगं परयुगम् । पारयुगीणः ।

अत्र साधुर्योग्यः प्रवीणो वा गृह्यते । उपकारकवाची तु हितमित्यनेन संगृहीतः । अत्र हि सूत्रकदम्बके सप्तम्यन्तात्प्रत्ययः । अर्थे तु हितार्थे चतुर्थ्यन्तात्प्रत्ययः । अतो न बाध्यबाधकभावः ॥ ३३८ ॥ इति प्रतिजनादिः ॥

दिग्वर्गपूगा गणपक्षमेधा वंशानुवंशौ वनमित्रमेधाः ।
धाय्यादिसाद्यन्तरवेशकाशा अव्यूथकालान्तरहोमुखाश्च ३३९

दिगादिदेहांशाद्य इत्यनेन तत्र भव इत्यर्थे दिगादेर्यः प्रत्ययो भवति । दिशि भवम् दिश्यम् । यथा—

विक्रीय दिश्यानि धनान्युरूणि द्वैप्यानसावुत्तमलाभभाजः ।
तरीषु तत्रत्यमफल्गुभाण्डं सांयात्रिकानावपतोऽभ्यनन्दत् ॥

वर्ग्यः । पूग्यः । गण्यः । पक्ष्यः । मेध्यः । वंश्यः । अनुवंश्यः । वन्यः करी । मित्र्यः । मेध्यः । धाय्या सामिधेनी । धाय्या मित्रमस्येति ह्रस्वत्वे धाय्यमित्र इति केचित् । आद्यः । साक्ष्यः ॥ अन्तरे भवः अन्तर्यः । अन्तरित्यन्ये । तन्मतेऽन्त्यः । वेशे प्रतिकर्मणि पुरे वा भवा वेश्या(१) । यथा—

स्वास्तीर्णतल्परचितावसथः क्षणेन वेश्याजनः कृतनवप्रतिकर्मकाम्यः ।

---

(१) वेशो नेपथ्यं वेश्यागृहं वा । तत्र भवा वेश्येति पा० ।

खिन्नानखिन्नमतिरापततो मनुष्यान् प्रत्ययहीश्चिरनिविष्ट इवोपचारैः ॥

काश्यः। अप्सु भवः अप्सव्यः। यूथ्यः। काल्यः। अन्त्यः। रहस्यम्। मुख्यम् ३३९

अमित्रजघनालीका आकाशाकालपथ्युखाः।

माघन्याय्यकशा देशः सञ्ज्ञायामुदकं तथा ॥३४०॥

अमित्र्यः। जघन्यः। अलीक्यः। आकाश्यः। अकाल्यः। अयं च-न्द्रवामनमतेन। पथ्यम्। उख्यम्। आकारान्तादप्युखाशब्दात् पिठरादिवाच-काद्यः। कर्णपार्श्वबाधकात्तु देहांशद्वारेणैव सिद्ध इति केचित्। माघ्यं कुन्द कुसुमम्। न्याय्यम्। कशे देशे भवम् कश्यं मद्यम्। देश्यः। सञ्ज्ञायाम् उदक्या—रजस्वला स्त्री। सञ्ज्ञाया अन्यत्र। औदकी मत्सी। मुखजघनवंशा-नुवंशानामदेहांशार्थः पाठः। यथा—शरीरस्य मुखं प्रधानमग्रभागो वा जघनं निकृष्टं पश्चाद्भागो वा तथाऽन्यस्मिन्नर्थे मुखजघनशब्दौ यदैतावुपचारेण वर्त्तेते तदापि यप्रत्ययः स्यात्। तद्यथा। मुखे प्रधाने पदेऽग्रे वा भवो मुख्यः। सेना-जघने निकृष्टे पश्चाद्भागे वा भवो जघन्यः ॥३४०॥ इति दिगादिः ॥

मुखोलूखलसीरोष्ठहनुशीलरथाः परेः।

उपात्स्थूलाकलापौ च स्थानसीरादि सम्मतम् ॥३४१॥

परिमुखादेरव्ययीभावादित्यनेन परिमुखादिभ्योऽव्ययीभावेभ्यस्तत्र भव इत्यर्थेञ्यः प्रत्ययो भवति ॥ परिमुखं भवः पारिमुख्यः सेवकः। स हि यतो यतः स्वामिनो मुखं तत्र सन्निहितो भवन्नेवमुच्यते। पार्युलूखल्यः। पारिसी-र्यः। परिसिरमित्यप्यन्यः। पार्योष्ठ्यः। पारिहनव्यः। पारिशील्यः। पारिरथ्यः। एतौ दिग्वस्त्रमतेन। स च परिशालशब्दमप्याह। परेरिति परि-शब्दादित्यर्थः। उपस्थूले भवम् औपस्थूल्यम्। स्थूलाशब्देन हलिरुच्यते। स्थू-णेत्यन्यः। औपकलाप्यः। औपस्थान्यः। अयं वामनमतेन। औपसीर्यः। आदिशब्दात्कपालशालशब्दौ सङ्गृहीतौ ॥३४१॥

पदयूपवंशसीताः पथितिलमाषाः ससातयवभङ्गाः।

गङ्गासीरे सरथे सर्वेऽप्येतेऽनुतो लक्ष्याः ॥३४२॥

आनुपद्यः। आनुयूप्यः॥ आनुसूप्य इति वामनमतेन। आनुवंश्यः। अनुवंशेति दिगादावपि पठ्यते तत्राव्ययीभावादन्यत्र यः। केचित्तु तत्राप्यव्य-यीभाव एवेति मन्यन्ते। आनुसीत्यः। आनुपथ्यः। आनुतिल्यः। आनुमाष्यः।

ससातेति सह सातयवभङ्गाभिर्वर्त्तन्ते । ससातयवभङ्गाः । स्यति दुःखमिति सातं सुखम् । सातमनु—अनुसातम् । आनुसात्यः । अयं दिग्वस्त्रमतेन । आनुयव्यः । आनुभङ्ग्यः । अयं भोजमतेन । आनुगङ्ग्यः । अयं वामनादिमतेन। आनुसीर्व्यः। आनुरथ्यः। अयं दिग्वस्त्रमतेन। ननु मुखं परित इत्यर्थे कथमव्ययीभावः। सत्यम् अस्मादेव निपातनात्। अथवा परेर्वर्जनार्थवृत्तित्वे सति बहिःपर्यपाङ्गाञ्जित्यनेनाव्ययीभावः । अनुसीरादीनां तु सामीप्यवृत्तित्वात्स्वलक्षणेनैवाव्ययीभावः। अव्ययीभावादन्यत्र । परिगतं मुखं परिमुखम्। तत्र भवः पारिमुखः ॥ ३४२ ॥ इति परिमुखादिः ॥

ऋगयनपुनरुक्तन्यायशिक्षानिमित्ता उपनिषद्दृषियज्ञ-
श्लक्ष्णचर्चामुहूर्त्ताः । अपि निगमनिरुक्तोत्पातसंवत्सराव्या
करणमथपदव्याख्यानविद्यात्रिविद्याः ॥ ३४३ ॥

ऋगयनेभ्योऽण् इत्यनेन ऋगयनादेस्तस्य व्याख्यानो ग्रन्थस्तत्र भव इति वार्थेऽण् प्रत्ययो भवति॥ ऋचामयनम् ऋगयनम्। न क्षुभ्नादेरित्यनेन णत्वाभावः । तस्य व्याख्यानस्तत्र भवो वा । आर्गयणः । रत्वनिमित्तं तु णत्वं भवत्येव । आर्गयन इत्यन्यः। अस्मन्मते तु गिरिनद्यादित्वादुभयम् । पौनरुक्तः। नैयायः। शैक्षः। नैमित्तः । औपनिषदः । आर्षः । याज्ञः । श्लाक्ष्णः । चार्चः। मौहूर्त्तः। निगच्छन्त्यनेन निश्चयमिति निगमो ग्रन्थविशेषः। नैगमः। नैरुक्तः। उत्पातः प्रतिपादकशास्त्रम्। औत्पातः। सांवत्सरः। वैयाकरणः। पदानां व्याख्यानं पदव्याख्यानम्। पादव्याख्यानः। अन्ये तु पदं व्याख्यानमिति छिन्दन्ति। तन्मते पादं वैयाख्यानम्। वैद्यः। त्रैविद्यः॥ ३४३ ॥

छन्दसो विजितिर्भाषामानं विचितिनामनी ।
क्षत्राङ्गवास्तुतो विद्या स्यादुत्पादः क्रमेतरः ॥ ३४४ ॥

छान्दोविजितः । छान्दोभाषः। छान्दोमानः। छान्दोविचितः। छान्दोव्याख्यान इत्यप्यन्यः। छान्दोनामः। अयं वामनमतेन। क्षात्रविद्यः। आङ्गविद्यः। वास्तुविद्यः। औत्पादः। क्रामेतरः। ऋद्व्यञ्ब्राह्मणगादिभ्यष्ठञ् इत्यनेन ठञि प्राप्ते वचनम्। आदैजाद्यतस्यौ(१) ॥३४४॥ इति ऋगयनादिः॥

---

(१) व्याकरणशब्दात्तु वृद्धाच्छः प्राप्त इति ठञादेरपवादोऽयमण् इत्यधिकम्।

ऋग्ब्राह्मणाध्वराख्यातनामाख्यातानि नाम च ।
आद्यन्तप्रथमावेतौ षत्वणत्वनतानतौ ॥ ३४५ ॥

ऋद्यज्ञहृक्ग्गणादिभ्यष्ठञ् इत्यनेन ऋकारान्ताद्द्वयज्ञवाचिनो ह्रस्व ऋगादेश्च तस्य व्याख्यानस्तत्र भव इत्यर्थे ठञ् भवति । ऋचां व्याख्यानस्तत्र भवो वा आर्चिकः । ब्राह्मणिकः । आध्वरिकः । आख्यातिक. । नामाख्यातिकः । नामिकः। नामशब्दस्य ह्रस्वज् द्वारेण ठञ् सिद्धः। परं वामनपाणिनिचन्द्रादिमते न गणे पठितः॥ आद्यन्तिकः । प्राथमिकः । षात्वणात्विकः । नातानतिकः ॥ आकृतिगणश्चायम् । तेन पुरश्चरणप्रभृतयो द्रष्टव्याः॥३४५॥ इति ऋगादिः ॥

शुण्डिकोलपतीर्थान्युदपानतृणभूमयः ।
ककणस्थण्डिलौ पर्णोपतीर्थोदकपिप्पलाः ॥ ३४६ ॥

आयस्थानादशुण्डिकादेरित्यनेन शुण्डिकादिवर्जितात्तत आगत इत्यर्थे ठञ् भवति । शुल्क शालाया आगतः शौल्कशालिकः । आकरिकः । शुण्डिकादेः शुण्डिकः शुण्डिका वा सुरापणः(१)। तत आगतः शौण्डिकः। औलपः। उपल इति शकटाङ्गजः । तैर्थः । औदपानः । तार्णः । भौमः । कार्कणः । स्थाण्डिलः । पार्णः । औपतीर्थः । अयं चन्द्रवामनमतेन । औदकः । पैप्पलः ॥ एतौ शकटाङ्गजमतेन ॥ ३४६ ॥ इति शुण्डिकादिः ॥

कुलालसेनोपनिषन्निषादा मधुश्वपाकौ रुरुदेवराजौ ।
रुद्रो वधूब्राह्मणकुम्भकाराः कर्मारचण्डालयुतः सिरिन्ध्रः ३४७

कुलालेभ्योऽकञ् इत्यनेन कुलालादेः शब्दगणान् कृत इत्यर्थे सञ्ज्ञाविषयेऽकञ् भवति । कुलालेन कृतं कौलालकम् । घटघटीशरावोदञ्चनादि भाण्डम्। सैनकं नगरोपरोधादि । औपनिषदकम् । अयं वामनमतेन । नैषादकम् । माधवको मध्वासवः । अयं चन्द्रमतेन । शौवपाककम् । रौरवकम् । दैवराजकम्। देवराजन्निति केचित् पठन्ति । तत्र दैवकम्। राजकम्। रौद्रकम्। शकटाङ्गजदिग्वस्त्रमतेन। वाधवकम्। ब्राह्मणकम्। ब्रह्मन्निति शकटाङ्गजादयः । कौम्भकारकम् ॥ कार्मारकम् ॥ चाण्डालकम् । उपानदादिकम् ॥ अदासो दासवृत्तिर्यः स सिरिन्ध्र इति स्मृतः । सैरिन्ध्रकम्(२) ॥ ३४७ ॥

(१) सुरापणः सुराविक्रयी वोच्यत इति पा० । (२) सीरं हलमेव सैरम्। तद्वहतीति सैरन्ध्रः। सैरिकः सिरिन्ध्रोऽपि स एव। सैरन्ध्रकमिति पा० ॥

अनडुत्वान्परिषच्चैव सैरिन्ध्री वरुटस्तथा ।
अक्प्रत्यययुजो ज्ञेयाः सञ्ज्ञायां बुधपुङ्गवैः ॥ ३४८ ॥

आनडुहकम् । पारिषदकम् । पर्षच्छब्दोऽपि द्रष्टव्यः । सैरिन्ध्रकः । अयं श्रीभोजराजमतेन । वारुटकम् । शूर्पपिटकादि । सञ्ज्ञाया अन्यत्र । कौलालः श्लोक इत्यादि ॥ ३४८ ॥ इति कुलालादिः ॥

असुरो देवरक्षोभ्यां गुणान्मुख्यः परो मतः ॥ ३४९ ॥

दैवासुरः । राक्षोऽसुरः । गौणमुख्यः । अत्र शिशुक्रन्दाद्यदेवासुरादिद्वन्द्वाच्छ इति छो न भवति ॥ ३४९ ॥ इति देवासुरादिः ॥

शिशुप्रद्युम्नसीतेन्द्रयमाद् यथाक्रमं मताः ।
क्रन्दोऽभिगमनं चैवान्वेषणं जननं सभः ॥ ३५० ॥

शिशुक्रन्दाद्यदेवासुरादिद्वन्द्वाच्छ इत्यनेन शिशुक्रन्दादेः शब्दगणात् देवासुरादिवर्जिताच्च द्वन्द्वाद् द्वितीयान्तादधिकृत्यकृतो ग्रन्थ इत्येतस्मिन्नर्थे छप्रत्ययो भवति । शिशवो बालास्तेषां क्रन्दस्तमधिकृत्यकृतो ग्रन्थः । शिशुक्रन्दीयः । बालपुस्तकः । शैशुक्रन्द इत्यन्यः । प्रद्युम्नस्याभिगमनं प्रद्युम्नाभिगमनम् । प्रद्युम्नाभिगमनीयः । सीतान्वेषणीयः । इन्द्रजननीयः । यमस्य सभा यमसभम् । यमसभीयः ॥ आकृतिगणोऽयम् । तेन प्रद्युम्नप्रत्यागमनप्रद्युम्नोदयनसीताहरणप्रभृतयो द्रष्टव्याः ॥३५०॥ इति शिशुक्रन्दादिः ॥

सिन्धुस्तक्षशिलावसानदरदो गान्धारशाल्वोरसाः—
कर्णः सामलकाण्डधारच्छगलाः कैर्मेदुरो ग्रामणीः ।
कंसार्धासनसिंहकर्णमधुमत्कश्मीरसिंहा इमे—
स्याद्दत्सोद्धरणोथ बर्बरयुतो वर्णुस्तथा किन्नरः ॥ ३५१ ॥

सिन्धुशुण्डिकादिभ्योऽण्ञ्यावित्यनेन सिन्ध्वादेः शुण्डिकादेश्च सोऽस्याभिजन इत्यर्थेऽण्ञ्यौ क्रमेण भवतः । सिन्धुः समुद्रो नदी वा । सिन्धवो जनपदः । सोऽभिजनोऽस्य सैन्धवः । ताक्षशिलः । आवसानः । दरदो जनपदः । दारदः । गान्धारः । शाल्वः । उरसा जनपदः । औरसः । कारणः । सामलः । इयं वामनमतेन । काण्डधारः । काण्डवरक इति शकटाङ्गजः । छगलो ग्रामः

छागलः । कैमेंदुरः । ग्रामणः । कांसः । आर्घासनः । अयं वामनमतेन । सैंहकर्णः । सिंहकर्ण इति भोजः । मधुमान् पर्वतः । माधुमतः । काश्मीरः । सैंहः । अयं वामनमतेन । वात्सोद्धरणः । बार्बरः । वार्णवः ॥ कैन्नरः ॥३५१॥

गब्दिकावासकम्बोजक्रोष्टुकर्णसुमङ्गलाः ।
सङ्कुचितोऽथ किष्किन्धा पर्वतोऽपि निगद्यते ॥३५२॥

गब्दिका जनपदः । गाब्दिकः । आवासः । अयं वामनमतेन । काम्बोजः । क्रौष्टकर्णः । क्रोष्टुकर्णक इति भोजः । क्रोष्टुकशब्दो वामनमतेन । सौमङ्गलः । अयं वामनमतेन । सांकुचितः । कैष्किन्धः । पार्वतः । येऽत्र कच्छादिषु च पठ्यन्ते तेषां तत एवाणि सिद्धे नृतत्स्थलक्षणेऽकञि । अन्येषां च राष्ट्रलक्षणेऽकञि प्राप्ते वृद्धेत्स्वश्छवाहीकग्रामेभ्यष्ठञ्ञिठयोश्शेषेभ्योऽणि प्राप्ते वचनम् ॥ ३५२ ॥ इति सिन्ध्वादिः ॥

शुण्डिका कुचवारोऽथ सर्वसेनशटौ शकः ।
सर्वकेशरहौ बोधश्चणकः शङ्खशङ्करौ ॥ ३५३ ॥

शुण्डिका ग्रामः । अभिजनोऽस्य शौण्डिक्यः । अयं वामनमताभिप्रायः । पाणिन्यादयस्तु शण्डिकस्य ग्रामजनपदवाचिनः शाण्डिक्य इत्युदाहरन्ति । कौचवार्य्यः । सर्वसेना जनपदः सार्वसेन्यः । शटा जनपदः शाट्यः । शका जनपदः शाक्यः सुगतः । रक इत्यपि शकटाङ्गजः । सर्वकेशा जनपदः सार्वकेश्यः । राह्यः । अयं भोजमतेन । वह इति वामनः । बौध्यः । चाणक्यः । शाङ्ख्यः कपिलः । शांकर्य्यः । कत इति वामनः । राष्ट्रवाचिभ्योऽकञ् शेषेभ्योऽणि प्राप्ते वचनम् ॥ ३५३ ॥ इति शुण्डिकादिः ॥

कर्णाक्षिकेशा नखपादगुल्फभ्रूशृङ्गदन्तौष्ठमुखास्यपृष्ठम् ॥

कर्णादिपक्षान्मूलं जाहतिरित्यनेन करणादेः शब्दगणात्पक्षशब्दाच्चास्य मूलमित्यर्थे जाहतिप्रत्ययौ भवतः । कर्णस्य मूलम् कर्णजाहम् । यथा—
अपिकर्णजाहविनिवेशितानन: ॥
यथा च— दधाना वलिभं मध्यं कर्णजाहविलोचना ।
आकृत्यचेनातिसर्वेण चन्द्रलेखेव पक्षती ॥

अक्षिजाहम् । केशजाहम् । नखजाहम् । पादजाहम् । गुल्फजाहम् । गुल्फ इत्यपि चन्द्रः । भ्रूजाहम् । शृङ्गजाहम् । दन्तजाहम् । ओष्ठजाहम् ।

सुखजाहम्। आस्यजाहम् । अयं शकटाङ्गजमतेन। पृष्ठजाहम्। अयं वामनमतेन । पुष्प इति चन्द्रादयः । वक्त्रफले अपि शकटाङ्गजः । इति कर्णादिः ॥

कर्णादिरेपोऽथ च पीलुशम्यावश्वत्थकर्कन्धुकरीरयुक्तौ ॥३५४॥

पीलवादेः पाके कुण इत्यनेन पीलवादेः शब्दगणादस्य पाक इत्यर्थे कुण प्रत्ययो भवति॥ पीलूनां वृक्षाणां फलानां वा पाकः पीलुकुणः। शमीकुणः। अश्वत्थकुणः। कर्कन्धुकुणः। करीरकुणः ॥ ३५४ ॥

कुवलं वदरं पुष्पकर्कन्धूखदिरास्तथा ।

वदरीकुवलीशब्दौ शाकटायनसम्मतौ ॥ ३५५ ॥

कुवलकुणः। बदरकुणः। पुष्पकुणः। अयं चन्द्रमतेन। कर्कन्धूकुणः। खदिरकुणः। बदरीकुणः। कुवलीकुणः ॥ ३५५ ॥ इति पीलवादिः ॥

रैवतिकबैजवापी गौरग्रीविस्तथौदमेघिश्च ।

स्वापिशिरथौदवापिः परिपठितः क्षैमवृत्तिश्च ॥ ३५६ ॥

रैवतिकादेश्छ इत्यनेन रैवतिकादेः शब्दगणादस्येदमित्यर्थे छप्रत्ययो भवति॥ रेवत्या अपत्यं रैवतिकः। रेवत्यादेष्ठण् इत्यनेन ठणि। रैवतिकस्यायं-रैवतिकीयः शकटाश्वादिः। बीजवापस्यापत्यं बैजवापिः। बैजवापीयः॥ गौरग्रीवीयः। औदमेघीयः॥ स्वःपिशः स्वपिशः॥ तस्यापत्यं स्वापिशिः। अतएव गणपाठादूद्वारादेरित्यनेन टैज् न भवति। औदवापीयः। औदवाहिरित्यन्ये। क्षैमवृत्तीयः॥ अस्यापि शिष्येत्यादिनाऽकञि प्राप्ते वचनम् ॥३५६॥

इति रैवतिकादिः ॥

गोहविःखरदरासुरमेधा अष्टकायुगखदाविषकूपौ ।

स्रुक्स्वदाध्वसंहिताक्षरवेदावूधसोऽनङि नभेऽपि च नाभेः ३५७

गवाद्योस्तु य इत्यनेन गो इत्यादेः शब्दगणादुवर्णान्ताच्च यप्रत्ययो भवति वक्ष्यमाणेष्वर्थेषु। गव्यम्। हविर्होतव्यं वस्तु। हविषे हितं तदर्थं वा। हविष्यम्। खर्य्यम्॥ दर्य्यम्॥ असुर्य्यम्। मेध्यम्॥ अष्टका श्राद्धकालः। अष्टक्यम्। युगाय हितं युगोऽस्यस्यादिति वा। युग्यम्। खदतीति खदो हिंसकः। खद्यम्॥ विष्यम्। कूप्यः॥ स्रुच्यः॥ स्वदा कुद्दाली। तदर्थं स्वद्यं लोहम्।

अध्वन्यः । अक्षय्यैः । वेद्यः । अयं वामनमतेन । ऊधस इत्यूधःशब्दस्यानङा-देशे सति पाठः । ऊधसेहितः ऊधन्योऽभ्यङ्गः । नाभये हितम् । नभ्यमञ्जनम् । नभ्योऽक्षः । प्राययङ्गवाचिनस्तु नाभिशब्दादुत्तरसूत्रेण य एव । नाभ्यं तैलम् ३५७

शुनो यण इति ज्ञेयं दीर्घत्वं च विभाषया ।
कूर्पबीजक्षरादीसबर्हिःशब्दौ मताविह ॥ ३५८ ॥

शुने हितं शुन्यम् । शून्यं च । रक्षपालमात्रेणापि रहितं गृहं कुटीर-कादिपर्वतारण्यादिस्थानं तूपचारेण ॥ कूर्प्यो देशः । बीजेभ्य इमे । बीज्या व्रीहयः । क्षरायेदम् क्षर्यं काष्ठम् । दीसः श्लेषः । तदर्थं काष्ठं दीस्यम् ॥ बर्हिर्दर्भः । बर्हिष्यम् ॥ ३५८ ॥ इति गवादिः ॥

अपूपयूपौ कटकोऽथ किण्वः सूपौदनौ तण्डुलकर्णवेष्टौ ।
अवोषदीपौ पृथुकश्च पत्रं स्थूणार्गलाश्वा मुसलोऽपि पूपः ३५९

हव्यापूपादेर्वेत्यनेन वक्ष्यमाणेष्वर्थेषु हविर्विशेषवाचिनोऽपूपादेश्च यप्र-त्ययो भवति वा । आमिक्ष्यम् । आमिक्षीयं दधि । अपूप्यम् । अपूपीयम् अन्नम् । यवापूप्यम् । यवापूपीयम् । यूपो यज्ञस्तम्भः । यूप्यम् । यूपीयम् । कटक्यम् । कटकीयं हेम । किण्वं मदिराकिट्टः । किण्व्यम् । किण्वीयम् । सूप्यम् । सूपीयम् । ओदन्यम् । ओदनीयम् । तण्डुल्यम् । तण्डुलीयम् । कर्णवेष्ट्यम् । कर्णवेष्टीयम् । कर्णवेष्टक इत्यन्ये ॥ अवोष्याः । अवोषीयाः क-लायाः । दीप्यम् । दीपीय वेश्म ॥ पृथुक्याः । पृथुकीया व्रीहयः ॥ पत्र्यम् । पत्रीयम् । अश्वपत्र्यम् । अश्वपत्रीयमित्यपि । स्थूण्यम् । स्थूणीयं काष्ठम् ॥ अरेण कर्षणेन गलति अर्गला दारुमयो लोहमयो वा दण्डः । अर्गल्यम् । अर्ग-लीयम् । अयं भोजमतेन । वामनाद्यास्त्वर्गल इति पेठुः । अश्व्यम् । अश्वी-यम् ॥ मुसल्यम् । मुसलीयम् ॥ पूप्यम् । पूपीयम् ॥ शाकटायनमतमाश्रित्या-न्नविकाराश्चेति न पठितम् । एभ्यस्तु सुर्योः सुरीयास्तण्डुला इत्याद्युदाहर-णम् । सादेश्चेत्यधिकारात् । प्रदीप्यम् । प्रदीपीयमित्यादि । अन्येतु प्रदी-पशब्दमपि पठन्ति । तन्मते नियमार्थं विदीपीयमित्यादि । अन्नविकारेभ्यस्त्व-र्थपरत्वान्न भवति । यवसुरीयम् । पिष्टसुरीयम् । अतएवापूपाद्यन्नविकाराणां पृथग्ग्रहणमर्थवद्भवति । अपूपादिषु येऽन्नभेदशब्दा अपूपादयस्तेषां केनचि-

द्याकारसादृश्येनार्थान्तरवृत्तौ प्रत्ययार्थमुपादानमिति शकटाङ्गजः । अस्माकं त्वयमाशयः । शष्कुलीमोदकप्रभृतयोऽन्नविकाराः पृथुकापूपादयस्त्वन्नमेव विशिष्टावस्थं नान्नविकार इति पृथगुपादानम् ॥ ३५९ ॥ इत्यपूपादिः ॥

इति श्रीगोविन्दसूरिशिष्यपण्डितश्रीवर्धमानविरचितायां
स्वोपज्ञगणरत्नमहोदधिवृत्तौ शेषसाध्वर्थभवाख्यानागतार्थ-
कृताभिजनपाकेदमर्थविहिततद्धितप्रत्ययगणनिर्णयो
नाम पञ्चमोऽध्यायः समाप्तः ॥

# अथ षष्ठोऽध्यायः ॥

संशयपष्ठान्नव्रतभारतरामायणैकभक्तानि ।
अष्टममासक्षपणोपवासपारायणानि स्युः ॥३६०॥

तत्संशयादेः करोतीत्यनेन द्वितीयान्तात्करोतीत्येतस्मिंल्लोकप्रसिद्धेऽर्थे ठञ् भवति॥ संशयं करोति सांशयिकः स्याद्वादिः। पाष्ठान्नव्रतिकः। भारतिकः। रामायणिकः । अनयोः करोतिः कथने वर्तते । ऐकभक्तिकः । आष्टमिकः । मासक्षपणिकः ॥ औपवासिकः । पारायणं साकल्यवचनम् । पारायणिकः । अथवा पारायणमिति सामान्येनाभिधानात् धातुपारायणं नामपारायणं वाभिधीयते। तत्करोति पठनपरिसमाप्तिं नयतीत्यर्थः। एतच्च करोतेरशेषधात्वर्थानुगतवृत्तित्वाल्लभ्यते । तदुक्तम्—

विकारभेदसंसर्गोत्कर्षहानादिरूपतः। करोतिः परिणामार्थं चित्रमाह स्वभावतः॥

आकृतिगणोऽयम् । तेन तुरायणचान्द्रायणप्रभृतयो द्रष्टव्याः ॥३६०॥

इति संशयादिः ॥

अजशङ्कूत्तरा वारि कान्तारस्थलजङ्गलाः ।

तेनाजाद्यादेराहृतं वेत्यनेनाजादिपूर्वपदात्पथिशब्दात् तेनाहृतं तद्गच्छतीत्येतस्मिन्नर्थे ठञ् भवति ॥ अजपथेनाहृतम् अजपथं गच्छति वा । आजपथिकम् । आजपथिकः । शङ्कुरिव ऋजुः पन्थाः शङ्कुपथः । शाङ्कुपथिकम् । औत्तरपथिकम् । वारिपथिकम् । कान्तारपथिकम् । स्थालपथिकम् । जाङ्गलपथिकम् ॥ इत्यजादिः ॥

ऋतुस्तथोपवस्ता च प्राशिता च बुधैर्मतः ॥३६१॥

ऋत्वादिभ्योऽण् इत्यनेन ऋत्वादेरस्य प्राप्त इत्येतस्मिन्नर्थेऽण् भवति ॥ ऋतुः प्राप्तोऽस्य आर्त्तवं पुष्पम् । आर्त्तवी कलिका । आर्त्तवः पुष्पबन्धः । उपवस्ता । उपवासव्रती । स प्राप्तोऽस्य औपवस्त्रं पर्वभोज्यं वा ॥ प्राशिता भोक्ता प्राप्तोऽस्य प्राशित्रं भोजनम् । प्राशित्री रसवती । ऋत्वादयः प्रयोगगम्याः ॥३६१॥ इति ऋत्वादिः ॥

सन्तापसङ्घातनिसर्गयोगोपवाससम्पादनसम्परायाः ।
सङ्ग्रामसंयोगविसर्गमांसप्रवासमांसौदनसन्निपाताः ॥३६२॥

तस्मै प्रभवति सन्तापादिभ्य इत्यनेन सन्तापादेश्चतुर्थ्यन्तात्तस्मै प्रभवतीत्येतस्मिन्नर्थे ठञ् भवति ॥ सन्तापाय प्रभवति सांतापिकं दुर्जनसंगतम् । सांतापिको ग्रीष्मकालः । सांतापिकी नीचसेवा ॥ सांघातिकम् । नैसर्गिकम् । निःसर्ग इत्यपि वामनः । यौगिकम् । अयं शकटाङ्गजमतेन । औपवासिकः । सांपादनिकः । सांपरायिकः । सांग्रामिकः । सांयोगिकः । वैसर्गिकः । मांसिको व्याघ्रागमः । प्रावासिकः । मांसौदनिकः । वस्तुमांसौदन इत्यन्यः । सांनिपातिकः ॥ ३६२ ॥

संनाहौदनसंवेशसक्तुसंमोदनं निरः ।
पेषवोपावुपात्सर्गः पेषवासक्रमाः समाः ॥ ३६३ ॥

सांनाहिकः । औदनिको दानपतिसंयोगः । सांवेशिकः । सक्तुभ्यः गतः साक्तुकः । समोदनं रूपेः । सामोदनिकः । नैष्पेषिकः । नैर्घोषिकः । औपसर्गिकः । सांपेषिकः । सांवासिकः । सांक्रामिकः । अयं शकटाङ्गजमतेन । ॥ ३६३ ॥ इति संतापादिः ॥

व्युष्टोपवासौ परिषत्प्रवासौ सङ्ग्रामतीर्थं समुदायनित्यम् ।
प्रवेशनो निष्क्रमणः समोऽग्रेर्घातः पदं पीलुपरं च मूलम् ३६४

व्युष्टादिभ्योऽण् इत्यनेन व्युष्टादेस्तत्र कार्यं दीयत इत्येतयोरर्थयोरण् भवति । व्युष्टं प्रभातम् । तत्र कार्यं दीयते वा । वैयुष्टम् । औपवासम् । पारिषदम् । प्रावासम् । सांग्रामम् । तैर्थम् । सामुदायम् । नित्यशब्दो द्वियमा- [illegible] । ननु [illegible]

सर्वेऽध्वभावकाला इति सप्तमीप्रसङ्गे द्वितीया स्यात् । नैत्यः । सर्वकालं दीयत इत्यर्थः । प्रवेशने गृहान्नगराद्वा कार्य्यं दीयते वा । प्रावेशनम् । एवं नैष्क्रमणम् । सांघातम् । आग्निपदम् । पैलुमूलम् । परिषत्समुदायशब्दो व्यासक्तत्वेन । आकृतिगणश्चायम् । तेन लौकयात्राप्रभृतयो द्रष्टव्याः ॥ ३६४ ॥

इति व्युष्टादिः ॥

चूडा श्रद्धा द्वादशाहस्तथायं ज्ञेया यात्रा देवतीर्थात्परेह ।
स्वर्गः कामो बोधनायुर्यशांस्यनेकोलक्ष्यो धीमता लक्ष्यतश्च ३६५

चूडास्वर्गोत्थापनास्वस्तिवाचनादेरण् यच्छठञ्लुगित्यनेन चूडादिस्वर्गोद्युत्थापनादिस्वस्तिवाचनादीत्येतेभ्यो गणेभ्यः प्रथमान्तेभ्योऽस्य प्रयोजनमित्येतस्मिन्नर्थेऽण् यच्छठञ्लुगित्येते क्रमेण भवन्ति ॥ चूडाप्रयोजनमस्य चौडम् ।
यथा— सवृत्तचौलश्चलकाकपक्षकैरमात्यपुत्रैः सवयोभिरन्वितः ॥

एवं श्राद्धम् । द्वादशाहम् । दैवयात्री पुष्पप्रचितिः । तैर्थयात्र्यन्नपङ्क्तिः ।

इति चूडादिः ॥

स्वर्गःप्रयोजनमस्य स्वर्ग्यं धनम् । स्वर्ग्या देवपूजा । काम्या इष्टयः ॥ धन्यम् । आयुष्यम् । यशस्या विद्या ॥ ३६५ ॥ इति स्वर्गादिः ॥

उदुपाभ्यां परात्स्थापेरनोऽनोः प्रवचेर्वचेः ।
विशेर्वासेस्तथाङ्प्राच्च रुहेः समाविशारभेः ॥३६६॥

उत्थापनम् । उत्थापना वा प्रयोजनमस्य उत्थापनीयम् । उपस्थापनीयम् । अनुप्रवचनीयम् । अनुवचनीयम् । अनुपश्चाद्वाचनम् अनुवाचनमिति वामनः । अनुवादनम् । अनुपानमित्यपरः । अनुवेशनीयम् । संवेशनमिति वामनः । अनुवासनीयम् । आङ्प्राच्चेति चकारेणानोरित्यनुकृष्यते । आरोहणीयम् । प्ररोहणीयम् । अनुरोहणीयम् । समावेशनीयम् । समारम्भणीयम् ३६६

विशेः पदे रुहेः पूरेः समापेश्च सपूर्वतः ।
स्वस्तिवाचनं पुण्याहवाचनं शान्तिवाचनम् ॥३६७॥

अन इत्यनुवर्त्तते । गृहप्रवेशनं प्रयोजनमस्य गृहप्रवेशनीयम् । अश्वप्रपदनीयम् । प्रासादारोहणीयम् । प्रपापूरणीयम् । व्याकरणसमापनीयम् । सपूर्वत इति गृहादिपूर्वपदोपेतात् ॥ इत्युत्थापनादिः ॥

स्वस्तिवाचनं प्रयोजनमस्य स्वस्तिवाचनम्। पुण्याहवाचनम्। शान्तिवाचनम्। उत्थापनादयः स्वस्तिवाचनादयश्च प्रयोगगम्याः ॥ ३६७ ॥

इति स्वस्तिवाचनादिः ॥

देवतिलदेशविरतेर्महतः सामायिकाद्व्रतं गदितम् ।
दीक्षावान्तारपूर्वात्त्रिश्रुतिकाः स्युर्महानाम्न्यः ॥३६८॥

तच्चरति देवव्रतादिभ्यो डिनू इत्यनेन तदिति द्वितीयान्ताद्देवव्रतादिशब्दगणाच्चरतीत्यर्थे डिनू भवति। देवव्रतं चरति देवव्रती। तिलव्रतं चरति तिलव्रती। देशविरतिव्रती। महाव्रती। सामायिकव्रती। आवान्तरदीक्षी ॥

इति देवव्रतादिः ॥

त्रिश्रुतिका इति त्रिशब्दो महानाम्न्यादिरित्यर्थः। महानाम्न्यादेरित्यनेन महानाम्न्यादेर्द्वितीयान्ताच्चरतीत्यर्थे ठञ्। महानाम्न्यो नाम ऋचः। तत्सहचरितं व्रतं तच्छब्देनोच्यते। महानाम्नीश्चरति माहानाम्निकः। आख्यातरूपत्वादस्त्रीत्वाभावः। आदित्यव्रतिकः। गौदानिकः। तथाऽस्य ब्रह्मचर्य्ये इत्यनेन ब्रह्मचर्येऽभिधेय एषां तुल्यं रूपम् ॥३६८॥ इति महानाम्न्यादिः ॥

अश्ववस्वश्मभङ्गोमायर्णोर्णागणमित्यपि ।
वंशावल्वजमूलाक्षस्थूणाखट्वाकुटेक्षवः ॥ ३६९ ॥

ब्रह्मवर्चसद्रवोऽसङ्ख्यामानाश्वादेर्य इत्यनेन ब्रह्मवर्चसशब्दात्सङ्ख्यामानाश्वादिवर्जिताच्च द्रवः शब्दात् तस्य हेतुः संयोगोत्पातावित्येतस्मिन्नर्थे यप्रत्ययो भवति ॥ ब्रह्मवर्चसस्य निमित्तं संयोग उत्पातो वा। ब्रह्मवर्चस्यः। द्राव्यः। धनस्य निमित्तम् धन्यम्। स्वर्ग्यमित्यादि। सङ्ख्यामानाश्वादि प्रतिषेधः किम्। पञ्चकः। सप्तकः। प्रास्थिकः। खारीकः। अश्वादेः आश्विकः। वासुकः। आश्मिकः। भाङ्गिकः। औमिकः। वार्षिकः। और्णिकः। गाणिकः।

इत्यश्वादिः ॥

वंशादिभारं हरति वहत्यावहतीत्यनेन वंशादेः पराद्भारशब्दाद्भारभूताद्वा वंशादेर्द्वितीयान्ताद्धरति वहत्यावहतीत्यर्थे ठञ् भवति। वंशभार हरति वहत्यावहति वा। वांशभारिकः। वाल्वजभारिकः। मौलभारिकः। आक्षभारिकः। स्थौणाभारिकः। खाट्वाभारिकः। कौटभारिकः। कुटज इति

वामनः । ऐक्षुभारिकः । अश्वत्थ इत्यपि दिग्वस्त्रः । अक्ष इत्यपि भोजः । भारभूतान्वा वंशान् हरति वहत्यावहति वा । वांशिकः । वाल्वजिकः । मौलिकः । आक्षिकः । स्थौणिकः । खाट्विकः । कौटिकः । ऐक्षुकः । अश्वाश्मशब्दौ गणे द्रष्टव्यौ । हरति देशान्तरं प्रापयति चोरयति वा आवहत्युत्पादयतीत्यर्थः ॥३६९॥ इति वंशादिः ॥

छेदं भेदं सम्प्रयोगं विकर्षं दोहद्रोहौ विप्रकर्षप्रकर्षौ ।
कर्षं नर्त्तं विप्रयोगप्रयोगौ संवेः प्रश्नं प्रेषणं विद्धि विद्वन् ॥३७०॥

छेदादेर्नित्यमित्यनेन छेदादेस्तदर्हतीत्येतस्मिन्नर्थे ठञ् प्रत्ययो भवति ॥ छेदं नित्यमर्हति छैदिकस्तरुः । भैदिकः शत्रुः । साम्प्रयोगिकः । वैकर्षिकः । दौहिकी गौः । द्रौहिकः ॥ वैप्रकर्षिकः । प्राकर्षिकः । कार्षिकः ॥ नार्त्तिकः । गोनर्त्त इत्यन्ये । वैप्रयोगिकः । प्रायोगिकः । साम्प्रश्निकः । वैप्रश्निकः । प्रैषणिकः । प्रेक्षण इति शकटाङ्गजः । विरागविरङ्ग चेति गणसूत्रं वामनमतेन । वैरङ्गिकः ॥३७०॥ इति छेदादिः ॥

दण्डार्घमेधामुसलानि मेघो वधोदकेभा मधुपर्कयुक्ताः ।
युगं कशासौ पितृदेवता च दण्डादिरेवं विबुधैः प्रणीतः ३७१

दण्डादेरित्यनेन दण्डादेः शब्दगणादर्हतीत्येतस्मिन्नर्थे यो भवति । दण्डमर्हति दण्ड्यः। दण्डो दमनं न तु यष्टिः। यथा स्थित्यै दण्डयतो दण्ड्यान्। ननु दण्डमर्ह इति दण्ड्यः पूर्वतीत्यादिना सिद्धम् । सत्यम् । दण्डमर्हतीति ठञ् प्रसज्येत ॥ अर्घ्योऽतिथिः । यथा—तमर्घ्यमर्घादिकयादिपूरुषः ॥ मेध्यः । मुसलघातो मुसलः । मुसल्यः । मेघ्यः । वध्यः । उदक्यः । इभ्यो धनी । मधुपर्क्यः श्रोत्रियो गृहागतः। युग्यो दम्यः। कशाघातोऽपि कशा । कश्योऽश्वः। पितृदेवत्यः। श्राद्धकालः। आकृतिगणश्चायम् । तेन रथकन्यादयो द्रष्टव्याः ॥३७१॥
इति दण्डादिः ॥

सुस्नाताभ्युन्नतीबन्धुमैत्रीनिद्रासुखात्परा ।
सुखाच्छय्यातपो रात्रिर्दिवसः शयनं शयः ॥३७२॥

सुस्नातादेः पृच्छतीत्यनेन सुस्नातादेर्द्वितीयान्तात्पृच्छतीत्यर्थे ठञ् भवति । सुस्नातं पृच्छति सौस्नातिकः । यथा । सौस्नातिकी यस्य भवत्यगस्त्यः ।

आभ्युन्नतिकः । वान्धुसैत्रिकः । सौखनिद्रिकः । सौखशय्यिकः । सौखतप-सिकः । सौखरात्रिकः । सौखदिवसिकः । सौखशयनिकः । अयं शकटाङ्गजमतेन । अस्मन्मतेतु सौखशायनिक इति स्यात् ॥ सौखशयिकः ॥३७२॥

इति सुस्नातादिः ॥

परदारा गुरोस्तल्पं माथोत्तरपदं तथा ।
पदव्यनुपदाक्रन्दजन्ययात्राः प्रकीर्तिताः ॥३७३॥

परदारादेर्गच्छतीत्यनेन परदारादेर्गमनाट्ठञ् भवति ॥ परदारान् गच्छति कामयते पारदारिकः । गुरोस्तल्पं कलत्रं गुरुतल्पम् । गौरुतल्पिकः । दाण्डमाथिकः ॥ शौल्कमाथिकः ॥ माथशब्दः पथिपर्यायः । पादविकः । आनुपादिकः । अनुगतमत्युत्तरवक्ता प्रत्यासत्त्या धावति वा । इष्टविपत्तावुच्चैरुदितारावं आक्रन्दः । आक्रन्दन्त्यस्मिन्नित्याक्रन्दो देश आर्त्तशरणं वा । आक्रन्दिकः । जान्ययात्रिकः ॥ अन्येऽपि प्रयोगगम्याः ॥३७३॥

इति परदारादिः ॥

प्रभूतस्वागतस्वस्तिपर्याप्तागमनं स्वरः ।
नित्यमाकार्यतः शब्दः प्रभूतादिगणे मतः ॥३७४॥

आह प्रभूतादिभ्य इत्यनेन ठञ् । प्रभूतमाह प्राभूतिकः । प्रभूतं भवतां धनधान्यादिकमभीष्टं स्यादिति प्रियाशिषं वदन्नेवमुच्यते । स्वागतिकः । सौवस्तिकः । पार्याप्तिकः । सौवर्गमनिकः । नित्यशब्द इति ब्रुवाणः । नैत्यशब्दिकः । माकृथाः पापमनाचारं चेति ब्रुवाणः माशब्दिकः । कार्यशब्द इति ब्रुवाणः कार्यशब्दिकः । माशब्दादिभ्यो वाक्यात्प्रत्ययविधानम् ॥३७४॥

इति प्रभूतादिः ॥

पर्पाश्वत्थावाकपजालव्यासारथाश्वधासाः स्युः ।
छतपन्नावः पादो निर्दिष्टोऽर्थध्वनिः कैश्चित् ॥३७५॥

पर्पादेष्ठट् इत्यनेन तेन चरतीत्यर्थे ठङ् भवति । पर्पो दारुनिर्मितः । शकटप्राय उपकरणविशेषः । तेन । चरति पर्पिकः । पर्पिकी । अश्वत्थिकः । आश्वत्थिकी ॥ आकषन्ति सुवर्णमत्र परीक्षार्थमित्याकषो निकषोपलः ॥ आकषन्ति पिंषन्त्यस्मिन्नौषधीरित्याकषः पाषाण इत्यन्ये । आकषिकः ।

आकर्पिकी ॥ आकर्षो लोहोपकरणविशेष इति वामनः ॥ जालिकः । व्यासो महाजालम् । व्यासिकः। व्याल इत्यप्यन्यः॥ रथिकः॥ अश्विकः ॥ घासिकः ॥ पदिकः । पदातिर्लेखवाहकादिर्वा ॥ अर्थिकः ॥३७५॥ इति पर्पादिः ॥

स्युर्वेतनप्रेषणशक्तिदण्डवाहार्धवाहोपनिषत्सुखानि ।
वेश्मोपवस्तीभृतिपादवेशोपवेशशय्याः स्फिगचालजालम्॥३७६

वेतनादेर्जीवतीत्यनेन तेन जीवतीत्येतस्मिन्नर्थे ठञ् भवति । वेतनेन जीवति वैतनिकः कर्मकरः। प्रैपणिकः । शाक्तिकः। दाण्डिकः॥ वहनं वाहनं वा वाहः ॥ वाहिकः ॥ आर्धवाहिकः ॥ औपनिषदिकः । सौखिकः । वैश्मिकः॥ इय वामनमतेन ॥ औपवस्तिकः ॥ भार्त्तिकः ॥ पादिकः॥ वेशो दारिकावाटः । वैशिकः । औपवेशिकः । शाय्यिकः । अन्ये सुखशय्येति पठन्ति । त आहुः सुखशय्यया जीवति किं सुख शयितवन्तो भवन्त इति यः परप्रश्नेन जीवति स सौखशय्यिक इति॥ चलनं चालः ॥ स्फिगस्य चालः स्फिगचालः ॥ स्फैगचालिकः ॥ पुतचाल इत्यन्ये ॥ जालिकः ॥३७६॥

उपदेशधनुर्दण्डोपनिजस्तधनुःस्फिजः ।
उपाच्च हस्तिवेषस्थस्थानान्युपास्तिरित्यपि ॥३७७॥

उपदेशेन जीवति औपदेशिकः ॥ धानुर्दण्डिकः ॥ उपनिजस्तं किल पैशुनम् । औपनिजस्तिकः॥ धानुष्कः । स्फैजिकः ॥ औपहस्तिकः ॥ औपवेशिकः ॥ औपस्थिकः(१) ॥ औपस्थानिकः ॥ औपास्तिकः ॥ ३३७ ॥
इति वेतनादिः ॥

उत्सङ्गपिटकावुक्तावुडुपोत्तुपसंयुतौ ।
उडुपोऽथ पिटाकश्च स्यादुत्पुटोत्पुतौ तथा ॥ ३७८ ॥

हरत्युत्सङ्गादेरित्यनेन तेन हरतीत्येतस्मिन्नर्थे ठञ् भवति ॥ उत्सङ्गेन हरति औत्सङ्गिकः कुमारः । पैटकिकः । उत्पूर्वात् तुपतुम्पहिंसायामित्यत इगुपाधलक्षणे के । अतएव निपातनात्तकारस्य पक्षे टकारः । औट्टपिकः । औत्तुपिकः । औडुपिकः । पैटाकिकः । औत्पुटिकः । उद्गतं पुतम् उत्पुतम् । औत्पुतिकः ॥ ३७८ ॥ हरत्युत्सङ्गादि ॥

---

(१) उपस्थेन जीवति–औपस्थिकी वराङ्गनेत्यधिकम् ।

प्रोक्ता भस्त्राभरणं शीर्षभारः शीर्षभारो भरटश्चांसभारः ॥
अंसेभारः करणं पङ्कभारो ज्ञेयः प्राज्ञैः करटोऽन्येऽपि शब्दाः ३७९

भस्त्रादेष्ठङ् इत्यनेन तेन हरतीत्यर्थे ठङ् भवति । भस्त्रया हरति भस्त्रिकः। भस्त्रिकी । भ्रियते भरणम्। भरणिकः। शीर्षे भारः शीर्षभारः। शीर्षभारिकः। शीर्षेभारिकः। भरटः प्लवविशेषः। भरटिकः(१)। अंसभारिकः। अंसेभारिकः। करणिकः—शनैः शनैरुपचितपङ्कभारिकाः पयोधराः प्रययुरपेतवृष्टयः ॥ करटिकः। एतौ वामनमतेन । वातोर्मीयं गदिता म्भौतगौ ग इति वृत्तम् ॥ ३७९ ॥ इति भस्त्रादिः ॥

अक्षद्यूतोऽथ जङ्घाप्राहृतं हृतं गतागतम् ॥
पादस्वेदनं यातोपयातं कण्टकमर्दनम् ॥ ३८० ॥

निर्वृत्तेऽक्षद्यूतादेरित्यनेनैतस्मात्तेन निर्वृत्त इत्यर्थे ठञ् भवति । अक्षद्यूतेन निर्वृत्तम् आक्षद्यूतिकम् ॥ जाङ्घाप्रहतिकम् । जाङ्घाप्रहृतिकम् । गतं च तद् आगतं च गतागतम् । गातागतिकम् । गतानुगतमित्यन्ये । पादयोः स्वेदनं पादस्वेदनम् । पादस्वेदनिकम् । पादस्वेद इत्यन्ये । यातोपयातिकम् । यातिकम्। औपयातिकमित्यन्ये। काण्टकमर्दनिकम्। कण्टकमर्द इत्यन्ये ॥३८०॥

शर्करामर्दनं सत्त्ववागङ्गानुगतानि च ।
अन्येऽपि ध्वनयो लक्ष्या अक्षद्यूतादिनामनि ॥ ३८१ ॥

शार्करामर्दनिकम्। शर्करामर्द इत्यन्ये। सत्त्वं मनो गुणो वा । सात्त्विकः । वाचिकः । आङ्गिकः । आनुगतिकः । अन्येऽपीत्याकृतिगणत्वादिति शेषः ॥ ३८१ ॥ इत्यक्षद्यूतादिः ॥

निकटो भिक्षुके वृक्षमूलमावसथस्तथा ।
श्मशानाभ्रावकाशौ च निकटादौ बुधैर्मतौ ॥ ३८२ ॥

निकटादेर्वसतीत्यनेनास्मात्तत्र वसतीत्यर्थे ठञ् भवति । निकटे वसति नैकटिकः । यो ग्रामसमीपे वसत्यारण्यको भिक्षुः स एवमुच्यते प्रसिद्धेः(२) ।

---

(१) सरटः प्लवविशेषः—सराटिकः । भरटेति केचित् । (२) नैकटिकः । आरण्यकेन भिक्षुणा ग्रामात् क्रोशे वस्तव्यमिति यस्य शास्त्रतो वासः स एवोच्यते इति पा० ।

वार्क्षमूलिकः । आवसथिकः । श्माशानिकः । आभ्रावकाशिकः । अभ्यवकाश इति शकटाङ्गजः ॥ ३८२ ॥ इति निकटादिः ॥

**महिषी मणिपाली प्रालेपिका पुरोहितः ।**
**प्रजापतिप्रजावत्यनुचारकविलेपिकाः ॥ ३८३ ॥**

अमहिष्यादेरण् इत्यनेन अकारान्तान्महिष्यादेश्चास्य धर्म्यमित्यर्थेऽण् भवति । होतुर्धर्म्यम् हौत्रम् । महिष्या धर्म्यं न्याय्यं युक्तमित्यर्थः । माहिषम् । मणीन् पालयतीति मणिपाली स्त्री । माणिपालम् । प्रलिम्पत्यनुलिम्पति वा प्रलेपिका । अनुलेपिका । प्रालेपिकम् । आनुलेपिकम् । पुरो दधाति स्म । पुरोहितः । पौरोहितम् । प्रजानां पतिः प्रजापतिः । प्राजापतम् । प्रजा अस्याः सन्ति प्रजावती । प्राजावतम् । अनुचरति अनुचारकः। आनुचारकम् । विलिम्पतीति विलेपिका । वैलेपिकम् ॥ ३८३ ॥

**यजमानोऽनुवाकश्च नरो वर्णकपेषिका ।**

यजते यजमानः । याजमानम् । होतृयजमानेति केचित्पठन्ति । तत्र होता च यजमानश्च होतृयजमानम् । तस्य धर्म्यं हौतृयजमानम् । आनुवाकम् । नारम् । पिनष्टीति पेषिका । वर्णानां पेषिका वर्णकपेषिका । अकयाजकादिभिरित्यनेन समासे । वार्णकपेषिकम् । अन्ये तु वर्णक पेषिकेति च्छिन्दन्ति । इति महिष्यादिः ॥

**शक्तियष्ट्यष्टमा दण्ड ईषेष्टी कम्पनाम्भसी ॥ ३८४ ॥**

शक्त्यादेष्टीकण् इत्यनेन शक्त्यादेरस्य प्रहरणमित्यर्थे टीकण् भवति । शक्तिः प्रहरणमस्य शाक्तीकः । शाक्तीकी ।

स्खलन्ती न क्वचित्तैक्ष्ण्यादभ्यग्रफलशालिनी ।
अमोघि शक्तिः शाक्तीकैर्लोहजा न शरीरजा ॥

याष्टीकः । यथा—धनञ्जयस्य—

याष्टीकं ते स्मरव्यग्राः खेचरस्त्रीवृता वराः ।
याष्टीकं ते स्मर व्यग्रास्तं प्रतीच्छन्ति नाभितः ॥

अष्टमः प्रहरणमस्य आष्टमीकः। अयं जिनेन्द्रबुद्धिमतेन । दाण्डीकः । ईषा प्रहरणमस्य ऐषीकः । इष्टिः प्रहरणमस्य ऐष्टीकः । कम्पनं प्रहरणमस्य

काम्पनीकः । अम्भः प्रहरणमस्य आम्भसीकः । अपरेषां मते ठञेव । दाण्डिकः । ऐष्टिकः । काम्पनिकः । आम्भसिकः ॥ ३८४ ॥ इति शक्त्यादिः ॥

छत्त्रं चुराप्ररोहौ च विशिकाविशिखे तथा ।
अनृतं स्यादुदस्थानं पुरोडा कृषिसंयुता ॥ ३८५ ॥

छत्त्रादेर्ण इत्यनेन तदस्य शीलमित्यर्थे णो भवति । छादनादावरणाच्छत्त्रम् । गुरुकार्येष्ववहितस्तच्छिद्रावरणप्रवृत्तः । छत्त्रशीलः शिष्यः । छात्त्रः । अन्ये त्वाहुः । छत्त्रशीलः छात्त्रः । छत्त्रस्येव शीलमस्येत्यर्थः । छत्त्रं यथा धार्यमाणं वातातपवर्षत्राणाय भवति पुरुषस्य । एवमुपाध्यायो धार्यमाणः शिष्यस्य रागद्वेषक्रोधमोहत्राणाय भवति । स शिष्यं धर्मं ब्रूते । एवमसावुपाध्यायश्छत्त्रमिव छत्त्रम् । तच्छीलानुकारिशीलः शिष्यश्छात्र इत्युच्यते । गुरुशील इत्यर्थः । चोरणं चुरा भिदादिः । चुराशीलश्चौरः । प्रारोहः । विशिका परहृदयानुप्रवेशः । वैशिकः(१)। बहुक्षमतया विशिखेव विशिखा । वैशिखः । अनृतभाषणम् अनृतम् । आनृतः । उदके स्थानम् उदस्थानम् उदवासः । औदस्थानम् । पुरो दीयत इति पुरोडा । अतएव वचनादनुपसर्गादप्यङ् । पौरोडः ॥ पुरोद इत्यन्ये । कर्षणं कृषिः । कार्षः ॥ ३८५ ॥

भक्षाशिक्षाविश्वधाकर्मभिक्षा–विक्षाचुक्षामन्द्रसत्यास्तितिक्षा ।
स्थोपस्थानं वा तपः स्याद्बुभुक्षा छत्त्रादिर्विज्ञायतामेष दक्षैः ३८६

भक्ष अदने—भक्षणं भक्षा । भाक्षः । शैक्षः । विश्वं दधाति विश्वधा क्षुधा । वैश्वधः । कार्मः । भैक्षः । विक्षचुक्षी इत्यपरिपठितौ धातू । विक्षणं विक्षा । वैक्षी । चुक्षणं चुक्षा शौचम् । चौक्षः । चोक्षा वस्त्रादिवेषपङ्क्तिरिति वामनः । मन्द्रशीलः मान्द्रः । सत्यभाषणं सत्यम् । तच्छीलमस्य सात्यः । तैतिक्षः । स्थाशब्दोऽत्र पठ्यते । स प्रादिपूर्वो गृह्यते । आतो गोऽन्तः । प्रादेरित्यङ्प्रत्यये । आस्था नियतविषये प्रत्याशा । संस्था । व्यवस्था । आस्थः । सांस्थ इत्यादि । औपस्थानः । तापसः ॥ बौभुक्षः । शकटाङ्गजस्तु चौरी तापसीत्यादौ ङीविधानार्थं छत्त्रादेरञ् इत्यनेनाञमाह । अस्मन्मते तु गौरादिपाठाश्रयणाद् ङीप्रत्ययः सिद्धः ॥ ३८६ ॥ इति छत्त्रादिः ॥

---

(१) परहृदयप्रवेशरूपा विशिखक्रियापि विशीखेत्युच्यते । वैशिखः । वैशिकोऽपि अस्यैव पर्यायः । इत्यधिकम् ।

किशरस्तगरोशीरपर्णीहरिद्रुगुग्गुलु ।
हरिद्रानलदावेतौ स्थगलो नरदस्तथा ॥ ३८७ ॥

किसरादेष्ठङ् इत्यनेन किशरादेरस्य पण्यमित्यर्थे ठङ् भवति । किशरादयो गन्धविशेषवचनाः ॥ किशरं पण्यमस्य किशरिकः । किशरिकी । तगरिकः । तगरिकी । उशीरिकः । उशीरिकी । पर्णिकः । पर्णिकी । हरिद्रुकः । हरिद्रुपर्णीत्यन्ये । गुग्गुलुकः । हरिद्रिकः । नलदिकः । स्थगलिकः । स्थगर इति शकटाङ्गजः ॥ नरदिकः ॥३८७॥ इति किशरादिः ॥

इति श्रीगोविन्दसूरिशिष्यपण्डितश्रीवर्धमानविरचितायां स्वोपज्ञगणरत्नमहोदधिवृत्तौ करोत्याहृतगच्छतिप्राप्तभवतिकार्यंदीयतेप्रयोजनचरत्युस्पातसंयोगहरतिवहत्यावहतिपृच्छतिगच्छत्याहतेनचरतिजीवतिहरतिनिर्वृत्तवसतिधर्म्यप्रहरणशीलपण्यलक्षणार्थविहिततद्धितप्रत्ययगणनिर्णयो नाम षष्ठोऽध्यायः समाप्तः ॥

# अथ सप्तमोऽध्यायः ॥

तारकाकुसुमपल्लववेगाः पुष्पगौरवविचारपिपासाः ।
मञ्जरीस्तबकवर्णकतन्द्रा दुःखशास्त्रसुखमूत्रतरङ्गाः ॥३८८॥

तदस्य संजातं तारकादेरित्यनेनैतस्मात् तदस्य संजातमित्यर्थे इतो भवति ॥ तारकाः संजाता अस्य तारकितं नभः । तारकशब्दोऽप्यत्र ग्राह्यः ॥ कुसुमितस्तरुः । पल्लवितः ॥ वेगितः ॥ वेगवान् पुष्पितः ॥ गौरवितः ॥ विचारितः ॥ पिपासितः ॥ मञ्जरितः ॥ स्तबकितः ॥ वर्णकितः ॥ कर्णकितो(१)वेणुरित्यप्यन्यः॥ तन्द्रितः ॥ दुःखितः ॥ शास्त्रितः ॥ सुखितः ॥ मूत्रितः ॥ तरङ्गितः ॥ ३८८ ॥

निद्रामुद्रापुलकतिलकाश्चन्द्रकाश्चान्धकारा—
गर्वोत्कण्ठामुकुलमुकुरद्रोहदोहा बुभुक्षा ।
हर्षोत्कर्षव्रणकुवलयव्याधिगर्धाः पुरीषं—
क्षुत्सीमन्तज्वरभरगरा रागरोमाश्चरोगाः ॥ ३८९ ॥

निद्रितः । मुद्रितः—साधुवादः ॥ पुलकिता तन्वी तवेयं तनुः ॥ तिलकितः ॥ चन्द्रकितः ॥ ददर्श काले दिवमभ्रितामिव ॥

(१) कर्ण इव कर्णको दारुविकारः कर्णकितः स्तम्भ इत्यधिकम् ।

अन्धकारितः ॥ गर्वितः । उत्कण्ठितः ॥ मुकुलितः ॥ मुकुर आदर्शो मुकुलं च ॥ मुकुरितः । द्रोहितः । दोहितः । बुभुक्षितः ॥ हर्षितः ॥ उत्कर्षितः ॥ व्रणितः ॥ कुवलयितः । व्याधितः ॥ गर्धितः ॥ पुरीषितः ॥ क्षुधितः ॥ सीमन्तितः ॥ ज्वरितः ॥ भरितः ॥ गरितः ॥ रागितः ॥ रोमाञ्चितः ॥ रोगितः ॥३८९ ॥

पण्डा कन्दलकज्जलं किसलयं तृट्कण्टकं कोरकः—
कल्लोलस्थपुटं कुतूहलफलं चाङ्गारकः कञ्चुकः ।
शृङ्गाराङ्कुरशैवलानि बकुलश्वभ्रप्रचारास्तथा—
वर्माशलकलङ्ककर्दमयुतं श्रद्धा ऋजीषं मतम् ॥३९०॥

पण्डा बुद्धिः ॥ पण्डितः ॥ कन्दलितः ॥ कज्जलं मषी । कज्जलितः । किसलयितः ॥ तृषितः ॥ कण्टकितः । कोरकितः ॥ कल्लोलितः ॥ स्थपुटितः ॥ कुतूहलितः ॥ फलितः । अङ्गारकितः पलाशः(१) अथवा—

अङ्गारितमिवोत्पाते वारिराशेरिवोदकम् ॥

कञ्चुकितः ॥ शृङ्गारितः ॥ अङ्कुरितः ॥ शैवलितः । ब मुकुकुलमूलं । बकुलितस्तरुः । अयं शकटाङ्गजमतेन ॥ श्वानो भ्रमन्त्यत्र श्वभ्रं गर्त्तः । श्वभ्रित भूतलम् ॥ प्रचारितः । वर्मितः । आरालमिति मूत्रपुरीषयोः(२) सञ्ज्ञा । आरालितः ॥ कलङ्कितः ॥ कर्दमितः ॥ श्रद्धितः ॥ ऋजीषम्=उपहतं मलं पिष्टपचनं च । ऋजीषितः । ऋचीषमित्यन्यः ॥ ३९० ॥

सञ्ज्ञाकुड्मलमूर्छानिष्क्रमणाङ्गारहस्तकोच्चाराः ।
प्रतिविम्बविघ्नतन्त्रप्रत्ययदीक्षा भवेद्गर्जा ॥३९१॥

संज्ञितः । कुड्मलितः । मूर्छितः । निष्क्रमणितः ॥ अङ्गारितः ॥ हस्तकितः(३) ॥ उच्चारितः ॥ प्रतिविम्बितः ॥ विघ्नितः ॥ तन्त्रं सञ्जातमस्य तन्त्रितः । तन्द्रा—आलस्यमिति द्रमिडाः पठन्ति । प्रत्यय आश्वासः । प्रत्ययितः—आप्तः ।

---

(१) अङ्गारकशब्दोऽङ्गारसदृशेषु पलाशकुसुमेषु लक्षणया वर्त्तते ।

(२) पुंमूत्रपुरीषयोः । आरालमिति मूत्रपुरीषयोः सञ्ज्ञेति वर्द्धमानः । अरालः कुटिले सर्जरसे समदन्तिनीति मोदनीकारः ॥

(३) हस्तको हस्तावलम्बः ।

यथा सुरारेः । ब्रवीति च प्रत्ययितो महर्षिः । दीक्षितः ॥ गर्जितः—मत्तो गजः ॥ ननु क्तप्रत्यये भुजेः पिबतेश्च सनन्तस्य विहिते सिद्धं बुभुक्षितः पिपासित इति । तथा पुष्पविकसन इति दैवादिकधातोः पुष्पित इति ॥ सुखितो दुःखित इति चुरादिणयन्ताद्धातोः । नैवम् । अर्थवैषम्यात् । तथा हि । भोक्तुमिष्टो बुभुक्षित ओदनो नरेण पातुमिष्टं पिपासितं क्षीरमिति कर्मणि क्तप्रत्यये बुभुक्षितादिशब्द ओदनादौ कर्मणि वर्त्तते न तु नरि कर्त्तरि । इतप्रत्ययान्तस्तु भोक्तृपुरुषवृत्तिः । पुष्पितशब्दोऽपि क्तान्तः पुष्पिता कलिका । पुष्पितं कमलमिति वा विकासक्रियोपेतेऽर्थे प्रतीत इतप्रत्ययान्तस्तु प्रसवोपेते चम्पकादौ वर्त्तते ॥ सुखितदुःखितशब्दयोस्त्वपेक्षितापरकर्त्तृव्यापारः सुखादिसंवित्तिमांश्चैत्रादिः प्रतीयते । इतप्रत्यये त्वनपेक्षित परव्यापारः सुखाद्यनुभवयुक्त इति ततो युक्तोऽमीषामत्र पाठः । एवमन्येषामपि फलं दर्शनीयम् ॥ आकृतिगणोऽयम् । तेन शिक्षाजिगीषाछिद्रारोहप्रभृतयो द्रष्टव्याः ॥ ३९१ ॥

इति तारकादिः ॥

पृथ्वाशुप्रियपाण्डुचण्डपटवः खण्डूरुखण्डाणवः--
साधुः स्वादुमृदू महल्लघुतनुक्षिप्राणि वृद्धो गुरुः ।
वक्राकिञ्चनचारुपाकबहवो वत्सर्जुतृप्राणि च--
क्षुद्रः कालवृषौ महिश्च बहुलं ह्रस्वोऽथ होडः कडुः ॥३९२॥

पृथ्वादेरिमन् इत्यनेन तस्य भाव इत्यर्थे इमन् वा भवति । पक्षे यथा प्राप्तम् । पृथोर्भावः प्रथिमा । पार्थवम् ॥ पृथुत्वम् । पृथुता ॥ आशिमा ॥ प्रेमा ॥ अयमिमन्नन्तः । पुंलिङ्गस्सर्वत्र व्याकरणग्रन्थे पटिमालघिमेत्युदाह्रियमाणो दृश्यते । भर्त्रीश्वरेणापि वारणार्थौनामित्यत्र पुंलिङ्ग एव प्रयुक्तः। सत्त्वेन परिगृहीतः प्रेमा संनिविशते । लिङ्गकारिकास्वप्ययं नित्यं पुंलिङ्ग एव । ततश्चार्धर्चाद्यन्तर्भावप्रसारिकापि कर्त्तुं न युज्यते ॥

भवतोऽपजनोपपदे अङ्गपदे पुंसि नित्यमिमनिच्च ॥

अपशब्दजनशब्दोपपदे यथासंख्यमङ्गपदे नित्यं पुंसि भवतः । अयमपाङ्गः । अयं जनपदः । इमनिच्च नित्यं पुंसीति वर्त्तते । पटिमालघिमेत्ययमर्थोऽस्याः । एवं य एते काव्यनाटकप्रयोगाः ।
प्रेमकारयति वा निरन्तरम् । प्रेम पश्यति भयान्यपदेऽपि ।

प्रेम मानमवधूय वधूः स्वाः । सामर्थ्यं च तवार्जुनस्य च समं दुर्योधने प्रेम च ॥

इत्येकवाक्यतया नपुंसकेन दृश्यन्ते । तन्वियं गतिः । स्नेहपर्याय औणादिको मनिन् प्रत्ययान्तः प्रातिपदिको वा व्युत्पन्न. प्रेमन् शब्दोऽस्तीति । पाण्डिमा ॥ अयं श्रीभोजमतेन ॥ चण्डिमा ॥ पटिमा ॥ खण्डोभावः खण्डिमा । दण्ड इत्यन्यः ॥ अयं शकटाङ्गजमतेन ॥ वरिमा । उरुत्वम् । खण्डस्य भावः खण्डिमा ॥ अणिमा । साधिमा । स्वादिमा । म्रदिमा । महिमा । महत्त्वम् । महत्ता । लघिमा । तनिमा । क्षेपिमा । क्षिप्रत्वम् । वर्षिमा । वृद्धत्वम् । गरिमा । गुरुत्वम् । वक्रिमा । अकिञ्चनिमा । आकिञ्चन्यमिति ब्राह्मणादित्वात् ॥ चारिमा । चारुत्वम् । अयं श्रीभोजमतेन । पाकिमा ॥ वयोऽर्थलक्षणेऽणि पाकम् ॥ बहोर्भावः । भूमा । यथा—परं भूमानमातन्वते ॥ बाहवम् ॥ वत्सिमा ॥ वात्सम् ॥ ऋजिमा ॥ आर्जवम् ॥ तृप्रिमा ॥ अयं श्रीभोजमतेन ॥ क्षोदिमा ॥ क्षुद्रत्वम् ॥ कालिमा ॥ कालत्वम् ॥ अयं श्रीभोजमतेन ॥ वृषिमा ॥ महिमा ॥ महित्वम् । अयं शकटाङ्गजमतेन ॥ बहिमा ॥ बाहुल्यम् ब्राह्मणादिपाठात् ष्यञ् । मनोज्ञादिपाठात् बाहुलकम् ॥ ह्रसिमा । ह्रस्वत्वम् । होडिमा(१)॥ वयोऽर्थलक्षणेऽणि प्राप्ते॥ ब्राह्मणादित्वात् । हौड्यम् । कडुर्मन्तुः । कडिमा । कडुत्वम् ॥ कार्डवम् ॥३९२॥ इति पृथ्वादिः ॥

दृढपरिवृढौ मूकश्चुक्रो विशारदसम्मती--
बधिरमधुरौ बालो मूलं कलोजडपण्डितौ ।
लवणतरुणावुष्णः शीतः स्थिराम्लकृशावृढो--
विमतिविमनोमन्दा मूर्खौ वियातभृशं तथा ॥३९३॥

वर्णदृढादेर्ष्यञ्चेत्यनेन वर्णवाचिनो दृढादेश्चास्य भावः इत्यर्थेष्यञ्भवति । इमन् च वा शौक्ल्यम् । दृढस्य भावः दार्ढ्यम् । द्रढिमा । दृढता । दृढत्वम् । परिवृढस्य भावः पारिवृढ्यम् ॥ परिव्रढिमा ॥ मौक्यम् । मूकिमा । चुक्रम् अम्लम् (२) ॥ चौक्र्यम् । चुक्रिमा ॥ वैशारद्यम् ॥ शारदशब्दः प्रत्यग्रवाची । यथा—रज्जुशारदमुदकम् । दृपच्छारदाः सक्तवः । सद्यो हि रज्ज्वोद्धृतमुदकं प्रत्यग्रमनुपहत रज्जुशारदमुच्यते । सद्यश्च दृषदा पिष्टाः सक्तवो दृपच्छारदाः ।

(१) होडबालशब्दौ समानार्थौ । (२) चुक्रोऽम्लवेतसः ।

तत्रायं गुणप्रधानः । शारदं प्रत्यग्रत्वम् । अभिनवत्वम् । तद्विगतमस्य विशारदः प्रवीणः । प्रवीणो लक्षणया । तथा हि—यो यत्र नवः स तत्र मूढः । यस्तु पुराणः स सर्वं जानाति ॥ अथवा—व्युत्पत्तिशून्यः प्रवीणवाची विशारदशब्दः । सङ्गता मतिर्यस्यासौ सम्मतिः । तस्य साम्मत्यम् । सम्मतिमा । शकटाङ्गजमते तु सांमतमित्यपि । स हि लघ्वादेरिक इत्यस्य सूत्रस्यैवंविधसर्थमाह । तथा हि—लघुरादिः समीपभूतो यस्यैकस्तदन्तात्तस्य भावे कृते वाण्प्रत्ययः । वासनादीनामप्येतत्सम्मतम् ॥ केचिल्लघ्वादेरिति प्रकृतेर्विशेषणमिच्छन्ति । काशानवम् आरातमित्यप्युदाहरन्ति । सांमतमिति च नेच्छन्ति ॥ बाधिर्यम् ॥ माधुर्यम् ॥ बाल्यम् । मौल्यम् ॥ काल्यम् ॥ जाड्यम् ॥ पाण्डित्यम् ॥ लावण्यम् ॥ लवणिमा ॥ तारुण्यम् ॥ औष्ण्यम् । शैत्यम् ॥ स्थैर्य्यम् । आम्ल्यम् ॥ अम्लिमा ॥ कार्श्यम् ॥ कृशिमा ॥ वार्ढ्यम् ॥ व्रढिमा ॥ रत्वविधौ परिवृढशब्दे परिरतन्त्रः । अन्ये तु परिशब्दं विना वृढशब्दं पठन्ति । अयं शकटाङ्गजवामनमतेन ॥ विविधा मतिर्यस्यासौ विमतिः ॥ वैमत्यम् ॥ वैमतम् ॥ विविधं मनो यस्यासौ विमनाः । वैमनस्यम् ॥ मान्द्यम् ॥ मन्दिमा ॥ मौर्ख्यम् ॥ वैयात्यम् (१)। भार्श्यम् ॥ भ्रशिमा ॥ ३९३ ॥

विलातः स्यात्तथा शुक्रदीर्घसम्मनसो मताः ।
ताम्रमाम्रं तथा तृष्णां प्राह श्रीशाकटायनः ॥३९४॥

विलातो विलासी वयोवचनश्च ॥ वैलात्यम् । विलातिमा(२) ॥ वयोर्थलक्षणेऽणि । वैलातम् ॥ शुक्रं वीर्य्यम् । शौक्रम् । शुक्रिमा ॥ दैर्घ्यम् ॥ द्राघिमा । वामनादयस्तु दीर्घमन्दबालशब्दान् पृथ्वादिगणे पठन्ति ॥ सामनस्यम् ॥ सुमनिमा ॥ ताम्रं शुल्वम् । ताम्रम् । ताम्रिमा ॥ आम्रम् । आम्रिमा । अयं वामनमतेनापि ॥ तार्ष्ण्यम् । तृष्णिमा ॥३९४॥ इति दृढादिः ॥

ब्राह्मणो वाडबो धूर्तः कुशलालसबालिशाः ।
समसध्यपुरोभ्यः स्थः कविर्नश्चार्हतो मतः ॥३९५॥

ब्राह्मणादिपत्यन्तगुणवचनात्कर्मणि वेत्यनेन ब्राह्मणादेः पत्यन्ताद्गुणवचनाच्चास्य भावः कर्मवेत्यर्थे ष्यञ् वा भवति। पक्षे यथा प्राप्तम् च । ब्राह्मणस्य

---

(१) विरुद्धं यातं चेष्टितमस्येति वियात उद्धतः । (२) विलातशब्दः प्रथमवयोवाची । विलासिपर्याय इति केचित् ।

भावः कर्म वा ब्राह्मण्यम् ॥ षाड्गुण्यम् ॥ धैर्यम् ॥ कौशल्यम् । न विद्यते लषः क्रीडनं यस्य सोऽलषः । न लषोऽलष इति वा । आलस्यम् । वालिश्यम् ॥ सामर्थ्यम् ॥ माध्यस्थ्यम् ॥ इष्टेऽप्ययत्नस्थितेर्धै ॥ पौरःस्थ्यम् ॥ काव्यम् ॥ आर्हन्त्यम् ॥ आर्हन्ती ॥ ३९५ ।

निपुणचपलचौरास्तत्परेदंपरौस्त:—
सुहितपिशुनदीना माणवोऽथ प्रकामम् ।
उचितगडुलशीला निष्कुलो दुष्कुलः स्यात्—
तरतमविषमस्थावेकभावान्यभावौ ॥ ३९६ ॥

नैपुण्यम् ॥ चापल्यम् ॥ चौर्य्यम् ॥ तात्पर्य्यम् ॥ ऐदंपर्यम् ॥

यथा भवभूतेः—इदं त्वैदंपर्यं यदुत नृपतेर्नर्मसचिवः ।
सुतादानान्मित्रं भवतु स भवान्नन्दन इति ॥

सौहित्यम् ॥ पैशुन्यम् ॥ दैन्यम् ॥ माणव्यम् ॥ प्रकाममित्यस्य भावः प्राकाम्यम् ॥ प्राकाम्यं ते विभूतिषु ॥ औचित्यम् । औचिती ॥ गडुरस्यास्तीति गडुलः ॥ गाडुल्यम् ॥ शैल्यम् । शैली ॥ नैष्कुल्यम् ॥ दौष्कुल्यम् । तरतमेत्यस्य भावः तारतम्यम् । द्विबह्वपेक्षः प्रकर्षः ॥ वैषमस्थ्यम् ॥ एको भावो यस्य तस्य भाव ऐकभाव्यम् ॥ आन्यभाव्यम् ॥ ३९६ ॥

विदग्धदायादयथापुरद्विभावा यथाकामयथातथौ च ॥
विराधयः कापुरुषस्वभावाभीक्ष्णं समग्राधिपतित्रिभावाः ॥ ३९७ ॥

वैदग्धम् । वैदग्धी । दायमादत्ते दायादः । दायाद्यम् । यथापुरं पुरातनमित्यर्थः । यथापुरमित्यस्य भावः याथापुर्य्यम् । द्वैभाव्यम् । यथाकाममित्यस्य भावः याथाकाम्यम् । याथाकामी । यथातथ सत्यम् । याथातथ्यम् । यथातथेत्यन्यः । विपूर्वाद्राधयतेरचि णेर्लुग् न भवति गणपाठात् । जनपदसमाननामा क्षत्रियः ॥ तस्मादपत्यार्थे विहितस्याञः कम्बोजादित्वात् श्लुकि । वैराधय्यम् । एवम् उपराधयापिराधयाराधयशब्देषु द्रष्टव्यम् । कापुरुष्यम् । स्वाभाव्यम् ॥ अभीक्ष्णमित्यस्य भावः आभीक्ष्ण्यम् । सामग्र्यम् । सामग्री । आधिपत्यम् । त्रैभाव्यम् ॥ ३९७ ॥

ज्येष्ठश्रेष्ठप्रकटनिकटा विश्वरूपाभिरूपौ-
साक्षी तत्स्थश्चतुरपरमस्थैतिहाः शीर्षघाती ।
ऋत्विक् सम्राड् गणपतिमहाराजसंवादिदूताः-
सात्मस्तेनौ सुकरसदृशौ मानुषाराधयौ च ॥३९८॥

ज्यैष्ठ्यम् । श्रैष्ठ्यम् । प्राकट्यम् । नैकट्यम् । वैश्वरूप्यम् । आभिरूप्यम् । साक्ष्यम् । तस्मिंस्तिष्ठतीति तत्स्थः । तात्स्थ्यम् । चातुर्य्यम् । चातुरी । पारमस्थ्यम् । ऐतिह्यम् । शैर्षघात्यम् । आर्त्विज्यम् । साम्राज्यम् । गाणपत्यम् । माहाराज्यम् । सांवाद्यम् । दौत्यम् । लिङ्गग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति न्यायाद्दूतीशब्दादपि भवति । दूतीनां कर्म दौत्यम् । आगतप्रियकथैरपि दौत्यम् । वणिक्सखिदूताद्य इत्यनेन ये दूत्यम् । दूतता । दूतत्वम् ॥ सहात्मना वर्त्तते सात्म शरीरम् । तस्य कर्म भावो वा । सात्म्यम् । सात्मी । स्तेनश्चौरः । तस्य भावः कर्म वा स्तैन्यम् । आगमिकोऽयं शब्दः । स्तैन्याशयेनाभिमतं यदेवेति किमस्य लक्षणचिन्तया लोके । स्तेयमित्येव भवतीति कश्चित्स्व चेताः ॥ सौकर्य्यम् ॥ सादृश्यम् ॥ मानुष्यम् ॥ आराधय्यम् ॥ ३९८ ॥

पूर्वापरं दुष्पुरुषो विशायो विशालसंवेशिविघातिनश्च ।
स्वाराजसंभाषिविशस्तयोऽपीश्वराभिजातौ परिमण्डलश्च ३९९

पौर्वापर्य्यम् ॥ दौष्पुरुष्यम् ॥ वैशाय्यम् ॥ वैशाल्यम् ॥ सांवेश्यम् ॥ वैघात्यम् ॥ स्वाराज्यम् ॥ सांभाष्यम् ॥ वैशस्त्यम् ॥ विशायविशस्तिभ्यां त्वतलौ त्वनभिधानान्न भवतः ॥ ऐश्वर्यम् । आभिजात्यम् ॥ पारिमाण्डल्यम् ॥ ३९९ ॥

परिशेषराजपुरुषौ युगपत्प्रतिकूलनास्तिकपुनःपुनरः ।
प्रतिभूसुराजबहुभाषिपरंपरमुत्तराधरसधर्मवणिक् ॥४००॥

पारिशेष्यम् ॥ राजपौरुष्यम् ॥ यौगपद्यम् ॥ प्रातिकूल्यम् ॥ नास्तिक्यम् ॥ पौनःपुन्यम् । प्रातिभाव्यम् । सुराज्ञो भावः कर्म वा सौराज्यम् ॥ बाहुभाष्यम् ॥ पारंपर्यम् ॥ औत्तराधर्य्यम् ॥ साधर्म्यम् । वणिजो भावः कर्म वा । वाणिज्यम् ॥ अयं शकटाङ्गजमतेन ॥ वणिज्या वणिज्यमिति वामनः ॥ प्रमिताक्षरा सजयुगलावथ सौ ॥ ४०० ॥

जनराजसमाचारपरिख्यातोपराधय: ।
युवराजयथात्मानुपूर्वहोडनिघातिन: ॥ ४०१ ॥

जानराज्यम् ॥ सामाचार्य्यम् ॥ सामाचारी ॥ पारिख्यात्यम् ॥ पारिख्याती ॥ औपराधय्यम् ॥ अपिराधय इत्यपि । अपि मृशार्थे ॥ यौवराज्यम् ॥ याथात्म्यम् ॥ आनुपूर्व्यम् । आनुपूर्वी ॥ हौड्यम् ॥ नैघात्यम् ॥ ४०१ ॥

पुरोहितग्रामिकचर्मिकास्तिका:—
स्वस्थोऽथ शौण्डीरविधर्मकर्मिका: ।
बालानुकूलं शिलिकोऽथ सूचिक:—
संरक्षसारथ्यधिराजदण्डका: ॥ ४०२ ॥

पौरोहित्यम् ॥ ग्रामोऽस्यास्तीति ग्रामिक: । ग्रामिक्यम् ॥ चर्मास्यास्तीति चर्मिक: । चार्मिक्यम् ॥ आस्तिक्यम् । स्वस्मिन्नात्मनि तिष्ठति स्वस्थ: । तस्य स्वास्थ्यम् ॥ शौण्डीरो गर्ववान् । शौण्डीर्यम् ॥ वैधर्म्यम् ॥ कर्मास्तित्वात् कर्मिक: । कार्मिक्यम् ॥ बाल्यम् । यथा—

अवाप बाल्योचितनीलकण्ठपिच्छावचूलाकलनामिवोर: ।

आनुकूल्यम् । शिलम्—उञ्छम् । तदस्तित्वात् । शिलिक उञ्छवृत्तिक: ॥ शैलिक्यम् ॥ सौचिक्यम् ॥ सांरक्ष्यम् ॥ सारथ्यम् ॥ आधिराज्यम् ॥ दण्डास्तित्वाद् दण्डिक: ॥ दाण्डिक्यम् ॥ ४०२ ॥

पर्षिकवर्मिकचौक्षोदासीना: खण्डिकस्तथाऽञ्जनिक: ।
प्राविकाऽञ्जलिकच्छत्रिकसूचकविश्वस्तविफलाश्च ॥४०३॥

पार्षिक्यम् (१) । परिषदिक इति वामन: ॥ अयं भोजमतेन ॥ वर्मास्यास्तीति वर्मिक: । वार्मिक्यम् (२) ॥ चुक्षाशीलश्चौक्ष: ॥ चौक्ष्यम् ॥ औदासीन्यम् ॥ खण्डोऽस्यास्तीति खण्डिक: । खाण्डिक्यम् ॥ अञ्जनमस्यास्तीति अञ्जनिक: । आञ्जनिक्यम् ॥ अञ्जनक (३) इत्यपि शकटाङ्गज: ॥ प्राविक्यम् ॥ अयं भोज-

---

(१) पर्ष: सेकोऽस्यास्तीति पर्षी अभिषिक्त: स एव पर्षिक इत्यधिकम् ।
(२) धर्मोऽस्यास्तीति धर्मिक: । धार्मिक्यमिति पा० ।
(३) जनादागतं जानं न जानमजानं तद्वान् अजानिक: । अञ्जनिक: । अञ्जनवान् । इत्यधि० ।

मतेन ॥ अञ्जलिरस्यास्तीति अञ्जुलिकः । आञ्जुलिक्यम् ॥ छात्रिक्यम् ॥ सूचयतीति सूचकः । सौचक्यम् ॥ सूतक (१) इत्यन्यः ॥ वैश्वस्त्यम् ॥ विगतं फलमस्य विफलः । वैफल्यम् ॥ ४०३ ॥

**क्षेत्रज्ञोऽथ यथातथपिशुनाविदूरा यथापुरनृशंसौ ।**
**कुशलेश्वरनिपुणा अपि नञ्पूर्वाः सूरिभिः कथिताः ॥४०४॥**

अक्षेत्रज्ञस्य भावः कर्म वा । आक्षेत्रज्ञम् ॥ नञः क्षेत्रज्ञेश्वरकुशलशुचिनिपुणानामित्यनेन नित्यमुत्तरस्यारैच् पूर्वपदस्य वा ॥ आयथातथ्यम् ॥ यथा—गुणानामायथातथ्यात् । अयाथातथ्यम् ॥ यथातथायथापुरयोः पर्यायेणेत्यनेनारैच् । अन्येषां मतमेतत् ॥ आपिशुन्यम् ॥ आविदूर्य्यम् ॥ आयथापुर्य्यम् । अयथापुर्य्यम् ॥ आनृशंस्यम् ॥ आकौशल्यम् । अकौशल्यम् ॥ आनैश्वर्य्यम् ॥ अनैश्वर्य्यम् ॥ आनैपुण्यम् । अनैपुण्यम् ॥ भाष्यकारस्य त्वक्षेत्रज्ञानीश्वरशब्दावेव संमतौ नञस्तत्पुरुषादित्यनेनैतेषां त्वतलोरेव प्राप्तयोः पाठः । शकटाङ्गजस्तु नञ्पूर्वाणां संवादिन्संवेशिन्बहुभाषिन्शीर्षघातिन्समस्थविषमस्थपुरःस्थपरमस्थमध्यस्थदुष्पुरुषकापुरुषविशालशब्दानामेतेषां ष्यणमाह ॥ ब्राह्मणबालिशशब्दौ प्राणिजातिवयोऽर्थौ ताभ्यामणबाधनार्थम् ॥ माणववाडवशब्दौ चरणवचनौ ताभ्यामकञ्बाधनार्थम् । तटस्थसमस्थविषमस्थपरमस्थमध्यस्थशब्दानां नञ्समासेऽपि पाठः ॥ विराधयाराधयोपराधयापिराधयशब्दानामपत्यलक्षणस्याकणो बाधनार्थः । गणपत्यधिपत्योः पाठः परमसिद्ध्या । गहुलदायादविशस्तिविशंपुरशब्देभ्यस्त्वनलौ न भवत इति वृद्धाः । शकटाङ्गजस्तु बालिशसंवादिन्बहुभाषिन्शब्दानामपि नेच्छति । भोजः पुनर्विशस्तिविशाथवर्जितेभ्यः सर्वेभ्योऽपि त्वनलाविच्छति ॥ आकृतिगणोऽयम् । तेन यथा दर्शनमन्येऽपि द्रष्टव्याः ॥ ४०४ ॥ इति ब्राह्मणादिः(२) ॥

---

(१) सूत्तिकायाः सौतिक्यमिति पा० । (२) गहुलादीनामपि पाठं केचिदिच्छन्ति । अन्ये तु बुधादीनामष्टानामेव [ बुध । चतुर । संगत । लवण । वंड । कत । रस । लस ] प्रतिषेधमिच्छन्ति । एषामेव विकल्पमपरे । अथ अणन्तानामेषां नञ्समासो भवति वा न वा । बुधस्य भावः कर्म वा बौध्यम् । न बौध्यमबौध्यमिति । भवतीत्येके । न भवतीत्यन्ये । पृथ्वादेरिमन्वा । वर्णदृढादिभ्यष्यञ्चवा । पतिराजान्तगुणाङ्ग राजिभ्यः कर्मणिचेत्यधिकम् ।

युवमिथुनकुलीनभ्रातृसुस्त्रीप्रशास्तृ—
स्थविरचपलदुःस्त्रीदुष्ठवो होतृसुष्ठु ।
कुतुककितवकुस्त्रीकर्त्तृसब्रह्मचारि—
श्रमणनिपुणबन्धध्वर्यवः कन्दुकश्च ॥ ४०५ ॥

प्राणिजातिवयोऽर्थहायनान्तयुवादिलध्वादीकोऽण् इत्यनेन युवादेस्तस्य भावः कर्मेवेत्यर्थेऽण् भवति। पक्षे यथाप्राप्तम्॥ यूनो भावः कर्म वा। यौवनम्। युवत्वम्। युवता। यौवनिकेत्यपि मनोज्ञादिपाठात्॥ एवं युवतिशब्दस्यापि लिङ्गग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति न्यायात्॥ मैथुनम्। कौलीनम्॥ भ्रात्रम्॥ सौस्त्रम्। प्रशास्ता ऋत्विक्। प्राशास्त्रम्॥ स्थविर इव स्थविरः॥ स्थाविरम्। स्थाविर्यमित्यपि ब्राह्मणादित्वात्॥ चापलम्॥ केचिन्नञ्पूर्वस्याप्यस्य पाठं मन्यन्ते। तन्मत आचापलम्। अचापलम्॥ एवं क्षेत्रज्ञकुशलनिपुणानामपि॥ अस्यघाति मुनिचापलाख्यया। निन्दिता स्त्री दुःस्त्रीः। दौःस्त्रम्॥ दुष्टु निन्दितम् दौष्ठवम्। होता ऋत्विक्। हौत्रम्। होतुरित्यपि भोजः। हौतवम्॥ सुष्ठु शोभनम्। सौष्ठवम्॥ कुतुकम् कुतूहलम्॥ विवाहवाचीत्यन्ये। कौतुकम्॥ कैतवम्॥ कुत्सिता स्त्री कुस्त्री। कौस्त्रम्॥ कार्त्रम्। अयं भोजमतेन॥ समानो ब्रह्मचारी सब्रह्मचारी। साब्रह्मचारम्। ब्रह्मादीनामित्यनेनान्त्याजादिलुकि॥ सुब्रह्मचारिन्निति वामनः॥ तन्मते सौब्रह्मचारिणम्॥ ब्रह्मचारिन्निति चन्द्रः। तन्मते ब्राह्मचारिणम्। अनपत्ये चेति प्रतिषेधात् इनोऽनोऽणादाविति नान्त्याजादिलोपः॥ श्राम्यतीति श्रमणः। श्रामणम्॥ कथं श्रामण्यं प्रतिपेदिर इति प्रयोगो ब्राह्मणादित्वाद्भवति॥ शृणोति तपोपदेशं श्रवण इति वामनादयः॥ नैपुणम्॥ बाधवम्॥ अध्वर्युर्ऋत्विग्विशेषः। आध्वर्यवम्॥ कान्दुकम्॥४०५॥

कुशलचपलौ क्षेत्रज्ञोऽथानृशंसकुतूहलम्—
पिशुनसुहृदावुन्नेताथो सहश्च कमण्डलुः ।
अपि च हृदयं दुःसोः पत्तेरथाद्गणकस्तथा—
हृदयपुरुषौ ज्ञेयावेतौ समासविपर्यये ॥४०६॥

कौशलम् ॥ वार्षलम् ॥ क्षैत्रज्ञम् ॥ आनृशंसम् ॥ कौतूहलम् ॥ पैशुनम् ॥ शोभनं हृदय यस्य सुहृन्मित्रम् ॥ निन्दितं हृदयं यस्य दुर्हृद् अमित्रः ॥ सुहृद्दुर्हृन्मित्रामित्र इति हृदादेशः ॥ वामनमतेन हृच्छब्देनैतयोः सिद्धिः । सौहार्दम् । दौहार्दम् । हृद्भगसिन्ध्वन्ते पूर्वपदस्य चेत्यनेनोभयपदवृद्धिः । शोभनं हृदयं यस्य स सुहृदयः साधुः । दुष्टं हृदय यस्य स दुर्हृदयः क्रूरः । तयोरणि हृदयस्य हृल्लासलेखाण्य इति हृदयस्य हृदादेशः । सौहार्दम् । दौहार्दम् । ब्राह्मणादित्वमप्येषाम् । तेन दौहार्द्यं सौहार्द्यम् । सौहृदय्यं दौर्हृदय्यमित्यपि । इह सुहृदयदुर्हृदयशब्दावेव पठितव्यौ सुहृद्दुर्हृच्छब्दावेव वा न तु चत्वारः । अन्यतरपाठेऽपि हि सौहार्दं दौहार्दमिति सिध्यति । उच्यते । अर्थभेदात् सुहृद्दुर्हृच्छब्दौ मित्रामित्रवाचिनौ सुहृदयदुर्हृदयशब्दौ तु नैवम् । तौ हि प्रशस्तनिन्दितहृदयसम्बन्धमात्रे वर्त्तेते । उभयत्रापि च सौहार्दं दौहार्दमित्युभयपाठः ॥ सौहृदं दौर्हृदमिति च प्रयुज्यते । यथा—तत्सौहृदं यत्क्रियते परोक्षे । कुसुमं कृतदौर्हृदस्त्वया । तदर्थमेकत्रोभयपदवृद्धिर्मा भूत् । अन्यथोभयत्राप्येकरूपत्व उभयपाठानर्थक्य स्यादित्युभयपाठः । अयं पक्षो वामनस्यापि हृद्भगेत्यत्र सुहृदो भावः सौहार्दमिति दर्शयतः सम्मतो लक्ष्यते । जयादित्यस्तु सुहृदयदुर्हृदयशब्दौ सुहृद्दुर्हृच्छब्दौ च पपाठ । सचैवं मन्यते । ब्राह्मणादौ प्रयोगदर्शनादनयोः पाठाङ्गीकरणे वचनसामर्थ्यादेवाण् ष्यञ्च भविष्यतः । असाक्षात्पठितोऽपि हि साक्षात्पठितोऽपि हि साक्षात्पठितवत्कल्पत आकृतिगणेष्विति ॥ सौहृदेनापि भावे त्वामित्यादयस्तु कविप्रवाहे छन्दोवत्कवयः प्रयुञ्जत इत्युक्तम् ॥ चन्द्रस्तु सौहृदमिति हृदयस्याणि हृदादेशो न हृदुत्तरपद हृद्भगेत्युत्तरपदवृद्धिभावमाह ॥ भोजस्तु सुहृद्दुर्हृदौ मित्रामित्रयोरित्यत्र निपातनसामर्थ्यादवयवानर्थक्ये सौहृदं दौर्हृदमिति हृद्भगसिन्ध्वोः पूर्वपदस्य चेत्युत्तरपदवृद्धिर्न भवति ॥ उन्नेता गवेषणशील ऋत्विग् वा । औन्नेत्रम् । साहसम् । कामण्डलवम् । लघ्वादीक इत्यनेन सिद्धे त्वतलोर्निवृत्त्यर्थः पाठः । कमण्डलुकमित्यन्ये ॥ पाङ्क्तिगणकम् ॥ राथगणकम् ॥ हार्दम् । पौरुषम् ॥ समासे तु सहृदयता । सहृदयत्वम् ॥ सत्पुरुषता । सत्पुरुषत्वम् ॥४०६॥

परिव्राजकसुभ्रातृसुभगोद्गातृहायनाः ।
यजमानोऽथ भर्ता च दुर्भ्रातृविपुलौ दुर्हृत् ॥ ४०७ ॥

पारिव्राजकम्। अयं शकटाङ्गजमतेन ॥ सौभ्रात्रम् । यथा—समानेऽपि हि सौभ्रात्रे यथा तौ रामलक्ष्मणौ ॥ सुभगस्य भावः कर्म वा । सौभागम् । हृद्भगसिन्ध्वोः पूर्वस्य चेत्युभयपदावृद्धि ॥ अयं चन्द्रमतेन । जयादित्यस्तु सुभग मन्त्र इति पठति । यथा । महते सौभगाय । सर्वं विधयश्छन्दसि विकल्पन्त इत्युभयत्रवृद्धि न भवति । मन्त्र इति किम् । सौभाग्यं ब्राह्मणादित्वात् ष्यञेव भवति । वामनस्यापि संमतमेतत् । उद्गतो गायत ऋत्विग् वा । उद्गाता । औद्गात्रम् । हायनस्य हायनम् ॥ अयं वामनमतेन । याजमानम् । भर्तुः भार्तम् ॥ निन्दितो भ्राता दुर्भ्राता । तस्येदं दौर्भ्रात्रम् ॥ वैपुलम् । अयं वामनमतेन ॥ दुहृदुदाहृत एव ॥ ४०७ ॥

प्रतिहर्त्ता तथा पोता यलोपः श्रोत्रियस्य च ।
वृषपूर्वं गणं प्राह वामनस्तु तपस्विनि ॥ ४०८ ॥

प्रतिहर्त्ता ऋत्विक् । प्रातिहर्त्रम् । ये तु लघ्वादीक इत्यत्र लघ्वादेरिगन्तस्य विशेषणं मन्यन्ते तेषां मते तेनैव सिद्धं प्रातिहर्त्रम् ॥ परत्वात् त्वतल्भ्यां बाध्यत इत्यणिविधानम् । उद्गातृ । उन्नेतृ । होतृ । पोतृ । प्रशास्तृ । अध्वर्यु इत्येतेषां यदा ऋत्विग्वचनत्वं तदा होत्राभ्यश्छ इति छे प्राप्ते पाठः ॥४०८॥

इति युवादिः ॥

मनोज्ञमेधाव्यभिरूपवृद्धाः कल्याणचोरप्रियरूपधूर्त्ताः ।
आढ्यस्तथा श्रोत्रियसारपत्राश्छात्रो युवच्छान्दसविश्वदेवाः ४०९

मनोज्ञादिगुरूपोत्तमयोपान्त्यादकञ् इत्यनेन मनोज्ञादेस्तस्य भावः कर्म वेत्यर्थेऽकञ् वा भवति । मनो जानाति परितोषयतीति मनोज्ञं वस्तु । तस्य भावः कर्म वा । मानोज्ञकम् ॥ मैधावकम् ॥ शोभनं रूपमस्य रूपमभिगत इति वा । अभिरूपः । तस्य आभिरूपकम् ॥ वार्द्धकम् । यथा—

वार्द्धके मुनिवृत्तीनां योगे नान्ते तनुत्यजाम् ॥

अन्ये तु वर्णार्थलक्षणेऽपि स्वार्थिकेऽके च वार्द्धकमित्याहुः । काल्याणकम् ॥ चौरिका । स्वभावात् स्त्रीत्वम् । अन्यस्तु चौरकं धौर्त्तकमिति नपुंसकलिङ्गे ददर्श । प्रियं रूपं यस्य तस्य प्रैयरूपकम् ॥ धौर्त्तिका । आपूर्णं ध्यायतीत्याढ्यः । आढ्यकम् ॥ श्रौत्रियकम् ॥ साराणि पत्राण्यस्य सारपत्रः । सारपत्रिका ।

सारपत्रकमित्यन्यः ॥ सरप्रयुक्तं पत्रं वाहनं सरपत्रमित्यन्यः । सारपुत्र इति भोजः । छत्त्रशीलः छात्त्रः । छात्त्रकम् ॥ यौवनिका । अके राजन्यमनुष्ययूनामित्यनेनान्त्याजादिलुगभावः । यथा ममैव ।

नवे यौवनिकोद्भेदे यस्य न स्खलितं मनः ।
बृंहितं नापि सिद्धेश प्रसादेन मनीषिणः ॥

यथा वा धनञ्जयस्य—क्षणभङ्गुरमङ्गभङ्गिनां न गता यौवनिका निवर्त्तते ।

विभवास्तृणवारिचञ्चलानिचयामर्मरपत्रसंनिभाः ॥

छान्दसकम् ॥ वैश्वदेवकम् ॥ ४०९ ॥

**बहुलामुष्यकुलादोरूपावश्यङ्कुपुत्रकुलपुत्राः ।**
**पुत्रकुमारकुलाला ग्रामात्सण्डश्च सुकुमारः ॥४१०॥**

वाहुलकम् । दृढादिपाठाद् बंहिमा । वाहुल्यमित्यपि ॥ आमुष्यकुलिका । आमुष्यकुलकमित्यन्ये । अमुष्यपुत्र इत्यपि ॥ अदो रूपम् । अदो रूपमस्येति वा । अदोरूपम् । तस्य आदोरूपकम् ॥ अदोरूपशब्दो रूपप्रशंसायाम् ॥ आवश्यकम् । कौपुत्रकम् ॥ अयं वामनमतेन । कौलपुत्रकम् । ग्रामपुत्रिका । ग्रामकुमारिका । ग्रामकुलालिका । ग्रामकुलमित्यप्यन्यः ॥ सण्डो वृषः । ग्रामस्य सण्डो ग्रामसण्डः । तस्य ग्रामषण्डिका । पुरुषादिवद्दीर्घत्वे ग्रामषाण्ड इत्यन्ये । ग्रामषण्ड इति जयादित्यादयः । एते चत्वारो नपुंसकलिङ्गा इत्यन्ये । सुष्ठु कुमारः सुकुमारः । सौकुमारकम् ॥४१०॥ इति मनोज्ञादिः ॥

**इष्टार्चितौ निपठितागणितावकीर्णपूर्त्तोपसादित-**
**गृहीतनिराकृताश्च । संरक्षितानुपठितोपकृतानुयुक्ता-**
**म्नातश्रुतानुगणितास्त्ववकल्पितं च ॥ ४११ ॥**

इष्टादिभ्योऽनेनेत्यनेनेष्टादेः प्रथमान्तादनेनेति तृतीयार्थे इन् भवति ॥ इष्टोऽनेन यज्ञः । इष्टी यज्ञे । इष्टमनेन वा । इष्टी यज्ञे ॥ अर्चितो सिद्धराजे । निपठिती मीमांसायाम् ॥ अगणिती मदने ॥ अवकीर्णी दुर्नये । पूर्त्ती दाने । उपसादिती सदसि ॥ उपासितमित्यन्ये ॥ उपासिती गुरुकुले । गृहीती विद्यासु । निराकृती कुकाव्ये । संरक्षिती प्रजासु । अनुपठिती वेदे ॥ उपकृती

मन्त्रे । अनुयुक्ती शास्त्रे । आम्नाती छन्दसि ॥ श्रुती इतिहासे ॥ अनुगणिती निरुक्ते । अवकल्पिती जल्पे ॥ ४११ ॥

आसेवितपरिरक्षितनिकथितगणितोद्गृहीतपरिकलिताः ।
उपपादितपरिगदितौ सङ्कलिताधीतपरिगणिताः ॥४१२॥

आसेविती विद्वत्सु ॥ परिरक्षिती परिजने ॥ निकथिती कथासु । निकठित इत्यन्यः । गणिती ज्योतिषि ॥ उद्गृहीती उद्योगे । परिकलिती कलासु ॥ उपपादिती धने ॥ परिगदिती परेषु ॥ संकलिती पदार्थेषु ॥ अधीती व्याकरणे ॥ परिगणिती याज्ञिक्ये ॥ ४१२ ॥

अवगणितव्याकुलितौ निषादितोपाकृतावमुक्ताश्च ।
अवधारितपठितकृतानिगदितमनुगुणितमायुक्तम् ॥४१३॥

अवगणिती वादिनि ॥ व्याकुलिती रिपुजने ॥ निषादिती हास्तिके(१)॥ उपाकृती पशौ । अवमुक्ती पापे । अवधारिती शास्त्रार्थे ॥ पठिती वेदे ॥ कृती धर्मे ॥ निगदिती नयेषु ॥ अनुगुणिती अनुपदे ॥ आयुक्ती युद्धे ॥ मत्वर्थीयेनेनासिद्धे ठन्निवृत्त्यर्थमिनुविधानम् ॥४१३॥ इति इष्टादिः ॥

यवोर्मिवासाक्रिमिभूमिबन्धवः क्रुञ्चाककुत्कान्तिहरीन्दुविन्दवः ।
हनुस्तिमीक्षू मधुसानुभानवोद्राक्षाहरिच्छिम्बिगरुद्द्रुचारवः॥४१४

क्रयमान्मोपान्तान्मोवोऽयवादेरित्यनेन क्रयन्तान्मकारान्तादवर्णान्तान्मोपान्तादवर्णोपान्ताच्च यवादिवर्जितान्मतोर्मकारस्य वकारो भवति ॥ यवा अस्मात्र वा सन्ति यवमान् ॥ ऊर्मिमान् ॥ वासामान् ॥ वासाशब्दः स्त्रीलिङ्गः। कृमिमान् ॥ भूमिमान् ॥ बन्धुमती ॥ बन्धुमान् ॥ क्रुञ्चामान् ॥ ककुद्मान् । ककुद्मानेष द्वेषते ॥ कान्तिमान् ॥ हरिमान् ॥ इन्दुमती ॥ विन्दुमती ॥ हनुमान् ॥ तिमिमान् ॥ इक्षुमती ॥ मधुमान् पर्वतः ॥ सानुमान् ॥ भानुमान् ॥ द्राक्षामान् ॥ ध्राक्षेत्यपि भोजः ॥ हरिन्मान् ॥ शिम्बिमान् ॥ शिम्बीमानित्यन्यः ॥ गरुत्मान् । गरुडः ॥ द्रुमती । श्रुमतीत्यपि भोजः ॥ चारुमती ॥ केषांचिदवर्णान्तात्प्राप्तः ॥ केषांचिन्मोपान्तादिति । केषांचिज्झय इति । केषांचिदमङ्खायामिति । आकृतिगणश्चायम् । तेन दल्मिमदंशुमतीश्रीमतीगोमतीप्रभृतिभिस्मत्प्रभृतयो ज्ञेयाः ॥४१४॥ इति यवादिः ॥

---

(१) निषादिती यात्रेष्विति पा० ।

वत्वन्तमुदन्नष्ठीचक्रीकक्षीरुमण्विवो ज्ञेयम् ।
राजन्वान्सौराज्ये ज्योत्स्ना चर्मण्वती नाम्नि ॥ ४१५ ॥

उदन्वदादिरित्यनेनोदन्वदादयः शब्दा निपात्यन्ते संज्ञायाम् ॥ उदकमस्मिन्नस्तीति उदन्वान् उदधिः ॥ उदन्वान्नाम ऋषिः । उदन्वान्नामाश्रमः ॥ अन्यस्तु धारणक्रियासम्बन्धाद् उदन्वान् घट उदन्वान् मेघ इत्यपि मन्यते ॥ अष्ठीवान्नाम अङ्गोरुसन्धिः ॥ अत्रास्थिशब्दस्याष्ठीभावो निपात्यते ॥ चक्रीवान् रासभः ॥ चक्रीवान्नाम राजा । अत्र चक्रशब्दस्य चक्रीभावः ॥ कक्षीवान्नाम ऋषिर्लौकिकः ॥ अत्र कक्षाशब्दस्य कक्षीभावः । रुमण्वान्नाम पर्वतः । रुमण्वान्नाम मन्त्री । अत्र लवणशब्दस्य रुमण् भावः ॥ रुमन्निति प्रकृत्यन्तरमस्तीत्येके । तस्य वा णत्वम् (१) ॥ विशिष्टा वसवः किरणा यस्य विवस्वान् । आदित्यः ॥ राजन्वान् देशः । राजन्वतीमाहुरनेन भूमिम् ।

सौराज्य इति किम् । राजवान् ॥ ज्योतिरस्यास्तीति ज्योत्स्ना चन्द्रप्रभा । चर्मण्वती नाम नदी ॥ नाम्नीति किम् । उदकवान् । अस्थिमान् । चक्रवान् । कक्षावान् ॥ लवणवान् ॥ वसुमान् । ज्योतिष्मान् । चर्मवान् ॥ ४१५ ॥ इत्युदन्वादिः ॥

ज्योत्स्नाशब्दस्तमिस्रा च कुतुपः स्याद्विपादिका ।
विसर्पो नखरश्चापि कुण्डलोऽपि मतो बुधैः ॥४१६॥

प्रज्ञाज्योत्स्नापिच्छसिध्मलोमपानादेर्णाणिललशना इत्यनेनैतेभ्यस्तदस्यात्र वास्तीत्येतस्मिन्नर्थे ण अण् इल ल श न इत्येते प्रत्ययाः क्रमेण भवन्ति । मतुश्च ॥ ज्योत्स्नाऽस्मिन्नस्तीति ज्यौत्स्नः पक्षः । ज्यौत्स्नी रात्रिः ॥ तमोऽस्यामस्तीति तमिस्रा रात्रिः ॥ साऽस्यास्तीति तामिस्रः पक्षः ॥ कौतुपं गृहम् ॥ वैपादिकं कुष्ठम् ॥ वैसर्पो व्याधिः ॥ नाखरः श्वापदः ॥ कौण्डलः पक्षे । ज्योत्स्नावान् ॥ तमिस्रावान् ॥ ४१६ ॥ इति ज्योत्स्नादिः ॥

---

(१) लवणस्य रुमण्भावः । रुमण्वान्नाम पर्वतः । अन्ये त्वाहुः । रुमन्निति प्रकृत्यन्तरमस्ति तस्यैव तन्निपातनं नकारलोपाभावार्थं च । वदयं तु यथायोगमस्त्येवेति पा० ।

पिच्छोदरव्रीहिगुहाः पिचण्डस्तुन्दोदकोरोयवचूर्णपक्षाः ।
वर्णग्रहौ पङ्ककले च काकप्रज्ञे तुफेनो ध्रुवका च पर्णम् ॥४१७॥

पिच्छादेरिलः ॥ पिच्छान्यस्य सन्ति पिच्छिलः । उदरिलः ॥ व्रीहिलः । दिगम्बरस्तु व्रीहिग्रहणं स्वरूपार्थमर्थनिर्देशार्थं चेति (१) ब्रुवाणः शालिलो व्रीहिल इत्याह ॥ गुहिलः ॥ पिचण्डिलः ॥ तुन्दिलः । उदकिलः ॥ उरसिलः ॥ यविलः ॥ चूर्णिलः ॥ पक्षिलः ॥ वर्णिलः ॥ ग्रहिलः ॥ पङ्किलः । कलिलः ॥ काकिलः ॥ प्रज्ञिलः ॥ फेनिलः । ध्रुवकिलः । ध्रुवकेत्यपि वामनः ॥ पर्णिलः ॥ पक्षे पिच्छवानित्याद्यपि भवति ॥ तुन्दोदरपिचण्डप्रभृतीनां तुन्दादावपि पाठाद्वेलौ भवतः । भोजमतेन लविषयेऽपि बीजप्रभृतीनां केषाञ्चित् ॥ ४१७ ॥ इति पिच्छादिः ॥

सिध्मस्नेहौ पांसुपृथुश्यामचटूनि प्रज्ञाग्रन्थीबीजकपी-
पिङ्गमृदू च । कर्णः शीतं मांसहनू मञ्जुगडू स्तः पत्रं नाभिः
श्रीमणिकण्डूदकक्षणाः ॥ ४१८ ॥

सिध्मादेर्लः ॥ सिध्मान्यस्य सन्ति सिध्मलः ॥ स्नेहलः । पांसुलः ॥ पृथुलः ॥ श्यामलः ॥ चटुलः ॥ प्रज्ञालः ॥ पिच्छादिपाठात् प्रज्ञिलः ॥ ग्रन्थिलः । यथा मुरारेः—द्दयमेभिरालवालैः पदे पदे ग्रन्थिलासु कुल्यासु ॥ बीजलः॥ कपिलः॥ पिङ्गलः ॥ मृदुलः॥ कर्णलः ॥ शीतलः। मांसलः ॥ हनुलः। हनूल इत्यपि॥ मञ्जुलः। पृष्ठग्रन्थिर्गडुः । गडुलः—कुब्जः ॥ पत्रलः॥ नाभिलः॥

---

(१) व्रीहिग्रहणं किमर्थम् । यावता तुन्दादिषु व्रीहिशब्दः पठ्यते तत्र इनिठनौ चकारेण विधीयेते । एवंतर्हि तुन्दादिषु व्रीहिग्रहणमर्थग्रहणं विज्ञायते । शालयोऽस्य सन्ति । शालिलः । शालिनः । शाली । शालिकः । शालिमानिति । व्रीह्यादिभ्यस्तौ । व्रीह्यर्थंतुन्दादेरिलश्च । व्रीह्यर्थे । कलमा अस्य अस्मिन् वा सन्ति । कलमिलः । कलमिकः । कलमी । कलमवान् । शालिलः । शालिकः । शाली । शालिमान् । व्रीहिशब्दोऽपि व्रीह्यर्थो भवति । किं तु तस्य पूर्वेणोपादानादिलो न भवति । भावे हि तत्रोपादानमनर्थकं स्यात् । भवसौत्येके व्रीहिल इत्यधिकं पु० ॥

श्रीलः श्रीमान् ॥ मखिलः ॥ करडूलः ॥ उदकलः ॥ पिच्छादिपाठाद् उदकिलः ॥ कुण्डलः ॥४१८॥

सक्थि श्लेष्मा पित्तनिष्पाङ्गमन्यः पेशः पार्ष्णी वातनिष्पावपुष्काः । पार्श्वस्तुण्डिः पक्ष्मपर्शू कुशः स्याद्-धारासक्तू वर्ध्मफेनोष्मपर्णम् ॥ ४१९ ॥

सक्थिलः ॥ श्लेष्मलः कफी ॥ पित्तलः ॥ निष्पादयतीति निष्पात् क्विप् । निष्पाङ्गः ॥ निष्पदनं निष्पत् । निष्पन्न इत्यन्ये ॥ निष्पाङ्गान् । अयं शकटाङ्गमतेन ॥ धमनीलः ॥ पेशलः ॥ पार्ष्णीलः ॥ धमनीपार्ष्णीशब्दौ दीर्घान्तावेव गणे पठ्येते ॥ तेन दीर्घान्ताभ्यामेव लः । ह्रस्वान्ताभ्यामेव मतुः ॥ वातलः ॥ निष्पावलः । निष्पानं निष्पा । निष्पाल इत्यन्यः ॥ पुष्कलः । पार्श्वलः ॥ तुण्डिलः ॥ तुण्डिवलिवटिभ्यो भ इति भप्रत्यये तुण्डिभ इत्यपि ॥ पक्ष्मलः । पर्शुलः । पर्शूल इति भोजराजः॥ कुशलः । धारालः ॥ यथामुरारेः—

प्रेक्षाधारालवैरमस्तमरसमरोड्डामरौजाविडौजाः ॥

सक्तुलः ॥ वृधेर्मन् । वर्ध्मलः । पामादिपाठाद्वर्ध्मन इत्यपि ॥ फेनलः । यथा—वैदेहि पश्या मलयाद्विभक्तं मत्सेतुना फेनिलमम्बुराशिम् । ऊष्मला । यथा—धनुष्मन्तौ वत्सौ दशमुखभुजैरूष्मलतमाः ॥ पर्णलः । पर्णिल इत्यपि । यथाभट्टेः—अस्यर्णोऽम्भःपतनसमये पर्णलीभूतसानुम् ।

किष्किन्धाद्रिं न्यविशत मधुक्षीवगुञ्जद्द्विरेफम् ॥ ४१९ ॥

क्षुद्रजन्तूपतापाभ्यां प्राण्यङ्गादात एव च । कालाघाटाजटाः क्षेपे वातादेरूडपि स्मृतः ॥४२०॥

क्षुद्रजन्तुरानकुलात् । यूकालः । मक्षिकालः । उपतापो रोगः । मूर्छालः । विचर्चिकालः । विपादिकालः । प्राण्यङ्गादाकारान्तादित्यर्थः । चूडालः ॥ जङ्घालः ॥ कालादयः क्षेपे प्रत्ययार्थस्य निन्दायां गम्यमानायां लभाजः । काला कूर्चम् ॥ कालालः (१) ॥ घाटाग्रीवावयवः । घाटालः(२) ॥ जटालः ॥ पिच्छादिपाठात् कालिलः । घाटिलः । जटिलः । यथा—

---

(१) काडेति डोपान्त्यं केचित्पठन्ति । काडालः । काडिलइत्यधिकम् ॥
(२) घटा सभा संलापो वा घटालः । घाटा ग्रीवा घाटाल इति वर्धमानः । कटा क्षेपे कटालो गर्हितगण्डस्थलो गजइतिके० ॥

विवेश कश्चिज्जटिलस्तपोवनम् ॥

कालाशब्दस्य ल प्रत्ययं चन्द्राद्या न मन्यन्ते ॥ क्षेप इति किम् ॥ कालावान् । घाटावान् । जटावान् । क्षेपोऽत्र मतुना न गम्यत इति क्षेपे मतुर्न भवति ॥ वातादेरूडपि स्मृत इति वातदन्तबलललाटानां लो भवति तत्संनियोगेनोङागमश्च ॥ वातूलः । दन्तूलः । बलूलः । ललाटूलः ॥ गलशब्दस्यापि गलूल इति मन्यते भोजः ॥ पक्षे सिध्मवानित्यादि ॥ आकृतिगणोऽयम् । तेन वर्णप्रभृतयो द्रष्टव्याः ॥ ४२० ॥ इति सिध्मादिः ॥

लोमवस्तुमुनिः कर्को गिरिबभ्रू हरिः कपिः ।
लोमादौ विबुधैर्ज्ञेया रुरू रोम तथा भुरुः ॥ ४२१ ॥

लोमादेः शः । लोमान्यस्य सन्ति लोमशः ॥ वस्तुशः ॥ मुनिशः ॥ कर्कशः ॥ गिरिशः ॥ बभ्रुशः ॥ हरिशः ॥ कपिशः ॥ रुरुशः ॥ रोमशः ॥ भुरुशः ॥ पक्षे लोमवानित्याद्यपि ॥ ४२१ ॥ इति लोमादिः ॥

पामा वामा वलिः श्लेष्मा सामहेमोष्मकद्रवः ।
कल्याणादङ्गशब्दाच्च लक्ष्म्या अञ्च क्रमिस्तथा ॥ ४२२ ॥

पामादेर्नः ॥ पामनः ॥ वामनः ॥ वलिनः ॥ श्लेष्मणः ॥ सामनः ॥ हेमनः ॥ ऊष्मणः ॥ कद्रुणः ॥ कल्याणमङ्गमस्या अस्ति अङ्गना ॥ कल्याण इति किम् । अङ्गवती ॥ लक्ष्मीरस्यास्ति लक्ष्मणः । लक्ष्मीवान् ॥ क्रमिणः ॥ ४२२ ॥

विष्वचो कृतसन्धिः स्याल्लुक् पदस्योत्तरस्य च ।
शाकीदद्रूपलालीनां ह्रस्वत्वं च स्मृतं बुधैः ॥४२३॥

विष्वक्शब्दान्नो भवति ॥ तत्संनियोगेन चाकृतसन्धिरुत्तरपदलोपः । विष्वञ्चोऽर्थास्ते दिवसा वा रश्मयो वा गतिविशेषा वाऽस्य सन्ति विषुणः सूर्यः ॥ विष्वञ्चन्तीति विष्वञ्चो गतिविशेषा अस्य सन्ति विषुणो वायुः । विष्वग्वान् ॥ विषुशब्दश्चादिर्नानात्वे वर्त्तते । महच्छाकं शाकसमूहो वा शाकी । शाक्यस्मिन्नस्ति शाकिनम् ॥ दद्रुर्नाम व्याधिः । दद्रुणः ॥ भोजस्तु प्राक्सूत्रे दद्रुशब्दम् । अस्मिन् सूत्रे च नागमाद्गृहगोधापर्याय कद्रुशब्दमाह ॥ पलालिनम्(१) ॥ ४२३ ॥ इति पामादिः

(१) महत्पलालं पलालसमूहो वा पलाली तद्वत् पलालिनमितिके० ॥

बलफलपरिणाहोद्दाममालाबलाका—
व्रतनिचुलमनीषामेखलामानशाखः ।
कुलमुकुलपताकाकर्मचर्मप्रयामाः—
स्तबकवडबचूडायामवीणोपयामाः ॥ ४२४ ॥

बलादेरिन् इत्यनेन तदस्यास्त्यस्मिन्नित्यर्थे इन् भवति मतुश्च ॥ बलमस्यास्तीति बली । बलवान् । फली । फलवान् । परिणाही । परिणाहवान् । एवं सर्वत्र ॥ उद्दामी ॥ उद्दाम इत्यन्यः ॥ माली ॥ बलाकी ॥ व्रती ॥ निचुली ॥ मनीषी ॥ मेखली । मानी ॥ शाखी ॥ कुली दुर्गमतेन । मुकुली ॥ पताकी ॥ कर्मी ॥ चर्मी । कर्मिकश्चर्मिक इत्येके ॥ प्रयामी ॥ स्तबकी ॥ वडवी । स्तबकश्च वडबा च स्तबकवडवम् । पश्चाच्छेषैः सह द्वन्द्वः ॥ चूडी ॥ आयामी ॥ वीणी । यथा—सिद्धद्वन्द्वैर्जलकणभयाद्वीणिभिर्मुक्तमार्गः ॥ उपयामी ॥ ४२४ ॥

कूलं जरोत्साहघृणोलदंष्ट्रा व्यायामधन्वोद्यमवर्मकेकाः ।
संज्ञाशिखारोहगदावरोहाः पुलाष्टकायासमुलानि सूना॥४२५॥

कूलिनी कूलस्थाने । मूलमिति पठन्ति ॥ जरी ॥ उत्साही ॥ घृणी ॥ उली । यस्य कस्यचित्सञ्ज्ञा ॥ दंष्ट्री ॥ व्यायामी ॥ धन्वी । यथा—

उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले ।

उद्यमी ॥ वर्मी ॥ वर्मिक इत्यप्यन्ये ॥ केकी ॥ सञ्ज्ञी ॥ शिखी वह्निर्मयूरश्च ॥ आरोही ॥ गदी । गदावान् ॥ अवरोही ॥ पुली । यस्य कस्यचित्सञ्ज्ञा ॥ अष्टकी ॥ अष्टकिक इति केचित् । आयासी ॥ मुली ॥ सूना घातनस्थानम् । सूनी ॥ उद्भास इत्यपि केचित् । इन्प्रत्यये सिद्धे ठबाधनार्थम् ॥४२५॥

इति बलादिः ॥

मणिर्विषुर्बिम्बहिरण्यराज्यो मताः कुमारः कुररेष्टकार्णाः ।
गाण्डीधनुर्गाण्ड्यजके च नाम्नि पतञ्जलिर्नेच्छति गाण्डशब्दम्

मण्यादेर्वः इत्यनेनैतस्मात्तदस्यास्त्यस्मिन्नित्यर्थे वो भवति मतुश्च । मणयोऽस्य सन्ति मणिवः । मणिवान् ॥ मणिव इति कस्यचिन्नागस्य सञ्ज्ञा ॥ विषु साम्ये ध्वादिः । तद्विद्यतेऽस्य विषुवम् । विषुवत् । यथा—

समरात्रिन्दिवे काले विषुवद्विषुवं च तत् ॥

विषुवानित्यमरमालाकारः ॥ मतोर्वत्वं लक्ष्यात् ॥ विषुर्नाम मुहूर्त्तः । सोऽस्यास्तीति विषुमान् । अहोरात्रप्रविभाग इति तु शाकटायनः । बिम्बा-न्यस्यास्मिन्वा सन्ति विम्बावम् । ङ्याप्त्वेऽच् ह्रस्वश्च बहुलमिति बहुलवचना-द्दीर्घः । बिम्बव इतिभोजः । हिरण्यवम् । हिरण्यवान् । हिरण्यवो नाम निधिः । कुबेरइत्यपरे ।। राजीवम् । राजिशब्दस्यापि । कुमारवम् । कुररा-वम् । इष्टकावम् । अर्णशब्दः कृतसलोपो द्रष्टव्यः । अर्णवः समुद्रः । गाण्डी गाण्डिर्वा दारुखण्डम् । दात्रादिग्रहणे मुष्टिस्थानभूतं ग्रन्थिव्यवच्छिन्नं मध्यपर्व वा । गाण्डीवं गाण्डिवं वा पार्थधनुः । यथा—'

गाण्डीवधन्वनः खेभ्यो निश्चचार हुताशनः ।।

यथा—वेणीसंहारे—हस्ताकृष्टविलोलकेशवसनादुःशासनेनाज्ञया—

पाञ्चालीममराजचक्रपुरतो गौर्गौरितिव्याहृता ।

तस्मिन्नस्व स किं नु गाण्डिवधरोनासीत्पृथानन्दनो—

यूनः क्षत्रियवंशजस्य कृतिनः क्रोधास्पदं किं न तत् ।।

ह्रस्वादपि भवति ॥ गाण्डिवं धनुरिति । तुल्या हि संहिताह्रस्वदीर्घ-योरुभयथा सूत्रं प्रणीतमित्येतन्न संगतम् । कुतः । न आगमो न युक्तिः । आगमस्तावन्नास्ति वार्त्तिकभाष्ययोरभावात् । यदि च ह्रस्वसूत्रे गाण्डिशब्द उपात्तो दीर्घस्य न प्राप्नोति नापि गाण्डिगाण्डीशब्दयोरेकशेषोऽस्तीति भाष्य-कारमतानुसारिणा केनाप्येतद्विचारितम् ॥ अजकावम् । पिनाकम् ॥ अजक-वमिति वामनः ॥ यत्तु पिनाकोऽजगवं धनुरिति पाठो दृश्यते तत्राजगवोऽ-स्थिविशेषो विद्यतेऽस्य । अर्शआदित्वादत्प्रत्ययेऽजगवमिति सिद्धम् ॥ मणया-दयः प्रयोगतो गम्याः ॥ ४२६ ॥ इति मणयादिः ॥

सुखप्रतीपप्रणयास्त्रसोढास्तृप्रास्रकृच्छ्रा दलशीलकक्षाः ।
अलीकदुःखे कृपणं हलं स्यात् क्षेपे तु माला करुणश्च शोफः ४२७

सुखादिधर्मशीलवर्णान्तादित्यनेन तदस्यात्र वास्तीत्यर्थे इन्नेव भवति । सुखमस्यास्तीति सुखी । प्रतीपी । प्रणयी ॥ अस्त्री ॥ सोढी ॥ तृप्री ॥ आस्त्री ॥ कृच्छ्री ॥ दली ॥ शीली ॥ कक्षी ॥ अलीकी ॥ दुःखी ॥ कृपणी ॥ हली ॥

मालो निन्दायाम् ॥ अन्यत्र मालावान् ॥ करुणी ॥ शोफी ॥ बलादिषु माला-शब्दः पठ्यते । इह तु पाठः क्षेपे मतुर्बाभूत ॥ ४२७ ॥ इति सुखादिः ॥

पुष्करो नडतमालहिरण्यकैरवाणि कुमुदं च शिरीषम् ।
कर्दमस्तटतरंगकपित्थाः पङ्कजोत्पलकरीषसरोजम् ॥४२८॥

पुष्करादेरिन् इत्यनेन पुष्करादेरस्त्यर्थे देशेऽभिधेय इन् भवति ॥ पुष्कराणि विद्यन्तेऽस्यामस्या वा । पुष्करिणी भूमिः ॥ नडिनी ॥ तमालिनी ॥ हिरण्यिनी ॥ कैरविणी ॥ कुमुदिनी ॥ शिरीषिणी ॥ कर्दमिनी ॥ तटिनी ॥ तरंगिणी ॥ कपित्थिनी । पङ्कजिनी ॥ उत्पलिनी ॥ करीषिणी ॥ सरोजिनी॥४२८॥

राजीवनालीकसरोरुहाणि मृणालपद्मं पुटकारविन्दम् ।
अम्भोजमब्जं कमलं विगर्हः कल्लोलशालूकबिसं यवासः ॥४२९॥

राजीविनी ॥ नालीकिनी ॥ सरोरुहिणी ॥ मृणालिनी ॥ पद्मिनी ॥ पुटकिनी ॥ अरविन्दिनी ॥ अम्भोजिनी ॥ अब्जिनी ॥ कमलिनी ॥ विगर्हिणी । अयं जयादित्यमतेन । विवर्ह इत्यन्यः ॥ कल्लोलिनी ॥ शालूकिनी ॥ बिसिनी ॥ यवासिनी ॥ वामनस्तु बृहद्वृत्तौ यवमाषेति पठति । ततो यविनी । माषिणी ॥ दुर्गस्तु पय इति पठति ॥ देश इति किम् ॥ पुष्करवान् हस्ती । कमलवान् । बिसवान् । पुष्कराणि तीर्थान्यस्मिन्देशे सन्ति । अनभिधानादिन्न भवति ॥ एते च नियतार्थविषया एव शब्दा द्रष्टव्याः ॥ ४२९ ॥

इति पुष्करादिः ॥

कृष्यासुतीभ्रातृशिखापितासावुत्साहपुत्रौ परिषच्च माता ।
उत्सङ्गपर्षद्व्रजसोऽथदन्तः कृष्यादिसंज्ञे गदिता गणेऽस्मिन् ४३०

कृष्यूपार्श आदेर्वलराल इत्यनेन कृषीत्यादेरस्त्यर्थे वलः । जप इत्यादेरः । अर्श इत्यादे रकारो भवति । कृषिरस्यास्तीति कृषीवलः कुटुम्बी ॥ रूढिशब्दोऽयम् ॥ अन्यत्र । कृषिमत् क्षेत्रम् । ङ्याङ्ल्वेऽच् ह्रस्वश्च बहुलमिति दीर्घभावः ॥ आसुतिः सुरापानम् ॥ आसुतीवलः—शौण्डिकः ॥ नाममालास्वासुतीवलो यज्वोच्यते ॥ भ्रातृवलः ॥ शिखावलो मयूरः ॥ शिखावलं नगरम् ॥ शिखावला स्थूणा । पितृवलः ॥ उत्साहवलः ॥ पुत्रावलः ॥ परितः सीदति

परिषत् । परिषद्वलो राजा ॥ परिषदनं परिषत् पङ्कः सर्वतोऽवतारो(१) वा । सोऽस्यास्तीति परिषद्वलं तीर्थमित्यन्ये ॥ मातृवलः ॥ उत्सङ्गावलः ॥ पर्षद्वलो राजा । यथा सिद्धनागार्जुनस्यः—

लोकातीतामचिन्त्यां शमसुकृतफलामात्मनो यो विभूतिम् ।
पर्षन्मध्ये विचित्रां कथयति महतीं धीमतां प्रीतिहेतोः ॥

रजस्वला स्त्री ॥ दन्तावलो नाम राजा गजश्च ॥

आसुतिपरिषद्रजःशब्दानां यौगित्वं केचित्प्रतिपन्नाः । तन्मत आसुतिमान् परिषद्वान् रजस्वान् ग्राम इत्यपि भवति ॥ परिषच्छब्द एव गृह्यते । यस्त्विदानीन्तनपुस्तकेषु संयोगः परिषच्छब्दो दृश्यते स प्रमादपाठ एव । पुराणेषु हि भाष्यपुस्तकेषु परिषदो वलच् । काव्येषु—

श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी ।

इत्यादिषु परिषच्छब्द एव दृश्यते । कथं तर्हि—

परिषद्वलान्महाब्रह्मैराटनैकटिकाश्रमान् ।

इत्यनुष्टुप् । अत्र हि रिशब्दे पृथगवस्थिते नवाक्षरः पादो भवति । न चैतद्युक्तम्—त्रयः पादा अष्टाक्षरा अनुष्टुब् एको नवाक्षरः ।

इत्युच्यते । अयमप्यस्ति वृत्तप्रभेदो यत्रैकः पादो नवाक्षरोऽन्येऽष्टाक्षराः। यथा—प्रधाने कर्मण्यभिधेये लादीनाहुर्द्विकर्मणाम् ।

अप्रधाने दुहादीनां ण्यन्ते कर्त्तुश्च कर्मणः ॥

इति । अत्र ह्याद्य एव पादो नवाक्षरः परि शिष्टा अनुष्टुभ एवेति कश्चित् ब्रूते । तच्चातिसूक्ष्मेक्षिकयोच्यते यतो व्याकरणमत्यन्त्र द्वाभ्यामपि शब्दाभ्यां व्याप्तम् । क्षीरस्वामिनापि मार्षमारिष इत्यपि यथा—पर्षत्परिषदिति(२) टीकायां विवृतम् । किञ्च । यो नवाक्षरः पाद उदाहरणीकृतः सोऽपि न संगच्छते । प्रधाने कर्मण्याख्येय इति दर्शनात् ॥ ४३० ॥ इति कृष्यादिः ॥

ऊपनखपांसुकुञ्जाः स्वपाण्डुमधुसिन्धु [बन्धु] नगमुष्काः ।
पुष्कं कण्डूमुखगुपिनिर्मितह्रस्वा तथा कच्छूः ॥ ४३१ ॥

---

(१) परिषद्वलः । पर्षद्वान् । परिषद्वलं तीर्थं पङ्किलमित्यर्थः । परिषद्वम् । इति पा० । (२) मर्षणात्त्वद्नान्मारिषः । मार्षोऽपि यथा परिषत् । इति पा० ।

ऊषादे रः। ऊषोऽस्मिन्नस्तीति ऊषरं क्षेत्रम् । ऊषवत् अन्यत् । नखरः । पांसुरः(१) । कुञ्जावस्य स्तः कुञ्जरः करी । कुञ्जशब्दोऽस्मिन् हनुपर्य्यायः । कुञ्जवान् अन्यः । खं महत्कण्ठे विवरमस्यास्ति खरो गर्दभः । खवान् अन्यः ॥ पाण्डुरः ॥ मधुरो रसः । मधुरं मधु । मधुशब्दः स्वादुत्वलक्षणे गुणसामान्ये गुणे च वर्त्तमानो गृह्यते। न तु द्रव्यवृत्तिः । तत्र मधुमान् घटः ॥ सिन्धुरो हस्ती । सिन्धुमान् अन्यः ॥ नन्धुरं नगरम् ॥ नगा वृक्षाः पर्वता वाऽस्मिन् सन्ति नगरम् ॥ मुष्कौ वृषणावस्य स्तः मुष्करः पशुः । मुष्कवान् अन्यः । पुष्करः ॥ कण्डूरः पुरुषः ॥ मुखं सर्वस्मिन् वक्तव्येऽस्यास्ति मुखरो वाचालः । अथवा । मुखविषया वाग् मुखम् ॥ मुखवान् अन्यः । शुषिश्छिद्रम् । शुषिरं काष्ठम् । कच्छुरः ॥ ४३१ ॥ इत्यूषादिः ॥

**अर्शोऽभ्रतुन्दचतुरबलकर्दमोरः कामाम्लतुण्डलवणाः पलितं जटा च । घाटाघटे अघसुरे अपि शुक्रपद्मे स्वाङ्गाच्च हीनगुणतः परतश्च वर्णात् ॥ ४३२ ॥**

अर्श आदेरत् । अर्शो गुदकीलकः । तदस्तित्वाद् अर्शसः पुमान् । विनि प्राप्ते । अभ्रं नभः । ठेनोः प्राप्तौ ॥ तुन्दः । तुन्दिलः ॥ चतुरा अस्य सन्ति चतुरः सिद्धराजः ॥ बलः । बली । बलवानित्यपि ॥ कर्दमः प्रदेशः । उरसा बलं लक्ष्यते । उरसः ॥ उरसिल इत्यपि ॥ कामः । कामीत्यपि ॥ अम्लो रसोऽस्यास्तीति अम्लः ॥ तुण्डः—वाचाटः(२) ॥ लवणो रसोऽस्यास्तीति लवणः सूपः । लवणा यवागूः ॥ पलितः ॥ जटनं जटा । साऽस्यास्तीति जटा—केशविन्यासः। जटास्तित्वाज्जाट इत्यन्यस्य मतम् । घाटे अस्य स्तः घाटः(३)। निन्दाया अन्यत्र घटनं घटा । सास्त्यस्मिन् घटा व्यूहविशेषः ॥ अघः पापी । यथा—

अविमृश्य गोवधसमुत्थमघमथससीरदूषणा ।

सुरैषामस्ति सुरा देवाः । यतोऽब्धिजा सुरा तैः पीता । शुक्रं तेजोऽस्यास्ति शुक्रो दैत्यगुरुः ॥ पद्ममस्या अस्ति पद्मा लक्ष्मीः ॥ हीनगुणात इति हीनोपाधिकादित्यर्थः ॥ खण्डः कर्णोऽस्यास्ति कर्णः । छिन्ना नासिकाऽस्यास्तीति नासिकः । हीनगुणादिति किम् । कर्णवान् । नासिकावान् ॥ अन्ये तु

---

(१) पांसु विद्यतेऽस्मिन्निति पांसुरो मार्ग इत्यधि० । (२) वाचाल इत्यधि० । (३) घाटा ग्रीवा तद्वान् घाट इति पा० ।

काणमस्याक्ष्यस्तीति काणः। खञ्जः पादोऽस्यास्तीति खञ्जः। कुण्ठः पाणिरस्यास्तीति कुण्ठः। खल्वाटं शिरोऽस्यास्तीति खल्वाट इत्याद्युदाहरणान्याहुः॥ शुक्लो वर्णोऽस्यास्तीति शुक्लः पट इत्यादि॥ आकृतिगणश्चायम्। यत्राभिन्नरूपेण शब्देन तद्वतोऽभिधानं तत्सर्वमिह द्रष्टव्यम् ॥४३२॥ इत्यर्शआदिः॥

विमुक्तदेवासुरसत्त्वदग्ना–विष्णूर्वशीडामरुतो महित्री।
सुपर्णरक्षोवसुवृत्रहन्तृदशार्णरक्षोऽसुरबर्हवन्तः ॥ ४३३ ॥

विमुक्तादेरण् इत्यनेन विमुक्तादेरस्त्यर्थेऽध्यायानुवाकयोरभिधेययोरण्॥ विमुक्तशब्दोऽस्मिन्नस्ति वैमुक्तोऽध्यायोऽनुवाको वा॥ देवासुरशब्दोऽस्मिन्नस्ति दैवासुरः॥ अपरे विगृहीतादप्युदाहरन्ति। दैवः। आसुरः। एवं सात्वतः॥ सत्वन्तुरित्यपि केचित्। तन्मते सात्वन्तवः। अग्निश्च विष्णुश्च अग्नाविष्णू॥ अग्नाविष्णुशब्दोऽस्मिन्नस्ति आग्नाविष्णवः॥ भोजस्तु देवताद्वन्द्वे चेत्युभयपदादैचि। आग्नावैष्णव इत्युदाहरति। उर्वशी शब्दोऽस्मिन्नस्ति। और्वशः। ऐडः। लत्व ऐल इत्यपि। मारुतः। महयतीति महित्री। तृप्रत्ययेऽस्येडभावोनुकार्य्यें तदनुकरणादण्। माहित्रः। सौपर्णः। राक्षसः। वासवः। वार्त्रहन्त्रः। वृत्त्रहन्निति वामनः। दाशार्णः। राक्षोऽसुरः। बार्हवतः ॥४३३॥

उपसद्योऽस्यहत्याः सोमापूषापतत्रिवसुमन्तौ।
परिसारको दशार्हः पत्नीवानथ हविर्धानः ॥ ४३४ ॥

औपसदः। अकारान्तोऽप्यन्येषां मतेन। वायसः। अस्यहत्यशब्दोऽस्यहत्याशब्दो वास्मिन्नस्ति। आस्यहात्यः। सोमश्च पूषा च सोमापूषाणौ। देवताद्वन्द्व इति दीर्घत्वम्। सोमापूषनुशब्दोऽस्मिन्नस्ति। सौमापूष्णः। सौमापौष्ण इति भोजः। पातत्रिणः। वासुमतः। परिधावतीति परिसारकः। स शब्दोऽस्मिन्नस्ति पारिसारकः॥ दाशार्हः॥ पात्नीवन्तः। पात्नीवत इति शाकटायनः॥ हाविर्धानः॥ विमुक्तादयः स्वरूपनिष्ठा अनुकरणभूताः प्रत्ययभाजो द्रष्टव्याः ॥४३४॥ इति विमुक्तादिः॥

गोषदेवस्यत्वादेवीरापस्तदेवकृष्णोऽस्यौ।
देवींधियप्रतूर्णोपेत्वारक्षोहणोशानाः ॥ ४३५ ॥

गोपदादेरक इत्यनेन गोषदित्यादेरस्त्यर्थेऽध्यायानुवाकयोरको भवति ॥ गाः सीदति गोपत्। सुषामादित्वात् षत्वम्। गोषदस्मिन्नस्ति गोषदकोऽध्यायोऽनुवाको वा। देवस्येति षष्ठ्यन्तं त्वेति युष्मदादेशः। तत्समुदायानुकरणादकः। देवस्यत्वकः॥ देवीरिति च्छान्दसो जसन्तः। दीर्घाज्जसि च वा छन्दसीति हि छान्दसं सूत्रम् ॥ आप इति च जसन्तः। तत्र देवीराप इत्यकारान्तभागानुकरणादकः। देवीरापकः। तदेवकः। अयं भोजमतेन ॥ कृष्णोस्यकः। कृष्णोऽस्याखरेष्ठक इत्यन्ये ॥ देवींधियशब्दयोर्योऽकारान्तसमुदायस्तदनुकरणादकः। देवींधियकः ॥ प्रतूर्णकः ॥ इषे। इतीच्छतेः क्विबन्ताच्चतुर्थी। त्वेति युष्मदस्त्वामौ द्वितीयाया इति त्वादेशः। तत्समुदायस्य। इषेत्वा इत्यखण्डमिदमनुकरणम्। इषेत्वाशब्दोऽस्मिन्नस्ति इषेत्वकः ॥ रक्षांसि हन्तीति रक्षोहा। बहुत्वे जसि। रक्षोहणः ॥ तत्राकारान्तभागानुकरणादकः। रक्षोहणकः ॥ उशानकः ॥ ४३५ ॥

वाचस्पतिः कृशानुश्च स्वाहाप्राणोऽञ्जनं तथा।
पत्वासहस्रशीर्षश्च मातरिश्वा च घोषदा ॥ ४३६ ॥

वाचस्पतकः। कृशानवकः। स्वाहाप्राणकः। अञ्जनकः। पदेः क्त्वा। पत्वकः। सहस्रशीर्षकः। मातरि श्वयति गच्छति मातरिश्वा वायुः। तदनुकरणादकः। मातरिश्वकः। घोषदकः ॥४३६॥। इति गोषदादिः ॥

इति श्रीगोविन्दसूरिशिष्यपण्डितश्रीवर्धमानविरचितायां स्वोपज्ञगणरत्नमहोदधिवृत्तावस्य सञ्जातमस्य भावः कर्म वानेनास्यात्र वास्त्यर्थंविहितप्रत्ययगणनिर्णयो नाम सप्तमोऽध्यायः समाप्तः ॥

# अथाष्टमोऽध्यायः ॥

येभ्यस्तद्धितसिंहेभ्यः शाब्दिकैभिः पलायितम् ।
शव्येनापि मया दत्तं पदं तद्गणमूर्धसु ॥

कण्डूञ्मेधातुरणभुरणा गद्गदो दुःखवेदौ—
केलालाटौ समरभिषजौ तन्तसो मन्तुवल्गू ।
एलावेलासपरमगधाः पम्पसेरोमहीङः—
खेलालोटावुरणचरणासूषसो वेङ्हृणीङौ ॥ ४३७ ॥

कण्ड्वादेर्यमित्यनेन कण्डूञित्यादेर्गणात्स्वार्थे यग्भवति । कण्डू अङ्गघर्षणे । कण्डूयति । कण्डूयते । नखादिना गात्रं घर्षति ॥ मेधा आशुग्रहणे । मेधायति ॥ तुरण त्वरायाम् ॥ तुरण्यति । त्वरत इत्यर्थः । तुरण धारणपोषणयोरित्यन्ये ॥ भुरण प्रहरणधारणयोः(१) ॥ भुरण्यति । युध्यते धारयतीति वा ॥ गद्गदवाक्यस्खलने ॥ गद्गद्यति । अन्ये तु गद्गदङिति पठन्ति । तन्मते गद्गद्यते । ङित्वात्तङ् ॥ दुःख तत्क्रियायाम् । दुःख्यति ॥ वेद्यति(२) । मायामपञ्चमाचरति ॥ वेटलाञित्यन्ये ॥ वेटलायते । वेटलाङिति भोजः । केला विलासे । केलायति । विलसतीत्यर्थः ॥ लाट जीवने । लाटयति ॥ समर रणक्रियायाम् । समर्यति ॥ भिषज कुत्सायाम् । भिषज्यति कुत्सयत इत्यर्थः । चिकित्सायामित्यन्ये ॥ तन्तस दुःखे । तन्तस्यति । दुःखी भवतीत्यर्थः । मन्तु रोषे वैमनस्ये च ॥ मन्तूयति ॥ मन्तूञ् मन्तूयति । मन्तूयत इति चन्द्रः ॥ वल्गु माधुर्ये पूजायां च । वल्गूयति ॥ एला विलासे ॥ एलायति । इलाशब्द इत्यन्ये ॥ वेला कालविशेषे ॥ वेलायति ॥ सपर पूजायाम् । सपर्यति पूजयतीत्यर्थः । सपर्यया साधु स पर्यपूपुजत् ॥ मगध परिवेष्टने । मगध्यति । परिवेष्टत इत्यर्थः । नीचदासादिवृत्तिमनुतिष्ठतीत्यपरः । पम्पसदुःखे । पम्पस्यति दुःखायत इत्यर्थः ॥ इरस् ईर्ष्यायाम् । इरस्यति ॥ महीङ् वृद्धौ पूजायां च । महीयते । ङित्वात्तङ् ॥ खेला स्खलनविलासयोः । खेलायति ॥ खेल इत्यकारान्तमित्यन्ये । तन्मते

---

(१) भुरण रणधारणयोः । चुरण चौर्ये । प्रहरणधारणयोरिति वर्द्धमानः । इति पा० । (२) वेद् धौर्त्ये स्वप्ने चेत्यधि० ।

रेख्यति ॥ लोत्यति बटुः । भूमौ विपरिवर्त्तत इत्यर्थः । लेट् दीप्तावित्यन्ये(१)॥ डरण्यति सादिनम् ॥ चरण गतौ ॥ चरणयति ॥ वरण इति भोजः। यथा—

चरणयन्वारणैर्वेलां तरणयन्नौभिरर्णवम् ॥

असु मानस उपतापे च । असूयति ॥ अन्येतु असूङिति ङितं दीर्घान्तं पठन्ति । तन्मते । असूयते ॥ उषस्यति रात्रिः प्रभाती भवतीत्यर्थः । वेङिति धौर्त्ये स्वप्ने च । वेटयति ॥ हृणीङ् रोषे लज्जायां च । हृणीयते वीरवती न भूमिः ॥ ४३७ ॥

रेखास्म्बरेयोद्रवसः सुखेरजौ भिष्णक्तिरोलाडिषुधेरघोऽगदः ।
लेखालिटौ लेट् चुरणाररोरसोवेटाऽथलोटातरणौ तथा पयः॥४३८

रेखायति श्लाघामासादयति । रेखाकर्माचरंश्चित्रकरादिर्वोच्यते ॥ अस्म्यर्येति । सम्बर(२) इति वामनः ॥ इयस् ईशैश्वर्ययोः ॥ इयस्यति । अयं दुर्गमतेन ॥ द्रवस् परितापे परिचरणे च । द्रवस्यति ॥ सुख तत्क्रियायाम् । सुख्यति ॥ सुखीभवतीत्यर्थः ॥ इरज् ईर्ष्यायाम् । इरज्यति । भिष्णज् उपसेवायाम् । भिष्णज्यति । उपसेवत इत्यर्थः ॥ तिरस्यति अन्तर्हितो भवतीत्यर्थः ॥ लाडिति वेट्वत् । लाट्यते । इषुध अस्त्रधारणे ॥ इषुध्यति ॥ इरध्यति ॥ अगद्यति(३) । द्वयं भोजमतेन ॥ लेखार्थौ रेखार्थवत् ॥ लिट् अल्पार्थे कुत्सायां च ॥ लिट्यति ॥ लेट्यति ॥ भूमौ विपरिवर्त्तत इत्यर्थः ॥ चुरण गतौ चौर्ये च । चुरणयति ॥ गच्छति । चोरयति । अरर आराकर्मणि अरर्यति। अररेति नाम । आरापर्यायवाचि ।

स राक्षसेन्द्रस्य निशाचरेन्द्रो बिभेति चर्मोरर एव चर्मा ॥

अररो यज्ञाङ्गं रणश्चेत्यन्यः ॥ उरस्यति ॥ वेटायति । लोटायति ॥ एतौ वामनमतेन ॥ वेटालाटेति केचित्पठन्ति । तेषां मते वेटालाट्यति ॥ तरण गतौ । तरणयति ॥ पयस्यति गौः । पयः प्रसूत इत्यर्थः ॥ ४३८ ॥

सम्भूयोभरणौ नन्दपुरणौ कुषुभेमसौ ।
ईयसुपुष्पौ तथा गोधा चित्रङाश्चर्य इष्यते ॥४३९॥

---

(१) लेट् लोट् धौर्त्यैपूर्वभावे स्वप्ने च । दीप्तावित्येकइति पा० ।

(२) अम्बर्यति। अस्बर सम्बर संभरणे इति पा० । (३) अगद नीरोगत्वे । इरज् ईर्ष्यायाम् ।

'सम्भूयस्यति सस्यम् । वर्षति पर्जन्ये प्रभूतं भवतीत्यर्थः ॥ भरण धारणपोषणयोः । भरणयति ॥ नन्द समृद्धौ । नन्द्यति ॥ पुरण गतौ । पुरणयति गच्छतीत्यर्थः । कुषुभ क्षेपे । कुषुभ्यति क्षिपतीत्यर्थः ॥ कुसुभ्यति स्वदेहाश्रयां परकर्त्तृकां निरोधक्रियामनुभवतीत्यर्थ इत्यन्ये ॥ इमस् ईयस् ईर्ष्यायाम् ॥ इमस्यति । ईयस्यति ॥ पुष्प सन्तोषे । पुष्प्यति ॥ गोधायति । अयं चन्द्रमतेन ॥ चित्रीयते आश्चर्यमुत्पादयति ॥

कुसुभादीनामकारलोपश्च । द्विविधाः कण्ड्वादयः स्मर्यन्ते स्वादयश्च नामानि च । तत्र स्वाद्यधिकाराद् स्वादिभ्यः प्रत्ययः । तदुक्तमुभयम् । कण्ड्वादीनि धातवश्चैव प्रातिपदिकानि च । आतश्चोभयम् । कण्डूयतीति त्वङ्घर्षणे प्रयुज्यते । अस्ति मे कण्डूरिति वेदनामात्रे ॥ अपरो धात्वस्य विकल्पे युक्तिमाह धातोरित्यधिकारात् । ककारस्य च गुणप्रतिषेधार्थस्यासञ्जनादवसीयते । धातवस्तावत्कण्ड्वादय इति कण्डूञ् हृणीङ् इति च दीर्घं गणे पठति । यदि च नित्यः प्रत्ययः स्याद् व्यस्येगित्यनेनैव दीर्घत्वस्य सिद्धत्वादनर्थकं दीर्घोच्चारणं स्यात् कृतं च तस्मादवसीयते धातुत्वमेव कण्ड्वादिषु विभावितमिति ।

तदुक्तम्— धातुःप्रकरणाद्धातुः कस्य चासञ्जनादपि ।
आह चायमिमं दीर्घं मन्ये धातुर्विभावितः ॥

स्वाद्यधिकारः किम् । कण्डूनाम्नः स्वादयो भवन्ति । नदीसंज्ञकश्चायं स्त्र्याख्यत्वात् । तेन नित्याङ् भवन्ति । रणेन कण्ड्वास्त्रिदशैः समं पुनः । मन्तुः वल्गः । पाणिनिशकटाङ्गजदिग्वस्त्रवामनमतेन स्वार्थे कण्ड्वादिभ्यः प्रत्ययः । चन्द्रादीनां मतेन करोत्यर्थे । आकृतिगणोऽयम् । तेन रैधवलप्रभृतयो द्रष्टव्याः ॥४३९॥ इति कण्ड्वादिः ॥

**भृशतृपच्चपलाण्डररेहतो हरितपण्डितकाण्डररेफतः ।**
**अभिमनःशुचिदुर्मनसोजसः सुमनसोन्मनसोत्सुकवेहतो ४४०**

कर्त्तुर्भृशादेर्हलुक् चाच्वेरित्यनेन भृशादेरच्व्यन्ताद् अभूततद्भावविषयात् कर्तृभूतात् क्यङ् भवति । तत्संनियोगेन हलो लुक् । अभृशो भृशो भवति भृशायते । तृपत् चन्द्रः समुद्रश्च । तृपायते । चपलायते । आण्डरो मूर्खो मुष्करो वा । आण्डरायते । अण्डर इत्यन्ये । रेहत् नैर्घृण्यधर्मवृत्तिर्भिक्षाभिलापधर्मवृत्तिर्वा । रहसि वर्तत इत्यन्ये । रेहायते ॥ हरितायते । पण्डितायते ।

कण्डरायते ॥ रेफत् सदोष इत्यर्थः ॥ रेफायते ॥ अभिमनायते । शुचीयते । दुर्मनायते ॥ ओजःशब्दस्तद्वति वर्त्तते । ओजायते ॥ सुमनायते ॥ उन्मनायते ॥ उत्सुकायते॥ वेहत् गर्भघातिनी । वेहायते॥ सुमनसोन्मनसेति तृतीयान्ते पदे॥४४०

शीघ्रं फेनो नीलमन्दौ च वर्चः संश्वन्मद्रौ भद्रयुक्तौ भृशादौ ॥

शीघ्रायते ॥ फेनायते ॥ नीलायते ॥ दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि ॥ वर्चायते ॥ संश्वायते सातत्येन भवति ॥ शश्वदिति शाकटायनः । मद्रायते ॥ भद्रायते ॥ ननु उदमनायसेत्यादयः प्रयोगाः कथं सिध्यन्ति ? । सूत्रादीनामेषां पाठात् । नैवम् । सङ्ग्रामयतेः सूत्रादेः स्वादिषु पाठात् । अन्येभ्योऽपि निरुपसर्गेभ्य एव क्यङादिविधिः । तेन । उदपुच्छयत समभाण्डयतेत्यादयोऽपि सिद्धाः ॥ इति भृशादिः ॥

शब्दाटाट्याकण्वमेघाभ्रकोटाः पोटासोटाशुभ्रनीहारशीकाः॥४४१

शब्दादि करोति क्यङ् वेत्यनेन शब्दादेः करोतीत्यर्थे क्यङ् वा भवति ॥ शब्दं करोति शब्दायते ॥ शब्दयति शाब्दिक इत्यपि ॥ अटाट्यायते । कण्वं पापम् । कण्वायते ॥ मेघायते तपात्यये वायुः ॥ अभ्रायते ॥ कुट कौटिल्ये । कोटयतीति कोटा स्त्री । कोटायते । पोटा स्त्री । पोटायते ॥ सोटायते ॥ शुभ्रायते शशी ॥ नीहारायते हिमर्तुः ॥ शीकायते । शीत्कारं करोतीत्यर्थः ॥४४१॥

सुदिनं दुर्दिनं युद्धं वैराटाटाट्टशीकराः ।
प्रुष्वावेगौघकण्ड्वाटा ममश्च कलहो मतः ॥४४२॥

सुदिनायते शरत् ॥ दुर्दिनायते प्रावृट् । युद्धायते सुभटः ॥
वैरायितारस्तरलाः स्वयं मत्सरिणः परे ॥
अटाटायते ॥ अट्टायते ॥ शीकरायते॥ प्रुषदाहे । क्त्वाप्रत्यये । प्रुष्वा । प्रुष्वायते(१)। वेगायते तुरगः॥ ओघायते॥ कणेर्वप्रत्यये ङकागमः॥ कण्डूञ् इत्यस्य वा वप्रत्यय ऊकारलोपश्च । कण्ड्वा कृपा । कण्ड्वायते ॥ अटायते । ममेति षष्ठ्यन्तानुकरणम् । ममायते ॥ कलहायते ॥४४२॥ इति शब्दादिः ॥

लोहितश्यामदुःखानि हर्षगर्वसुखानि च ।
मूर्च्छानिद्राकृपाधूमाः करुणा जिह्मचर्मणी ॥४४३॥

---

(१) प्रुष्वा प्रुष्वायते । मुष्वा मुष्वायत इत्यधि० ।

ङालोहितादेस्तु क्यष्। इत्यनेन लोहितादेर्गणात् क्यष् भवति ॥ अलोहितो लोहितो भवति लोहितायते। लोहितायति। यथा—

लोहितायति सहस्रमरीचौ ॥

श्यामायति। श्यामायते। यथा—श्यामायमानानि वनानि पश्यन् ॥ दुःखायति। दुःखायते ॥ हर्षायति। हर्षायते ॥ गर्वायति। गर्वायते ॥ सुखायति। सुखायते ॥ मूर्च्छायति। मूर्च्छायते ॥ निद्रायति। निद्रायते ॥ कृपायति। कृपायते ॥ धूमायति। धूमायते ॥ करुणा दया। करुणायति। करुणायते ॥ जिह्मायति। जिह्मायते ॥ चर्मायति। चर्मायते ॥

लोहितश्यामवर्जमन्येषा तद्वति प्रत्ययः। तेनादुःखवान् दुःखवान् भवतीत्यादि वाक्यम् ॥ तुग्रहणं क्यषोऽवधारणार्थम् ॥ लोहितादेरेव क्यष् नान्येभ्यः॥ आकृतिगणोऽयम् ॥ तेन। अमृतं यस्य विषायति। इत्यादयः सिद्धाः ॥ ४४३ ॥

इति लोहितादिः (१) ॥

सुखदुःखास्रकृच्छ्राणि प्रतीपः करुणस्तथा।
कृपा चालीकतृप्रास्रकृपणाः सोढसंयुताः ॥ ४४४ ॥

सुखादिर्भुङ्क्ते इत्यनेन सुखादेर्गणाद् भुङ्क्ते वेदयतेऽनुभवतीत्यर्थे क्यङ् भवति ॥ सुखं वेदयते सुखायते ॥ दुःखायते ॥ अस्यतेऽनेन अस्रम्। अश्रु(२) रुधिरं वा। अस्रायते॥ कृच्छ्रायते ॥ प्रतीपं प्रतिकूलम्। प्रतीपायते ॥ करुणं शोचनम्। करुणायते ॥ कृपायते ॥ अलीकम् अनृतम्। अलीकायते ॥ तृप्रं(३) दुःखम्। तृप्रायते ॥ अस्रमेवास्रम्। आस्रायते॥ कृपणा दैन्यम्। कृपणायते ॥ सोढं सहनम् अभिभवो वा। सोढायते ॥ सुखादीन्येके लोहितादिष्विच्छन्ति। तेषां मते। असुखः सुखी भवति सुखायति॥ सुखायते ॥४४४॥ इति सुखादिः ॥

ग्रहस्निहौ वदं दीधीभणौ रणपठौ कुचम्।
लिखं च कम्पमन्दोलिमुम्भिं लोचं मथिं विदुः ॥४४५॥

---

(१) यत्तु गणरत्नमहोदधौ लोहितश्यामदुःखानि० इति पठित्वा श्यामादिभ्योऽपि क्यपि पद्यद्वयमुदाहृतं तत्तूक्तभाष्यवार्त्तिकविरुद्धम्। तस्मात्तेभ्यः क्यङेवेति ध्येयमिति के० ॥ (२) अस्यतेऽस्तु अस्रं च। अश्नुते आकण्ठ अश्रु वाप्यो नानार्थे। इत्यधि०। (३) तृप्रं दुःखं चन्द्रं समुद्रं वा तृप्रायते इति०।

क्तेरग्रहादेरित्यनेन ग्रहादिवर्जितात्परस्य क्तेरिड् न भवति ॥ निगृहीतिः ॥ अपस्निहितिः ॥ उदितिः ॥ दीधितिः ॥ भणितिः ॥ रणितिः ॥ निपठितिः ॥ निकुचितिः ॥ लिखितिः । विकस्मितिः ॥ अन्दोलितिः ॥ उम्भितिः ॥ आलोम्भितिः । मथितिः ॥ ४४५ ॥ इति ग्रहादिः ॥

वारतर्परगराः शरभेरे कन्दरः करभमण्डरकाराः ।
रघ्वरं कपरिकाङ्कुरिरेखा रोमकर्मपुरुषासुररिक्षाः ॥४४६॥

वारादेर्वेत्यनेन रश्रुतेर्लश्रुतिर्वा भवति ॥ वारः क्रियाभ्यावृत्तिः । वालः केशः ॥ तर्परः पशूनां कण्ठघण्टा । तल्पलो गजपृष्ठैकदेशः ॥ गरो विषम् । गलः प्राण्यङ्गम् ॥ शरभोऽष्टापदः। शलभः पतङ्गः ॥ इराऽमृतम् । इला भूमिः ॥ कन्दरो गिरिगुहा । कन्दलः कन्दविशेषः ॥ करभ उष्ट्रः । कलभो बालहस्ती ॥ मण्डरो जीवविशेषः । मण्डलं बिम्बं सङ्घातो वा ॥ कारो रक्षानिर्वेशः। कालो वर्णः ॥ रघुः राजा । लघुः अपचितपरिमाणः ॥ अरम् अत्यर्थम् । अलं पर्य्याप्तम् ॥ एतेषामर्थभेदे लत्वं रूढिवशात् । भोजस्तु सामान्येनाह ॥ कपरिका । कपलिका ॥ अङ्कुरिः । अङ्कुलिः ॥ रेखा । लेखा ॥ रोम । लोम ॥ कर्म । कलम ॥ पुरुषः । पुलुषः ॥ असुरः । असुलः ॥ रिक्षा । लिक्षा ॥४४६॥

पांसुरकरीरमूरं तिर्पिरिकातरुणशुक्रपर्य्यङ्काः ।
परियोगमुकुरसरिरं रोहितपरिघौ सरोहिण्यौ ॥४४७॥

पांसुरः । पांसुलः ॥ करीरः । कलीलः ॥ मूरम् । मूलम् ॥ तिर्पिरिका । तिलिपलिका ॥ तिर्परीकमिति वामनः ॥ तरुणः । तलुनः ॥ शुक्रः । शुक्लः ॥ पर्य्यङ्कः । पल्यङ्कः ॥ परियोगः । पलियोगः ॥ मुकुरम् । मुकुलम् ॥ सरिरम् । सलिलम् ॥ रोहितम् । लोहितम् ॥ परिघः । पलिघः ॥ रोहिणी । लोहिनी ॥ आकृतिगणोऽयम् । तेनान्येषामपि लत्वं भवति ॥४४७॥ इति वारादिः (१) ॥

सम्मादितः पदिं सदिं विदिं नहिं तृषिं प्रुषिम् ।
इणं वृतिं यतिं श्रुवं स्नुवं भरिं विदेन्धिना ॥४४८॥

---

(१) ऋफिडादीनां डस्य लः । ऋफिडः । तृफिडः । लृतकः । ऋतकः । कपरिका । कपलिका ।इत्यधिकम् ।

